Kashmir Series of Texts and Studies.

No. XXII.



THE

# ĪSHVARA-PRATYABHIJÑĀ VIMARSHINĪ



OF

UTPALADEVA

**With Commentary by Abhinava-Gupta.**

Edited with notes by

MAHĀMAHOPĀDHYĀYA

PAṆḌIT MUKUND RĀM SHĀSTRĪ,

Officer-in-Charge Research Department,

JAMMU AND KASHMIR STATE

SRINAGAR.

Published under the Authority of the Government of

His Highness Lieut.-General Mahārāja

Sir PRATĀP SINGH SĀHIB BAHĀDUR,

G. C. S. I., G. C. I. E., K. G. C. B. E., LL. D.,

MAHĀRĀJA OF JAMMU AND KASHMIR STATE.

**Volume I.**




BOMBAY:

PRINTED AT THE 'NIRNAYA-SAGAR' PRESS.

1918.



काश्मीर-संस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः २२

# ईश्वरप्रत्यभिज्ञा ।

श्रीमन्महामाहेश्वराचार्यवर्य-उत्पलदेवपादविरचिता ।

श्रीमन्महामाहेश्वराचार्यवर्य-श्रीमदभिनवगुप्तकृतविमर्शिन्याख्यटीकोपेता ।

श्रीभारतधर्ममार्तण्ड-कश्मीरमहाराज-श्रीप्रतापसिंहवरप्रतिष्ठापिते
प्रत्नविद्याप्रकाश-(रिसर्च)कार्यालये
तदध्यक्ष-महामहोपाध्याय-पण्डित-मुकुन्दराम-शास्त्रिणा
उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन
संगृह्य, संशोधन-पर्यायाङ्कन-विवरणादिसंस्करणोत्तरं
पाश्चात्यविद्वत्परिषत्संमताधुनिकसुगमशुद्धरीत्युपन्यासादिसंस्कारैः परिष्कृत्य


मुम्बय्यां
निर्णयसागराख्यमुद्रणालये मुद्रापयित्वा प्राकाश्यमुपनीतः ।


(प्रथमो भागः ।)





संवत् १९७५ ख्रैस्ताब्दः १९१८

श्रीमच्छ्रीकण्ठनाथप्रभृतिगुरुवरादिष्टसम्प्रीतिमार्गो
लब्ध्वा यत्रैव सम्यक्पटिमनि घटनामीश्वराद्वैतवादः ।
कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन्सर्वदेश्यान्-
देशेऽप्यस्मिन्नदृष्टो घुसृणविसरवत्सत्तान्मुदे सज्जनानाम् ॥१॥

तरत तरसा संसाराब्धिं विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तःसमुत्प्लवदायिनम् ॥ २ ॥

# PREFACE.



The Kashmir Durbar as also those interested in the Philosophy of the sacred soil of Kashyapa are to be complimented on the appearance in public, for the first time, of Volume I of the Ishvara Pratyabhijñâ by Utpala Deva, together with the commentary of Abhinava Gupta, containing, as the text does, much of the best Indian thought in support of the rationalistic basis of the Advaita Shaivaism of Kashmir. Since it fell from the lips of Utpala, the famous pupil of Somânanda who is traditionally believed to be the founder of Pratyabhijñâ Shâstra or 'Philosophy proper of the Trika', how many clouds of mystery has it cleared away, how many troubled hearts has it tranquillised, and how many seekers after truth have found the way, across the ocean of miseries, to the home of eternal bliss by the recognition of the true self!

II. The MSS., on which this edition of the Ishvara Pratyabhijñâ Vimarshini, Volume I, has mainly been based, are the following:—

(क)—Belonging to Pandit Govardhana of this Department. It contains 23 leaves of old Kashmiri paper. Of this a copy was made in this office.

(ख)—Belonging to M. M. Paṇḍit Mukund Râm Shâstrì, late of this Department.

(ग)—Belonging to Maheshvara Râjânaka, also of this Department. It is about 150 years old and consists of 175 leaves of very old Kashmiri paper.

(घ)—Belonging to the Library of this Department. It contains 390 leaves of Kashmiri paper.

III. All these manuscripts are written in Shâradâ characters. They are generally correct and contain some marginal notes with a few variant readings here and there. Of these, the last three were intelligently made use of in collating the first therewith.

The owners of these MSS., all of whom are connected with this Department in one way or the other, are specially to be thanked for their kindness in lending the MSS., as also for the satisfactory discharge of their respective duties. No less share of credit is due to other employees of this Department, who have helped in the publication of this book in the latter way only.

IV. No doubt, the highly abstruse and deeply philosophical contents of this book urge on the necessity of an introduction being written out on it, in order to give the foretaste of the subject-matter and to acquaint the reader with the underlying ideas of the book. But partly, in view of the keen interest the sister works of the Ishvara Pratyabhijña have awakened in the educated public, and of the consequent demand for this book from all quarters in India and abroad and partly due to some more pressing duties devolving upon me, the writing of an introduction on the Ishvara Pratyabhijñâ Vimarshini, on the lines of modern scholarship and research, has perforce been postponed for the time being. This I intend to do as soon as I see the work on its way to completion.

Srinagar, Kashmir.
*The 28th March 1919.*

MADHUSUDAN KAUL,
SHÂSTRÎ, M. A., M. O. L.,
Superintendent, Research Department,
Jammu and Kashmir State.

ओं नमः संविद्वपुषे शिवाय ।

अथ

# ईश्वरप्रत्यभिज्ञा ।

## महामाहेश्वराचार्यवर्यश्रीमदुत्पलदेवाचार्यविरचिता ।

## श्रीमदभिनवगुप्ताचार्यवर्यविरचित-
## विमर्शिन्याख्यव्याख्योपेता ।

निराशंसात्पूर्णादहमिति पुरा भासयति यद्-
द्विशाखामाशास्ते तदनु च विभक्तुं निजकलाम् ।
स्वरूपादुन्मेषप्रसरणनिमेषस्थितिजुषस्-
तदद्वैतं वन्दे परमशिवशक्त्यात्म निखिलम् ॥ १ ॥

(१) अत्रायमाशयः । इह खलु चिन्मात्रस्वभावः परमशिव एव पूर्णत्वात् निराशंसो निराकाङ्क्षोऽपि स्वस्वातन्त्र्यमाहात्म्यात् बहिरुल्लिलसिषया परानन्दचमत्कारतारतम्येन पुरा प्रथमम् अहमिति-परामर्शतया शक्तिदशामधिशयानः प्रस्फुरेत् प्रस्फुरति इति संभाव्यते । अनन्तरं च अहम्, इदम्-इति परामर्शरूपशाखाद्वयमवभासयेत् । तत्र च शुद्धचिन्मात्राधिकरण एव अहमित्यंशे यदा परमेश्वर इदमंशमनुच्छासयति, तदा तस्य प्रोन्मीलितमात्रचित्रकल्पभावराशिविषयत्वेनास्फुटत्वात् इच्छाप्रधानं सदाशिवतत्त्वम्, अहमिदम्-इति भावराशौ पुनः स्फुटीभूते तदधिकरण एव इदमंशे यदा अहमंशं निक्षिपति अभि-

पं॰ १ ग॰ पु॰ निराभासादिति पाठः ।

पं॰ २ घ॰ पु॰ विभक्तुमिति, विभागेन भासयितुमिति पर्यायोपेतः पाठः ।

**श्रीत्रैयम्बकसद्वंशमध्यमुक्तामयस्थितेः।**
**श्रीसोमानन्दनाथस्य विज्ञानप्रतिबिम्बकम्॥२॥**

---

निविशते, तदा ज्ञानशक्तिप्रधानमीश्वरतत्त्वम् इदमहमिति, अत एव च अहंविमर्शस्य अविशेषेऽपि अत्र इदमंशस्य अस्फुटत्व-स्फुटत्वाभ्याम् अयं विशेषः। यदा पुनः प्ररूढभेदभावराशिगतेदमंशस्फुरणे चिन्मात्रगतत्वेन अहमंशः समुल्लसति, तदा द्वैतवादिनामिव ईश्वरस्य यः समधृततुलापुट-न्यायेन अहमिति परामर्शः तत् क्रियाशक्तिप्रधानं विद्यातत्त्वमिति वि-भागः। यद्यपि परमशिवस्यैव इदमेकघनमैश्वर्यं तथापि तस्य यथा बहिरौन्मुख्येन व्यापारः शक्तितत्त्वम्। तथा सदाशिवेश्वरयोरपि विद्यातत्त्वम्। इत्येवं–प्रकारेण निराशंसतया अहन्तेदन्ताप्रतिभास-विरहेऽपि विसर्गशक्त्यौन्मुख्येन उन्मेषनिमेषात्मानौ प्रसरस्थिती युगपतः अवस्थातारतम्योल्लासनेन चमत्कुर्वतः, तत्र उन्मेषेण स्वान्तर्गत-शक्तिभागस्य शिवभागात् पृथग्भासनेन प्रसरणं शिवादिक्षित्य-न्ततत्त्वभावेन संचारः, निमेषेण पुनः शक्तिभागस्य स्वान्तःसंयोजनेन अवस्थितिः। एवं-भूतात् चिदानन्दमयात् स्वरूपात् अव्यतिरिक्ततया पूर्णाहन्तोल्लासनपूर्वमवभास्यां निजकलां स्वस्वातन्त्र्यशक्तिं विभक्तुं विविक्तया भासयितुं यत् शक्तिसामरस्यं यामलस्वरूपं सदाशिवेश्वरादि-तत्त्वदशामाशास्ते अर्थात् स्वस्वातन्त्र्यमहिम्नैव उपादानादिसामग्रीनिरपेक्षं प्रकाशमात्रसारतया स्वस्मादविभिन्नमपि भिन्नमिव दर्पणनगरवत् विश्व-वैचित्र्यचित्रमुन्मीलयति, तत् द्विधा इतं द्वीतं तदेव द्वैतं तदभाववत् अद्वैतम्,वस्तुतः अहन्तेदन्तादिज्ञानरहितम्। अथवा द्वाभ्यामितं द्वीतं तत्र भवं द्वैतं संशयविपर्ययादिज्ञानं तद्वर्जितं, निखिलं विश्वनिर्भरतया परिपूर्णं देहादिपरिमितप्रमातृभावकलङ्कातङ्कन्यक्करणपूर्वं वन्दे समाविशामि इति।

(२) शैवागमरहस्यं हि पुरा मुनीनां मुखेष्वेव अनुग्रहाद्यर्थक्रिया-कारि अभूत्। तदेव बहुकालं श्लाघ्यभिचरितसपर्याप्रसादितेभ्यो मुनि-वरेभ्यः सतीर्थान्तरहृदयेषु उपसंक्रान्तस्वशाक्तवीर्यं सच्छिष्यप्रशिष्य-प्रचयप्रवृत्ति, कलिकालुष्यात् मुनिषु तेषु कलापिग्रामप्रमुखदुर्गमपार्वत-स्थलीरुपयातेषु सत्सु व्युदच्छिद्यत। तदनन्तरं कदाचित् कैलासाद्रौ लोकानुजिघृक्षया अवतीर्य पर्यटन् श्रीकण्ठमूर्तिः शिवः दुर्वाससं मुनिं

अनुत्तरानन्यसाक्षिपुमर्थोपायमभ्यधात् ।
ईश्वरप्रत्यभिज्ञाख्यं यः शास्त्रं यत्सुनिर्मलम् ॥३॥

तत्प्रशिष्यः करोम्येतां तत्सूत्रविवृतिं लघुम् ।
बुद्ध्वाभिनवगुप्तोऽहं श्रीमल्लक्ष्मणगुप्ततः ॥ ४ ॥

वृत्त्या तात्पर्यं टीकया तद्विचारः
सूत्रेष्वेतेषु ग्रन्थकारेण दृब्धम् ।
तस्मात्सूत्रार्थं मन्दबुद्धीन्प्रतीत्थं
सम्यग्व्याख्यास्ये प्रत्यभिज्ञाविवृत्त्यै ॥ ५ ॥

---

शैवागमरहस्यं लोके पुनः प्रचारयितुमन्वशात् । तदादेशात् स मुनिः निखिलागमोपनिषत्सारभूतस्य षडर्धक्रमविज्ञानभूतशैवागमस्य व्युच्छिन्नीभूतस्य प्रचाराय त्र्यम्बकादित्याभिख्यं मानसं पुत्रं संजनयामास । तस्य त्र्यम्बकादित्यस्य सद्वंशः सदन्वय एव जातिवेणुः तन्मध्ये मुक्ता निरस्ता आमयस्थितिः भेदावभासनमयी स्थितिः, मुक्तारत्नमयी च स्थितिर्यस्य तथाभूतस्य श्रीसोमानन्दनाथस्य यत् विज्ञानं तदुपज्ञात्म शिवदृष्टिनामकं शास्त्रं, तस्य प्रतिबिम्बकं समानाभिधेयविषयप्रयोजनम् । अनुत्तरानन्यसाक्षीति भेदवादिभिरभ्युपगतमोक्षाभासविलक्षणं स्वसंवित्साक्षिकम्, पुमर्थोपायं मोक्षोपायम्, ईश्वरप्रत्यभिज्ञाख्यं यत् सुनिर्मलं शासनं, य उत्पलदेवाचार्यः अभ्यधात्, तस्यैव शिष्यात् श्रीलक्ष्मणगुप्तात् उक्तशास्त्रं विज्ञाय, तत्प्रशिष्योऽहमभिनवगुप्तः तत्प्रोक्तेश्वरप्रत्यभिज्ञासूत्रवृत्तिं लघ्वीं करोमीति ।

१ शास्त्रार्थस्य संवृतस्य आच्छादितस्येव शङ्क्यमानपरमतपांसुराशिप्रायावरणस्यापसारणेनापगतावरणत्वं विवरणं विवृतिः, तत्प्रतिपादकत्वात् ग्रन्थोऽपि स एव । सूत्रस्य स्वाभिधेये वर्तनं वृत्तिः, तत्प्रतिपादकत्वात् सूत्रार्थोन्नेदनो ग्रन्थोऽपि वृत्तिशब्देन निर्दिश्यते । टीक्यते अवगम्यते हृदयभूमिसंचरणचातुर्ययोग्योऽर्थः क्रियते यया सा टीका । अत्र एक एव शास्त्रकारः श्रीमान् उत्पलाचार्यः, अभिनवगुप्तपरमेष्ठिगुरोः श्री-

सर्वत्राल्पमतौ यद्वा कुत्रापि सुमहाधियि ।
न वान्यत्रापि तु स्वात्मन्येषा स्यादुपकारिणी॥६॥

ग्रन्थकारः अपरोक्षात्मनि दृष्टशौक्तिकां परमेश्वरतन्मयतां परत्र संचिक्रमयिषुः, स्वता-

---

सोमानन्दस्य पादप्रसादापसारितहृदयसंकोचो विकस्वरस्वहृत्कमलपरिमलपविभ्रितदिगन्तः सूत्र-वृत्ति-टीका ईश्वरप्रत्यभिज्ञासिद्धये कृतवान् । तत्र सूत्र-(कारिका)कारभूमिकावस्थितः कथंचित् इत्यादिना महेश्वरं प्रति प्रह्वं स्वात्मानं परामृशन्, तद्वाक्यपठनपुरःसरीभावेन वृत्तेरवश्यंभावितां पश्यन् पुनर्वृत्तिकारपदावस्थितः, प्रवृत्त्यन्तरेण (टीकया) च परमेश्वरप्रह्वतां स्वात्मनि सततवाहिनीमपि परामृशन् सूत्रकार एव एतद्भूमिकापन्नो वर्तते इति दर्श्यते ।

४ सर्वसामान्यजने मन्दमतौ संशयविपर्ययाद्यज्ञत्वनिरासनेन प्रबुद्धे स्वभ्यस्तस्वदृढनिश्चयतादिविधानात् स्वात्मन्यपि एतद्द्वारेणैव समावेशवैवश्यापादनात् उपकृतिरनिर्गलप्रसरा अवश्यंभाविनी अत्र प्रसिद्धा ।

५ शक्तिपदेनात्र संदर्भ्यमाणेश्वरप्रत्यभिज्ञाग्रन्थे स्वातन्त्र्यवादोन्मीलनमभिव्यज्यते । येन विवर्तपरिणामप्रभृतिपक्षान्तराणि प्रतिक्षिप्तानि स्युः । तथाहि विवर्तो नाम असत्यरूपनिर्भासात्मा इत्युक्तम्, निर्भासते च असत्यं च—इति कथम्? इति न चिन्तितम् । परिणामे तु रूपान्तरं तिरोभवति रूपान्तरं च प्रादुर्भवति इत्युक्तम् । प्रकाशस्य तु रूपान्तराभावात् तत्तिरोधाने आन्ध्यं स्यात् अप्रकाशश्च प्रादुर्भवन् नैव प्रकाशेत इत्युभयथापि सुप्तं जगत् स्यात्—इति न पर्यालोचितम् । प्रतिबिम्बवादे च स्वच्छतामात्रं संवेदनस्य, न स्वातन्त्र्यम्—इति तत्समर्पकवस्त्वन्तरपर्येषणा कर्तव्या । अविद्या च अनिर्वाच्या वैचित्र्यं च आधत्ते इति व्याहतम् । पारमेश्वरी शक्तिरेव इयम् इति हृदयावर्जकः क्रमः । तस्मात् अनपह्नवनीयः प्रकाशविमर्शात्मा संवित्स्वभावः परमशिवो भगवान्

---

पं० ३ ख० ग० घ० पु० अपरोक्षात्मदृष्टेति समस्तः पाठः ।

पं० ४ घ० पु० संचिक्रामयिषुरिति पाठः ।

दात्म्यसमर्पणपूर्वम् ६अविघ्नेन तत्सम्पत्तिं मन्यमानः, परमेश्वरोत्कर्षप्रह्वतापरामर्शशेषतया परमेश्वरतादात्म्ययोग्यतापादनबुद्ध्या प्रयोजनम् आसूत्रयति

कथंचिदासाद्य महेश्वरस्य
८दास्यं जनस्याप्युपकारमिच्छन् ।

---

स्वातन्त्र्यादेव रुद्रादि-स्थावरान्तप्रमातृरूपतया नीलसुखादिप्रमेयरूपतया च अनतिरिक्तयापि अतिरिक्तया इव स्वरूपानाच्छादिकया संविद्रूपनान्तरीयकस्वातन्त्र्यमहिम्ना प्रकाशते इति स्वातन्त्र्यवादः प्रोन्मीलितः ।

६ विघ्नन्ति विलुम्पन्ति कर्तव्यम् इति विघ्नाः, आध्यात्मिकादयोऽनवधानदोषादयः त्रिविधोपघाताः, तदधिष्ठातारश्च देवताविशेषाः; ते च प्रक्षीणमोहस्यापि मायासंस्काराविनिवृत्तशरीरप्राणप्रभृतिगतप्रमातृभावस्य प्रत्यगात्मनः प्रभवेयुरपि इच्छाविघाताय, विशेषतः समस्तलोकमभ्युद्धर्तुं परिगृहीतोद्यमस्य । लोकगतधर्माधर्मपरिस्पन्दने तदधिष्ठात्रा च देवताशब्देन संसारपरिरक्षणपरिगृहीतक्षणेन अवश्यं विघ्नसङ्घसंघट्टना क्रियते । तदसौ विघ्नसंघातो यदि परं तादृशालौकिकोद्योगयोजकेन भगवतैव अनुग्रहात्मकचरमनिजकृत्यनिर्वाहकारिणा विहन्तुं शक्यते इति प्रत्यगात्मनि शरीरादौ तद्रूपतातिरस्कारेण अवनतिरूपेण प्रथमसमये परमेश्वरस्वरूपोत्कर्षणपरामर्शात्मा समावेशः स्वीकार्यः । तत्र हि सति विश्वमपि स्वात्मभूतमभिन्नस्वतन्त्रसंविन्मात्रपरमार्थं भवति—इति कः कस्य कुत्र विघ्नः! अनन्तरं तु ग्रन्थकरणकाले यद्यपि प्रत्यगात्मप्राधान्यमेवानुसंधेयम् अन्यथा वैखरीपर्यन्तप्राप्तिनिर्वाह्यशास्त्रविरचनानुपपत्तेः, तथापि तत्समावेशसंस्कारमहौजसा जाज्वल्यमाननिजौजःसमुज्जृम्भितभेदप्रह्वतया न प्रभवन्ति विघ्ना इति ।

७ प्रकर्षेण अन्यातिरस्कारेण ह्वयति शब्दयति ताद्रूप्यं परामृशति तद्गुणानुप्रवेशस्पर्धावान् इव इति प्रह्वः ।

८ दीयते अस्मै स्वामिना सर्वं यथाभिलषितमिति दासः, तस्य भावः

समस्तसंपत्समवाप्तिहेतुं
तत्प्रत्यभिज्ञामुपपादयामि ॥ १ ॥

इह परमेश्वरं प्रति या इयं कायवाङ्मनसां तदेकविषयतानियोजनालक्षणा प्रह्वता सा नमस्कारस्य अर्थः । सा च तथा कर्तुम् उचिता प्रामाणिकस्य भवति, यदि सर्वतो नमस्करणीयस्य उत्कर्षं पश्येत् । अन्यथा युक्तिम् अपरामृशतः अपरमार्थरूपेऽपि नमस्कारोद्यतस्य सांसारिकपशुजनमध्यपातित्वमेव । यथोक्तम्

'न विन्दन्ति परं देवं विद्यारागेण रञ्जिताः ।'

---

दास्यं, महाफलं तद्दास्यमिति ईश्वरस्य उत्कर्षः, दासत्वादेव ईश्वरे लब्धे पुनः ईश्वरपदं माहेश्वर्यपर्यवसितम् ।

९ प्रतीपमात्माभिमुख्येन ज्ञानं प्रकाशः प्रत्यभिज्ञा ।

१० न च मायाधिकारिणि ब्रह्मविष्ण्वादौ उचितः समावेश इति परमग्रहणं कृतम् ।

११ बौद्धसांख्यादीनां बुद्धिपुरुषतत्त्वादौ इव, मायाधिकारिणि ब्रह्मविष्ण्वादौ वा ।

---

पं० ६ घ० पु० प्राणामिकस्य प्रणामकर्तुरिति पर्यायोपेतः, तदा भवति इति तदा-शब्दाधिकश्च पाठः । पुस्तकान्तरेषु प्रामाणिकस्य प्रेक्षापूर्वकारिणो युक्तिज्ञस्येति पर्याययुतो वर्तमानपाठ उपन्यस्तः ।

पं० ११ घ० पु० न विदन्ति परं तत्त्वमिति पाठः।

इति । तावति हि मायीयाशुद्धविद्यारागकलासंचार्यमाणस्य पशुत्वमेव । इतरापेक्षया[12] तु कतिपयाध्वोत्तीर्णतया समुत्कर्षोऽपि स्यात् । तदुक्तम्

'कस्य नाम करणैरकृत्रिमैः[13]
पश्यतस्तव विभूतिमक्षताम् ।
विभ्रमादवरतोऽपि जायते
त्वां व्युदस्य वरद स्तुतिस्पृहा ॥'

इति श्रीमद्विद्यापतिना । एतच्च आगमकाण्डे निरूपयिष्यामः । तस्मात् निखिलोत्कर्षपरामर्शनमपि तत्र स्वीकार्यम् । यद्यपि आयातदृढेश्वरशक्तिपातस्य स्वयमेवेयमियती परमशिवभूमिरभ्येति हृदयगोचरम्, न तु अत्र स्वात्मीयः पुरुषकारः कोऽपि निर्वहति, सर्वस्य तस्य मायामयत्वेनान्धतमसप्रख्यस्यामायीयं शुद्धप्रकाशं स्वप्रतिद्वन्द्विनं प्रति उपायतानु-

१२ यथा महत्तत्त्वाद्यात्माभिमानिनां बौद्धादीनामपेक्षया सांख्यादीनां समुत्कर्षस्तथा तेषामपि इत्याह इतरेति ।

१३ अकृत्रिमैर्मरीचिमयैः, अक्षतां सदोदिताम्, अवरतः अवरस्मिन् महादावित्यत्र सार्वविभक्तिकः तसिल् ।

पं० ४ ख० पु० यदुक्तमिति पाठः ।

पं० १४ घ० आत्मीयपुरुषकार इति विशिष्टः समस्तश्च पाठः ।

पपत्तेः, तथापि तदेव तथाविधं रूपं प्रख्योपा[१४]-
ख्याक्रमेण स्वात्मपरावभासविषयभावजिगमि-
षया निःशेषोत्कर्षविशेषाभिधायि-जयत्यादिश-
ब्दानुवेधेन परामर्शनीयम्, इति नमस्कारे ज-
यत्यर्थ आक्षेप्यः। जयपदोदीरणेऽपि तादृशा-
समुत्कर्षातिशयशालिनि स्वात्मानमप्रह्वीकुर्वा-
णस्य तटस्थस्य परमनात्मोपकारित्वम्—इति
समुत्कर्षविशेषाक्षिप्त एव नमस्कारोऽवश्य-
मभ्यन्तरीकार्यः, इत्यनया युक्त्या जय-न-
मस्कारैकतरप्रक्रमे अन्यतरस्य अर्थाक्षिप्तता
अवश्यमङ्गीकर्तव्या[१५]। वन्दन-नमन-स्मरण-
प्रध्यानप्रभृतीनामपि नमस्कार-जयत्यर्थ-
मात्रपरमार्थत्वात् इयमेव वर्तनी। अत्रायं

१४ स्वप्रतिपत्तिः प्रख्या, परप्रतिबोधनमुपाख्या; तत्र प्रख्यया स्वा-
त्मावभासविषयीभावः, अन्तःस्फुरितं हि स्वात्मनैव विषयीकर्तुं शक्यते।
उपाख्यया तु परावभासनविषयीभावः, स्फुटमुच्चारितस्य शब्दस्यार्थो हि
परेणापि ज्ञानविषयीक्रियते इत्येवं क्रमेण निखिलोत्कर्षं परमशिवरूपं
निराभासमपि स्वातन्त्र्यामुक्तम्-(१-५-१६)इति भाविनीत्या स्वपराव-
भास्यताप्राप्त्यर्थं समावेशोपदेशादौ परामर्शनीयम्।

१५ प्रह्वता च उत्कर्षणं च तथा प्रकाशपरामर्शनरूपं मानसे संवेदने
तत्साररूपे च वाक्तत्वे विश्रान्तम्।

पं० ३ ख० पु० समुत्कर्षातिशायिनि इति पाठः।

पुनर्ग्रन्थकृता तादृक् प्रक्रम आश्रितः, यत्र द्वयम[16]पि इदं स्वशब्दपरामृष्टमेव। एतच्च पदार्थव्याख्यानावसर एव प्रकटीभविष्यति। स्वशब्दपरामर्शश्च सर्वजनहितत्वाद्युक्तियुक्तः, स हि सर्वस्यैव झटिति हृदयंगमः, अर्थाक्षिप्तस्तु कतिचिदेव प्रति स्वप्रतिभोदितवाक्तत्त्वावमर्शासंभवात्, वाक्तत्त्वावमर्शशून्यस्य च प्रकाशस्याप्रकाशकल्पत्वात्। एतच्च अ[17]ग्रे स्फुटीभविष्यति। तदनेन अभिप्रायेण प्रसिद्धजय-नमःप्रभृतिशब्दशय्यानाश्लेषेण इमां सरणिम् अनुसरति स्म ग्रन्थकारः।

इ[18]ह यद्यत्किंचित् स्फुरति तत्तद्वक्ष्यमाणेश्वररूपस्वात्मप्रथामात्रं, तत्र तु उपायोपेयभावप्रभृतिः कार्यकारणभावोऽपि यथाप्रकाशं

---

१६ नमनोत्कर्षरूपम्।

१७ स्वभावमवभासस्य (१-५-११) इत्यत्र।

१८ इदानीं कथंचित् इति सौत्रमंशं परामृशन् तदर्थसमर्थनाय द्विविधं कार्यकारणभावं विवृणोति इहेत्यादिना।

---

पं० ५ ग० पु० सर्वस्य झटिति इति पाठः।

पं० १२ क० पु० किंचित् स्फुरति वक्ष्यमाणेति तत्तदिति वाक्यहीनः, ग० घ० पु० किंचन इति च पाठः।

परमार्थभूत एव, प्रकाशस्य अनपह्नवनीयत्वात् । यदाह भट्टदिवाकरवत्सो विवेकाञ्जने

'प्रकाशश्चैष भावानाम्.................. ।'

इत्यादि

'........................न शापोक्त्या विलीयते ।'

इत्यन्तम् । तत्र तु कार्यकारणभावेऽपि क्वचित् परिपूर्णस्वातन्त्र्यलक्षणमाहेश्वर्यनान्तरीयकताक्रोडीकृतानन्तशक्तिचक्रचुम्बितभावभावितप्रथान्तरव्यवधानं चकास्ति; स तु मायीयत्वेन व्यवस्थापयिष्यते, जडचेतनाद्यवान्तरभेदशतसंभिन्नश्च असौ, तत्कृतश्च सर्वोऽयं निष्पाद्य-निष्पादकभावज्ञाप्य-ज्ञापकभावावभासो लोकव्यवहाररूपः । यत्र तु शुद्धप्रथा-

१९ न अन्तरं नान्तरम् अविनाभावः, तत्र भवं नान्तरीयं तदेव नान्तरीयकं तस्य भावो नान्तरीयकता व्याप्तिः, तया क्रोडीकृतेति ।

२० भावैः बीजादिभिः भावितं प्रकटीकृतं यत् प्रथान्तरं शुद्धप्रकाशव्यतिरेकेण भासमानमङ्कुरादि तेन व्यवधानं स्वात्मास्फुरणं चकास्ति अन्यथा सर्वत्र प्रकाशपरमार्थत्वे अस्य इदं कारणं कार्यं वा इति विभागो न युज्येत इत्यर्थः ।

पं० १ ख० पु० प्रकाशमानस्य इति पाठः ।

पं० २ ग० पु० यदाह स इति पाठः ।

पं० ३ क० ग० प्रकाशश्चैव इति पाठः ।

पं० १३ ख० पु० शुद्धस्वप्रथात्मेति पाठः ।

त्मकानुत्तरशक्तिशालिनिरर्गलस्वात्मप्रकाश एव मायीयप्रथान्तरव्यवधानवन्ध्यो निबन्धनं, तत्र तस्यैव भगवतः कारणत्वम् । एष च अनुग्रह-[21] लक्षणोऽन्त्यः पञ्चमः पारमेश्वरः कृत्यविशेषः परपुरुषार्थप्रापकः, तन्निबन्धनत्वात् परमार्थमोक्षस्य । अन्यत्रत्यो[22] हि अपवर्गः कुतश्चित् मुक्तिः, न सर्वत इति निःश्रेयसाभास इति वक्ष्यामः । स चायं[23] द्वितीयः कार्यकारणभावो लौकि-

---

२१ सृष्टि-स्थिति-संहार-पिधानानुग्रहलक्षणानि पञ्चकृत्यानि । तत्र पिधानं नाम संस्कारमात्रतया स्थितस्यापि विलीनीकरणम्, अनुग्रहः स्वात्मतादात्म्यतयावस्थापनमिति ।

२२ बौद्धाद्यागमप्रसिद्धो बुद्धितत्त्वादावस्थित्यात्मापवर्गो मोक्षाभास एव सर्वतो बन्धस्याविगलनात् । तदुक्तम्

'बुद्धितत्त्वे स्थिता बौद्धा गुणेष्वेवार्हताः स्थिताः ।
स्थिता वेदविदः पुंसि ह्यव्यक्ते पाञ्चरात्रकाः ॥'

इति ।

'सांख्यवेदादिसंसिद्धाञ्श्रीकण्ठस्तदहर्मुखे ।
सृजत्येव पुनस्तेन न सम्यङ्मुक्तिरीदृशी ॥'

इति च ।

२३ अस्यैव कार्यकारणभावस्य कथंचिदिति-शब्दप्रवृत्तिनिमित्तत्वं परामृशति स च अयमिति । मायीयो हि कार्यकारणभावः स्वप्नगतकुलालघटन्यायेन स्वातन्त्र्यसारतया भासनरूपसंविद्विशिष्टपारमार्थिककर्तृत्वात्मककार्यकारणभावभित्तिविश्रान्तो मायामये लोके हृदयङ्गमत्वात् प्रसिद्धः स तु यत्र नोपपद्यते तत्र स पारमार्थिक एव इति ।

कान्वयव्यतिरेकसिद्धप्रसिद्धकार्यकारणभाव-
विलक्षणत्वात् स्फुटेन रूपेणासंचेत्यमानः का-
दाचित्कवस्तुसद्भावावभासोन्नीयमानपरमार्थः
अतिदुर्घट[२४]कारित्वलक्षणैश्वर्यविजृम्भाभाविता-
द्भुतभावः प्रथमकोटिसंभावनाशून्यः कालि-
काकारस्वप्रकाशावरणनिराकरणमनोरथशतदु-
ष्प्राप इत्येवं प्रकारः थमा द्योतकनिपातसहि-
तेन निरूपितः 'कथंचिदिति' केनचिच्च प्रकारेण
परमेश्वराभिन्नगुरुचरणसमाराधनेन परमेश्वर-
घटितेनैव । यथोक्तम्

'सं[२५]बन्धोऽतीव दुर्घटः........ ।'

इति । '[२६]आसाद्येति'आ समन्तात् परिपूर्ण-

---

२४ अतिदुर्घटकारित्वं विश्वस्य स्वरूपात् भिन्नतया अवभासनं, भासि-
तस्य च पुनः स्वरूपैक्येनावभासनविमर्शनम् ।

२५ सद्गुरुसमवाप्तिः शिष्यस्य शक्तिपातं विना न घटते इत्यर्थः ।

२६ यद्यपि पूर्वकाले धात्वर्थे वर्तमानात् धातोः भावे क्त्वाप्रत्ययो
विधीयते तथापि धातुसंबन्धबलात् तद्वाक्यार्थानुप्राणकत्वेन क्त्वान्तार्थः

---

पं० १ ख० पु० व्यतिरेकासिद्धः प्रसिद्धेति पाठः ।

पं० ४ ग० घ० पु० ऐश्वर्यजृम्भा इति पाठः ।

पं० ७ घ० पु० कथमा इति पाठः ।

पं० ८ क० पु० केनचित्प्रकारेण इति पाठः ।

रूपतया सादयित्वा, स्वात्मोपभोगयोग्यतां निरर्गलां गमयित्वा; इयता विदितवेद्यत्वेन परार्थे शास्त्रकरणे अधिकारो दर्शितः; अन्यथा प्रतारकतामात्रमेव स्यात् । पौर्वकाल्येन सामनन्तर्यम् अत्र विवक्षितम् । अन्यथा तु आसादनतारतम्य[27]प्राप्तौ मायीयमलकलापसंस्कारप्रक्षये कथं परोपदेशः शक्यक्रियः । सम्भव[28]न्ति हि मायागर्भाधिकारिणो विष्णुविरिंचाद्याः,

---

प्रतीयते । पूर्वमासवं पिबति ततो गायति इति हि वाक्ये यादृशं क्रिययोः पौर्वापर्यमात्रं प्रतीयते न तादृशमेव आसवं पीत्वा गायति इति अपि तु तदासवपानमुपकारकत्वेन प्रधानवाक्यार्थानुप्राणकत्वेन अनुयायि इव भाति, केवलं पूर्वोत्पन्नतामात्रं पौर्वकाल्ये, न तु उत्पद्यैव निरन्वयः प्रविलय इति, एवं जातं चेत् परमेश्वरदास्यासादनं, तत् सुजनेन न विलम्बः कर्तव्यः, विलम्बे मायासंस्कारतिरस्कारेण अशङ्कितोपनतपरमेश्वरतादात्म्यापवर्गसंभावनया परोपकारसंपत्तेरभावात्, अनासादिततत्स्वरूपस्य तु शास्त्रकरणे प्रतारकत्वात् अवश्यमासादनसामनन्तर्येणैव परोपकारकरणमुचितं न तु विलम्बनीयम् । तेन परमेशगुरुप्रसादोचितं शुद्धाशुद्धाधिकारिसदाशिवरुद्रविष्णुविरिञ्चाद्युत्तीर्णपरमेश्वरदास्यासादनं सज्जनत्वलाभपूर्वकस्य परोपकारैषणानिमित्तकस्य सर्वसंपदवाप्तिप्रयोजनोपायस्य ईश्वरप्रत्यभिज्ञोपपादनस्य प्रत्यंशं निर्वाहकत्वेन वर्तते इति आसाद्येति एकवाक्यताप्रयोगेन उक्तम् ।

२७ तारतम्यम् इति शब्दः क्रमातिशये रूढः ।

२८ महेश्वरपदं विवृणोति संभवन्तीति ।

---

पं० ७ ग० पु० संस्काराप्रक्षये इति, घ० पु० शक्यप्राय इति च पाठः ।

तदुत्तीर्णा अपि महामाया[29]धिकृताः शुद्धाशुद्धा मन्त्र-तदीश-तन्महेशात्मानः; शुद्धा अपि श्रीसदाशिवप्रभृतयः। ते तु यदीयैश्वर्यविप्रुड्भिरीश्वरीभूताः स भगवान् अनवच्छिन्नप्रकाशानन्दस्वातन्त्र्यपरमार्थो महेश्वरः, तस्य 'दास्यम्' इत्यनेन तत्प्रत्यभिज्ञोपपादनस्य महाफलत्वम् आसूत्रयति। दीयते अस्मै स्वामिना सर्वं यथाभिलषितम् इति दासः, तस्य भाव इत्यनेन परमेश्वररूपस्वातन्त्र्यपात्रता उक्ता। 'जनस्येति' यः कश्चित् जायमानः तस्य, इत्यनेन अधिकारिविषयो नात्र कश्चिन्नियमः[30] इति दर्शयति, यस्य यस्य हि इदं स्वरूपप्रथनं तस्य तस्य महाफलं, प्रथनस्यैव परमार्थफलत्वात्, तस्य च प्रतिबन्धकसंमतैरप्रतिबन्धनीयत्वात् नहि प्रथितमप्रथितमिति न्यायात्। तदुक्तम्,

---

२९ शुद्धविद्याया अधस्तात् मायायाश्च उपरि महामाया नाम तत्त्वम् इति संप्रदायविदः, यत्र सुप्ता अणवो मनव इत्युच्यन्ते।

३० प्रत्यभिज्ञातस्वस्वभावं परमेश्वरतादात्म्यापन्नं जनं विहाय यः कश्चिद् अन्यो भूतभविष्यद्वर्तमानप्रमातृप्रबन्धरूपो जनः तस्य इति सामान्यनिर्देशात् कोऽपि वर्णाश्रमादिनियमः अधिकारिविषयतां नापेक्षते।

'नेहा[31]तिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥'

इति । परमगुरुपादैरपि शिवदृष्टौ

'एकवा[32]रं प्रमाणेन शास्त्राद्वा गुरुवाक्यतः ।
ज्ञाते शिवत्वे सर्वस्थे प्रतिपत्त्या दृढात्मना ॥
करणेन नास्ति कृत्यं क्वापि भावनयापि वा ।
सकृज्ज्ञाते सुवर्णे किं भावनाकरणादिना ॥
सर्वदा पितृमात्रादितुल्यदार्ढ्येन सत्यता ।'

इति । 'जनस्य' अनवरतजननमरणपीडितस्य इत्यनेन कृपास्पदतया उपकरणीयत्वमाह । अपिशब्दः स्वात्मनः तदभिन्नताम् आविष्कुर्वन् पूर्णत्वेन स्वात्मनि परार्थसंपत्त्यतिरि-

३१ अतिक्रमेण प्रमादात्मना अपराधेन इह आत्माद्वैतज्ञानयोगे नाशो नास्ति प्रमादस्य अभावात्, ईश्वरोद्देशेन स्वरूपविदो विघ्नवैगुण्याद्यसंभवाच्च। यथा परिमितेन श्रीखण्डचन्दनेन जाज्वल्यमानोऽपि तैलकटाहः सद्यः शीतीभवति एवमनया स्वल्पयापि योगयुक्त्या महाभयं संसाररूपं विनश्यति इत्यर्थः

३२ यथा सुवर्णे ज्ञाते निकषपरीक्षादिना किं सत्यता भवति? प्रथममेव निर्णीतत्वात् न भवत्येव, एवं सकृदेव स्वतो युक्तितः अपरस्माद्वा गुर्वादेः सकाशात् अचलविमर्शेन शिवत्वे ज्ञाते सति द्वादशान्तादौ भावनया आसनबन्धादिना च कर्तव्यं नास्ति सकृदाभातस्य विच्छेदाभावात् इत्यर्थः ।

पं० १ आधुनिकप्रसिद्धश्रीभगवद्गीतापुस्तकेषु 'नेहाभिक्रमनाश' इति पाठः ।

क्तप्रयोजनान्तरावकाशं पराकरोति। परार्थश्च[33] प्रयोजनं भवत्येव तल्लक्षणयोगात्, नहि अयं दैवशापः स्वार्थ एव प्रयोजनं, न परार्थ इति; तस्यापि अतल्लक्षणयोगित्वे सति अप्रयोजनत्वात्; संपाद्यत्वेन अभिसंहितं यत् मुख्यतया, तत एव क्रियासु प्रयोजकं तत्प्रयोजनम्। अत एव भेदवादेऽपि ईश्वरस्य सृष्ट्यादिकरणे परार्थ एव प्रयोजनम् इति दर्शयितुं न्यायनिर्माणवेधसा[34] निरूपितम्।

'यमर्थमधिकृत्य पुरुषः प्रवर्तते तत् प्रयोजनम्'

---

३३ इच्छारूपाया आकाङ्क्षाया गत्यन्तरविरहात् पर एव विषयो भवति न च परापकारविषया असौ युक्ता, तस्य अपूर्णस्वात्मकैः एषणीयत्वात्, अस्य तु ईश्वरदास्येन समस्तसंपत्प्राप्तिहेतुना परिपूर्णत्वात् स्वात्मनि किंचिदपि कर्तव्यम् एषणीयं नास्ति। अप्रतिहता च चित्स्वभावत्वात् इच्छा, सा परार्थविषयैव बलात् संपद्यते। स्वसंपाद्यनियन्त्रितो हि न परमुपचिकीर्षेत्, स्वसंपाद्याभावे तु बलादेव परोपकारविषया सा भवति। यथोक्तम्।

'स्वं कर्तव्यं किमपि कलयँल्लोक एष प्रयत्नात्
नो पारार्थ्यं प्रति घटयते कांचन स्वात्मवृत्तिम्।
यस्तु त्यक्ताखिलभवमलः प्राप्तसंपूर्णबोधः
कृत्यं तस्य स्फुटमिदमियल्लोककर्तव्यमात्रम्॥'

इति। तेन आत्मनोऽशेषसंपन्निधानमहादेवदास्यलाभात् संपन्ने उपकारे परस्यापि तमिच्छन् इति।

३४ गोतममुनिना।

इति । 'इच्छन्'[३५] इति इच्छाविषयीकृतस्य फलस्य प्रवृत्तौ हेतुत्वं शत्रा दर्शयति । इच्छाशक्तिश्च उत्तरोत्तरम् उच्छूनस्वभावतया क्रियाशक्तिपर्यन्तीभवति—इति दर्शयिष्यामः[३६] । उपशब्दः समीपार्थः, तेन जनस्य परमेश्वरधर्म[३७]समीपताकरणम् अत्र फलम् । तत एव आह—'समस्त' इति परमेश्वरतालाभे हि समस्ताः संपदः तन्निःष्यन्दमय्यः संपन्ना एव, रोहणलाभे रत्नसंपद इव । प्र[३८]मुषितस्वात्मपरमार्थस्य हि किम् अन्येन[३९] लब्धेन, लब्धतत्परमार्थस्यापि तदन्यत् नास्ति यद् वाञ्छनीयम् । यदुक्तं ग्रन्थकृतैव

'भक्तिलक्ष्मीसमृद्धानां किमन्यदुपयाचितम् ।
एनया वा दरिद्राणां किमन्यदुपयाचितम्[४०] ॥'

इति । एवं षष्ठीसमासेन प्रयोजनमुक्तम्,

---

३५ इच्छन् इति 'लक्षणहेत्वोः क्रियायाः' ( ३-२-१२६ ) इति सूत्रेण क्रियाहेतावर्थे शतृङ् ।

३६ क्रियाधिकारे ।

३७ धर्माः पूर्णत्वसर्वज्ञत्वादयः ।

३८ अख्यात्यात्ममायाशक्त्या ।

३९ अणिमादिसिद्धिलाभेनापि ।

४० समावेशसंपदा समृद्धानां प्राप्तव्यस्य प्राप्तत्वात् नास्ति अन्यत् उपयाचितव्यम्, उप इति आत्मनः समीपे, याचितं याञ्चा इति । भक्तिसंपदा रहितानां तु परमार्थस्य अनासादनात् किमन्येन असारप्रायेणेत्यर्थः ।

बहुव्रीहिणा तु उपायः सूच्यते। 'समस्तस्य' भावाभावरूपस्य बाह्याभ्यन्तरस्य नीलसुखादेः या 'संपत्' संपत्तिः सिद्धिः तथात्वप्रकाशः, तस्याः सम्यक् 'अवाप्तिः' विमर्शरूढिः, सैव 'हेतुः' यस्यां तत्प्रत्यभिज्ञायाम्, तथाहि—स्फुटतरभासमाननीलसुखादिप्रमान्वेषणद्वारेणैव पारमार्थिकप्रमातृलाभ इह उपदिश्यते। यदाह अन्यत्र

'इदेमित्यस्य विच्छिन्नविमर्शस्य कृतार्थता।
या स्वस्वरूपे विश्रान्तिर्विमर्शः सोऽहमित्ययम् ॥'

इति। तथा तत्रैव

---

४१ एतेन प्रत्यभिज्ञाया विशेषणत्वमस्य पदस्य परामृशति।

४२ 'तृणमिदम्' इत्यादेः विच्छिन्नविमर्शस्य विभिन्नप्रकाशाधीनसिद्धिकस्य इदन्ताविमृश्यस्य या स्वस्वरूपे चिन्मये, न तु वेद्ये शरीरप्राणशून्यादौ कृतार्थता निराकाङ्क्षात्मा विश्रान्तिः स्वात्मसात्कारः सोऽयं विमर्शः यत् अहमिति। यद्वा 'तृणम्' इत्यादि यो विमर्शः स एव प्रकाशस्य स्वरूपं, प्रकाश एव प्रमाता, तृणगतौ यौ प्रकाशविमर्शौ तावेव स्वरूपं प्रमातुः, 'तृणमिदम्' इति यो विमर्शमयः प्रकाशः स यदि प्रमेयशरीरनिष्ठितः नितरां प्रमेयदेहे चेद्विश्रान्तः तर्हि ममेति प्रत्यवभासो नैव भवेत्, स्वात्मन्येव हि तदा तृणं स्फुरेत्। न चैवमस्ति ततस्तृणमिदमिति प्रकाशविमर्शौ तौ तृणांशादुत्तीर्णौ संविद्भागमवलम्बेते। तयोश्च तत्रगयोः प्रकाशविमर्शनायोगे प्रकाशनविमर्शनापर्यवसाने वा पुनरपि न किंचिन्नवेत्, तेन तृणमिदमित्ययं विमर्शः स्वातन्त्र्ये विश्राम्यति यत्, तत् अहमित्यु-

'प्रकाशस्यात्मविश्रान्तिरहंभावो हि कीर्तितः ।
उक्ता च सैव विश्रान्तिः सर्वापेक्षानिरोधतः ॥
स्वातन्त्र्यमथ कर्तृत्वं मुख्यमीश्वरतापि[४३] च ।'

इति । इयता च उपाये अतिदुर्घटत्वाशङ्का पराकृता । यदन्ते निरूपयिष्यति

'सुघट एष मार्गो नवः' ( ४ अ० ३ आ० १६ श्लो० )

इति । 'तस्य' महेश्वरस्य 'प्रत्यभिज्ञा' प्रतीपमा-

---

च्यते । तदेतदुक्तम् 'इदमित्यस्य विच्छिन्नेति ।' एतदुक्तं भवति–संवेदनमविमर्शरूपं तावत् न किंचित् । विमर्शमयतायां स्वातन्त्र्यं प्रमातृता स्वप्रकाशत्वमिति कथं संवेदनमात्रं, तदाधारमात्रं निर्विमर्शसंवित्पुरुषरूपं वा सिद्ध्येत् । यो हि अपर्यन्तप्रकाशविमर्शात्मा अहमिति वेद्यावभासभित्तिभूतः, तस्य वेद्यतारूपेदन्ताभावात् देशकालभेदाभावे स्वरूपभेदाभावे च एकत्वं, व्यापित्वं नित्यत्वं च न यत्नान्तरमवलम्बते । नीलसुखादिप्रमेयव्यवहारः प्रकाशविमर्शात्मकसिद्धिनिबन्धनभूतप्रमात्रविनाभावी प्रमेयव्यवहारत्वात्, यः किल प्रकाशविमर्शात्मकसिद्ध्यधीनो न भवति नासौ प्रमेयताव्यवहारः, बीजाङ्कुरादीनामिव कार्यकारणभावः ।

४३ अहंभावो हि नाम प्रकाशस्य जीवितभूतः स्वरूपविमर्शः, यतोऽयं स्वस्य परस्य वा प्रकाशने नान्यत् अपेक्षते । इदन्ता तु स्वमवभासयितुमसमर्था, का कथा परस्य । असावेव मुख्यधर्मो व्यापकत्वनित्यत्वादिधर्मान्तरजातमाक्षिपेत्, विप्रकृष्टतयैव स्वपरात्मप्रकाशरूपतायां प्रतिष्ठास्पदत्वेन अनन्योन्मुखात्मतृप्तिकृतादपेक्षाऽभावहेतोः विश्रान्त्यात्मा स्वरूपस्थितिः, एतदेव स्वातन्त्र्यरूपं तत्तद्देशकालाद्यवभाससहस्रोल्लाससामर्थ्ये तत्तदीषणाद्युपाधिवशात् नानाशक्तियोगितया कर्तृतादिशब्दैः व्यवह्रियते । अहंप्रकाशमयत्वमेतदुच्यते यत् प्रकाशतायां स्वातन्त्र्यमनन्यमुखप्रेक्षित्वम् अन्यथा प्रकाशान्तराभ्युपरमे अनवस्थानात् न किंचित् प्रकाशेत ।

त्माभिमुख्येन ज्ञानं प्रकाशः प्रत्यभिज्ञा[44]। प्रतीपम् इति—स्वात्मावभासो हि न अननुभूतपूर्वोऽविच्छिन्नप्रकाशत्वात् तस्य, स तु तच्छक्त्यैव[45] विच्छिन्न इव विकल्पित इव लक्ष्यते—इति वक्ष्यते। प्रत्यभिज्ञा च—भातभासमानरूपानुसंधानात्मिका, स एवायं चैत्र—इति प्रतिसंधानेन अभिमुखीभूते वस्तुनि ज्ञानम्; लोकेऽपि एतत्पुत्र एवंगुण एवंरूपक इत्येवं वा, अन्ततोऽपि सामान्यात्मना वा ज्ञातस्य पुनरभिमुखीभावावसरे प्रतिसंधितप्राणितमेव ज्ञानं प्रत्यभिज्ञा—इति व्यवह्रियते; नृपतिं प्रति प्रत्यभिज्ञापितोऽयम्—इत्यादौ। इहापि प्रसिद्धपु-

---

४४ ज्ञातस्यापि मोहवशात् अज्ञातस्येव आभिमुख्येन हृदयंगमीभावेन ज्ञानं प्रत्यभिज्ञानम्। अथवा प्रतीपं ज्ञातस्यापि विस्मृतस्येव छादितस्येव पुनः आभिमुख्येन, न तु स्मर्यमाणतया अपि तु स्फुटत्वेन ज्ञानं प्रत्यभिज्ञानं, स एवायमिति भातभासमानानुसंधाने स्थिरस्य अधुनातनकालव्यापिनो ज्ञातत्वमेव, अयमसौ अद्य मया प्रत्यभिज्ञात इत्यत्रापि तु कुतश्चित् सामान्याकारेण ज्ञानमभूदेव, एवमात्मनि सततं भात्यपि मोहात् आवृते इव पुनराभिमुख्येन ज्ञानम्। तदुक्तम्

> 'स्मरणानुभवारूढा सामानाधिकरण्यधीः।
> संस्कारेन्द्रियजन्या च प्रत्यभिज्ञा प्रकीर्तिता॥'

इति।

४५ तच्छक्त्यैव मायाशक्त्या स्वातन्त्र्यरूपया, ममायं स्वात्मावभास- इति मिततया विकल्पित इव वस्तुतः परप्रकाश एव सदा स्फुरति।

राणसिद्धान्तागमानुमानादिविदितपूर्णशक्तिस्वभावे ईश्वरे सति स्वात्मन्यभिमुखीभूते तत्प्रतिसंधानेन ज्ञानम् उदेति, नूनं स एव ईश्वरोऽहम्—इति, तामेनाम् 'उपपादयामि'[४६] इति। उपपत्तिः संभवः, तां संभवन्तीं तत्समर्थाचरणेन प्रयोजकव्यापरेण संपादयामि। तथाहि—संभवति तावत् असौ, अविच्छिन्नप्रकाशत्वात्; निरोधकाभिमतमायाशक्तिसमपसारणमात्रमेव तु तत्र उपपादनम्। प्रत्यभिज्ञोपपत्तौ स्वपरविभागाभावे तदपेक्षं[४७] कर्त्रभिप्रायादि असंभाव्यम्

---

४६ प्रत्यभिज्ञापनं हि प्रयोजकव्यापारः, न च प्रत्यभिजानीष्व-इति प्रैषाध्येषणरूपोऽसाविह, अपि तु तत्समर्थाचरणलक्षणः; प्रत्यभिज्ञायां च यत्तत्समर्थाचरणं तदुपपत्त्या तत्संभवनिरूपणं नान्यत्, अतः प्रत्यभिज्ञामुपपत्त्या निरूपयामि, तद्विषयानुपायान् प्रदर्शयामि, संभवन्तीं तां संभावयामि, एवंविधलोकोत्तररहस्योपदेशभाजनत्वप्राप्त्यनुमितादेव परमेश्वरप्रसादान्महेश्वरदास्यप्रापणापूर्विकां प्रत्यभिज्ञामुपपादयामि, प्रत्यभिज्ञापयामि, इत्येक एवार्थः।

४७ 'तदपेक्षम्' इति स्वपरविभागपरामर्शस्तच्छब्देन 'कर्त्रभिप्रायादि असंभाव्यम्' इत्यत्र अयमर्थः—यत्र कर्त्रभिप्रायक्रियाफलविवक्षा तत्रात्मनेपदम्, यत्र तु सा नास्ति तत्र परस्मैपदम् 'शेषात्कर्तरि परस्मैपदम्' इत्युक्तत्वात्। अस्य तु प्रत्यभिज्ञोपायप्रदर्शकस्य ग्रन्थकर्तुः समस्तसंपत्कारणपरमेश्वरदास्यसमासादनेन परिपूर्णत्वात् स्वपरविभागो गलितः; तेनैव कर्त्रभिप्रायक्रियाफलं चोत्सन्नम् इति 'तत्प्रत्यभिज्ञामुपपादयेहम्' इति नोपनिबद्धम्। स्वात्मनि किंचिदस्य कर्तव्यैषणीयत्वाभावात्, परार्थविषयैव

इति परस्मैपदप्रयोगः। इत्थं च अत्र श्लोके योजना,—महेश्वरस्य दास्यं समस्तसंपल्लाभहेतुं कथंचित् आसाद्य, जनस्यापि कथंचित् तत्प्रत्यभिज्ञाम् आसाद्य प्रापय्य, उपकारं समस्तसंपल्लाभहेतुभूतं महेश्वरदास्यात्मकम् इच्छन्, तामेव समस्तसंपत्समवाप्तिहेतुकां तत्प्रत्यभिज्ञाम् उपपादयामि। 'आसाद्य' इति आवृत्तियोजने[४८] द्वौ णिचौ। इयति च व्याख्याने वृत्तिकृता भरो न कृतः, तात्पर्यव्याख्यानात्। यदुक्तम्

'संवृतसौत्रनिर्देशविवृतिमात्रव्यापारायाम्[४९]।'

---

बलात्संपद्यते इच्छा, स्वसंपाद्यनियन्त्रितस्य हि परोपकारकरणाभावात्, इति अतो हेतोः परस्मैपदप्रयोगः। एष चार्थः 'परितुष्येयम्' इत्यस्य विवृतिविमर्शकाले विशेषविषयो निषेधः शेषमभ्यनुजानाति; इतीच्छारूपाया आकाङ्क्षाया गत्यन्तरविरहात्पर एव विषयो भवति इत्यादिना विवृतिविमर्शिन्यां विस्तारितम्।

४८ देहलीदीपन्यायेन युगपदुपकारकत्वं तन्त्रत्वम्, सहभोजिनामेकपात्रन्यायेन क्रमेणोपकारकत्वमावृत्तित्वम्। तत्र चुरादि-हेतुमदात्मकौ णिचौ।

४९ संवृतो यथास्थितत्वेन अनन्यथाकृतो यः सूत्रकृतो निर्दिश्यमानोऽर्थः तस्य या विवृतिः भञ्जनं तावानेव यतोऽस्या व्यापारः। यदि सौत्रं निर्देशमन्यथा कुर्यात्, तर्हि वादिप्रतिवादिनोः सिद्धान्तपूर्वपक्षगतयोः उत्थापनं भवेत्। ततश्च प्रतिवादिकृतस्य आक्षेपस्य पुनः तृतीयस्थाने वादिकृतस्य प्रतिसमाधानस्य करणं स्यात्, तथाकरणे टीकैव स्यात् न वृत्तिः। तत आक्षेपाद्यकरणेन प्रयोजनेन पूर्वपक्षाद्यनुत्थापनं तदर्थं च संवृतसौत्रविवरणम्।

इति। टीकाकारेणापि वृत्तिमात्रं व्याख्यातुमुद्यतेन नेदं स्पृष्टम्, अस्माकं तु सूत्रव्याख्यान एव उद्यम–इति विभज्य व्याख्यातम्। एवं सर्वत्र। एवमनेन श्लोकेन अभिधेयं, प्रयोजनं, तत्प्रयोजनं, तत्प्रयोजनम्, अधिकारिनिरूपणं, गुरुपर्वक्रमः, संबन्ध–इति दर्शितम्[५०]। तथाहि–समस्तसंपल्लक्षणो व्याख्यातो[५१] योऽर्थः पूर्वं पुण्यपापादौ संसारमूलकारणे हेतुः, स एव प्रत्यभिज्ञायते[५२] अनया–इति करणव्युत्पत्त्या उपायः इह लोकोत्तरमार्गं प्रति निर्णीतः,–इति अतिदुर्घटकारित्वलक्षणमैश्वर्यम्

'मार्गो नव' (४ अ० ३ आ० १६ श्लो०)

---

५० अभिधेयमुपायम्, प्रयोजनमुपायज्ञानम्, तत्प्रयोजनं प्रत्यभिज्ञानम्, तत्प्रयोजनं पारमैश्वर्यावाप्तिः। अधिकारी यः कश्चित् शक्तिपातपवित्रहृदयो जनः। श्रीकण्ठनाथात् प्रभृति गुरुसंबन्धः। तत्र श्रीकण्ठनाथः शासने समुत्सन्ने श्रीदुर्वासोमुनिं तदवतारणायादिदेश, सोऽपि श्रीत्र्यम्बकादित्यं त्रैयम्बकाख्ये लोकप्रसिद्ध्या तैरिम्बाभिधाने गुरुसंताने प्रवर्तयितारं मानसं पुत्रं ससर्ज। श्रीकण्ठनाथश्च अधिगततत्त्वार्थः श्रीमदनन्तनाथात्, सोपि श्रीभगवच्छक्तित इत्यादिना आगमेषु निरूपितः गुरुपर्वक्रम इति। संबन्धः प्रतिपाद्यप्रतिपादकभावः।

५१ बहुव्रीहिसमासमाश्रित्य।

५२ प्रत्यभिज्ञायते उपायभावेन प्रत्यभिज्ञापदं प्राप्यते, अनया इति अनेन शास्त्रेणेति। प्रत्यभिज्ञाया ह्येतावानेवातिशयः,–यो हि नीलसुखा-

इति शास्त्रान्ते निरूपयिष्यमाणं सूचयता उपायः प्रदर्शितः अभिधेयत्वेन । अत एव

'तथाहि जडभूतानाम्' ( १ अ० १ आ० ४ श्लो० )

इत्युपक्रमपूर्वं श्लोकान्तरं भविष्यति । प्रयोजनं च प्रत्यभिज्ञोपायज्ञानं, तस्य प्रयोजनं प्रत्यभिज्ञानं, तस्यापि प्रयोजनं समस्तसंपल्ल[53]क्षणपारमैश्वर्यैकरूपप्रथनं; ततः परं नास्त्येव, तस्य सर्वपर्यन्तफलत्वात् अंशांशिकयापि । यदुक्तं मयैव स्तोत्रे

'फलं क्रियाणामथवा विधीनां[54]
पर्यन्ततस्त्वन्मयतैव देव ।
फलेप्सवो ये पुनरत्र तेषां
मूढा स्थितिः स्यादनवस्थयैव ॥'

इति । एतद् वक्ष्यति

'तदत्र निदधत्पदम्' ( ४ अ० ३ आ० १६ श्लो० )

---

दिभावः पुण्यपापहेतुत्वेन पूर्वं प्रसिद्धः, स एव मोक्षसाधनमिति । नीलसुखादिज्ञानस्य मोक्षहेतुरूपदुःसंपाद्यवस्तुसंपादनलक्षणमैश्वर्यम् ।

५३ समस्तसंपद्योगेन पूर्णता लक्ष्यते, राज्यभोगस्वर्गभवनभोगप्राप्तौ अपि उत्तरोत्तराशंसनीयसंभवे कः पूर्णतावकाशः, परमत्वे अर्थनीये यतः परमर्थनीयान्तरं नास्ति, तस्मिन् परमेश्वरभावे समासादिते किम् आशंसनीयं परं स्यात् इति तात्पर्यम् ।

५४ अप्रवृत्तप्रवर्तनात्मनाम् ।

इति पादद्वयेन । 'जनस्य' इत्यनेन अधिकारी दर्शितः । यत् निगमयिष्यति

'अनिशमाविशन्' ( ४ अ० ३ आ० १६ श्लो० )

इति । 'कथंचित्' इत्यनेन गुरुपर्वक्रमः । वक्ष्यति

'महागुरुभिरुच्यते स शिवदृष्टिशास्त्रे यथा ।'
( ४ अ० ३ आ० १६ श्लो० )

इति । एवं प्रतिज्ञातव्यसमस्तवस्तुसंग्रहणेन इदं वाक्यमुद्देशरूपं प्रतिज्ञापिण्डात्मकं च, मध्यग्रन्थस्तु हेत्वादिनिरूपकः,

'इति प्रकटितो मया' ( ४-३-१६ )

इति च अन्त्यश्लोको निगमनग्रन्थः,—इत्येवं-पञ्चावयवात्मकमिदं शास्त्रं परव्युत्पत्तिफलम् । नैयायिकक्रमस्यैव मायापदे पारमार्थिकत्वम्—इति ग्रन्थकाराभिप्रायः

'क्रियासंबन्धसामान्य' ( २ अ० २ आ० १ श्लो० )

इत्यादिषु उद्देशेषु प्रकटीभविष्यति—इति तावद्

५५ परस्य व्युत्पादनमनुमानेन संभवति, अनुमानं च द्विविधं स्वार्थं परार्थं चेति, यत्र च स्वयमेव धूमादग्निमनुमाय परप्रतीत्यर्थं पञ्चावयवं वाक्यं प्रयुज्यते तत्परार्थानुमानम्, प्रतिज्ञाहेतूदाहरणोपनयननिगमनानि पञ्चावयवाः, पर्वतोयं वह्निमानिति प्रतिज्ञा, धूमवत्त्वादिति हेतुः, यो यो धूमवान् स स वह्निमान् यथा महानस इत्युदाहरणम्, तथा चायमित्युपनयः, तस्मात्तथेति निगमनमिति ।

ग्रन्थस्य तात्पर्यम् । सुजनश्च लौकिकेश्वरपरिचित ईश्वरविषये जनम् अनुजीविगुणोपपन्नं प्रकाशयति, जनविषये च आभिगामिकादिगुणगणसंपन्नम् ईश्वरं प्रकाशयति,—इति इयानर्थः सामान्येन षष्ठीसमासेन दर्शितः 'तस्य प्रत्यभिज्ञां'[५६] इति । एतच्छ्लोकाकर्णनसमये च शिष्याणाम् एतदर्थसंक्रमणक्रमेण परमेश्वरतादात्म्यमेव उपजायते तावत् । तथाहि—'जनस्य'—इत्याकर्णनात् वयं ते जननमरणपीडिता [५७]अपर्युदस्तवृत्तयश्च, अस्माकमयम् उपकारम् इच्छन्, महेश्वरस्य दास्यम् आसाद्य, समस्तसंपत्समवाप्तिहेतुं तत्प्रत्यभिज्ञाम् उपपादयति; ततश्च प्रत्यभिज्ञामेवं-भूतां वयं प्राप्ता एव—इति । [५८]इत्थमेव हि अधिकारिणि शास्त्रार्थस्य बिम्बप्र-

---

५६ तत्कर्तृका तत्कर्मिका चेत्यर्थः ।

५७ परित उदस्ता वृत्तिर्येषां ते उदासीनास्तद्विपरीता इति, पञ्च वृत्तयः प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतय इति । अथवा 'सदृशवस्तुपरिग्रहणं पर्युदासः, तद्विषयतां न नीता वृत्तयो येषां ते अधिकारित्वेन गृहीताश्चेति अनन्यवृत्तयः, स्वरूपसंमुखा इत्यर्थः ।

५८ दुर्लभेश्वरदास्यासादनाद्वारेण जनस्य अयमुपकारमिच्छन् तत्प्रत्यभिज्ञामुपपादयति, इत्येवंभूतमर्थं प्रतिबिम्बकल्पं बिम्बस्थानीयात् उत्तमपुरुषार्थात्, प्रतिसंक्रमणवशात् आयातं प्रतिपद्य अधिकारिरूपतासंवेदनात् जनो जायमानो यः कश्चित् स इह उपकार्यः—इत्येवंरूपात् स्वात्मनि उदितात् सदा अहं जन उपकार्यः, तत् दुर्लभेश्वरदास्यासादनोपयि-

तिबिम्बवत् संक्रान्तिः लोट्लिङादीनां विष-
यीभवति—इति प्रथमपुरुषार्थः उत्तमपुरुषार्थे
पर्यवस्यति,न तु ताटस्थ्येन; अधिकार्यनधिकारि-
णोः प्रतिपत्तौ विशेषाभावप्रसङ्गात् । आरोग्य-
कामाः शिवां सेवन्तां सेवेध्वम्—इति वा वाक्या-
र्थस्य सेवामहे—इत्येवंरूपेण अधिकारिणि द्वितीयकक्ष्यासंक्रान्तौ तृतीयकक्ष्यायामेव भाविको-
टिपतितामपि पुरुषार्थसंपत्तिम् अकालकलित-
स्वरूपानुप्रवेशेन स्वात्मीकृताम् अभिमन्यमाने,
तत एव विततसंवित्सुन्दरपरामर्शे पूर्णताभि-
मानप्रतिलम्भात्, अन्यस्य तु अनेवं-रूपत्वेनैव
अधिकारिता ताटस्थ्यप्राणा[५९]—इति । तदास्ताम्

---

काम् अनेन उपपत्त्या स्थाप्यमानां प्रत्यभिज्ञाम् अहमपि उपपत्त्या हृदये स्थापयामि इति हृदयप्रतिपत्तिपर्यन्ता प्रतिपत्तिः । अत्र तावत् कौशलात् संक्रमणेऽपि परामर्शसाम्यं दर्शितम् । अन्यत्रापि तु एवं, यत एव एव अ-धिकार्यनधिकारिणोर्विशेषः । तथाहि त्वां 'गच्छ' इत्युपदिशामि इति श्रुतेः यथा अर्थमवबुध्य, मामयं 'गच्छ' इत्युपदिशति—इति द्वितीयं प्रति संक्रमेण सोपानमारुह्य, तत् गच्छामि इति तृतीयं पदमासाद्य वाक्यार्थज्ञो भवति। अनधिकारी तु प्रथमसोपान एव विश्राम्यति । एवमयं विवक्षति एवं प्रेरयति इत्यपि भवतु सोपानान्तरं न वक्तुरभिसंहितं कर्तव्यत्वे तु न विश्राम्यति इति ।

५९ स एवाहमिति पूर्णताभिमानाङ्कितततसंवित्सुन्दरपरामर्शे संक्रान्ति-र्भवतीति । यावदेव रहस्योपदेशयोग्यतावाह्यनुमेयो माहेश्वरः प्रसादः तावदात्मपरोपकारकरणसमर्थोऽहं जात एवेति, वृष्टश्चेद्देवः संपन्नाः शालय इतिवत् उचित एव शिष्यस्य परामर्श इति वाक्यार्थः ।

अवान्तरमेतत् अतिगहनं च—इति स्थितमेतत् । एतेन श्लोकेन ईश्वरसांमुख्यं विनेयानां प्रयोजनादिप्रतिपादनं च क्रियते—इति ॥ १ ॥

अनन्तभावसंभारभासने स्पन्दनं परम् ।
उपोद्घातायते यस्य तं स्तुमः सर्वदा शिवम् ॥

नन्ु[६०] ईश्वरस्य सिद्धिरेव कर्तव्या, केयं सिद्धिः ! न तावत् उत्पत्तिः, नित्यत्वात् । नापि ईश्वरसिद्धिकारादयस्तस्योत्पत्तिं विदधते । ज्ञप्तिः सिद्धिरिति चेत् ! अनवच्छिन्नप्रकाशस्य प्रमाणव्यापारोपाधेयप्रकाशात्मकसिद्ध्यनुपयोग एव । ननु अनवच्छिन्नस्तदीयः प्रकाश-इति कथमेतत्; घटसुखादिप्रकाशो हि तत्प्रकाशः कुतः?,

६० मौलिकत्वप्रमाणप्रभावप्रकाशमानतायोगिनि वस्तुनि व्यवहारसाधनरूपं प्रत्यभिज्ञानं मोहापसारणफलं कामं केवलं निरूप्यताम् पूर्वप्रकाशस्य सिद्धिरूपत्वात्, यत्र तु अवभास एव न वृत्तः तत्र मौलिकं तावत् प्रमाणं वाच्यम्, तत्र तु निरूपितेपि यो मोहः स्यात् तदपासनाय भवतु व्यवहारसाधनम्, प्रत्यभिज्ञा तावत् प्रथमं साध्या तत उच्यतां प्रत्यभिज्ञा इति व्यवहारसाधनविषयताया व्यापकम् अवभासमानत्वं तद्विरुद्धत्वं च अनवभासमानत्वम् अत्र उपलभ्यते इति व्यापकविरुद्धोपलब्धिः । ईश्वरो न व्यवहारसाधनप्रमाणमात्रविषयः कथंचिदपि अनवभासमानत्वात् नहि ईश्वरो विश्वत्र कस्यचित्कदाचित् भासते इत्याशयेनाह ननु इति । सिद्धिरपि द्विविधा उत्पत्तिसिद्धिः ज्ञप्तिसिद्धिश्च इति द्विविधायाः सिद्धेर्विषयो नेश्वर इति च प्रतिपादयति ।

तदप्रकाशेऽपि सुप्त[61]मूर्छादौ नतरां; स्वप्रकाशेऽपि वा ईश्वरे प्रमातॄणां किं वृत्तं, येन तेषां प्रमाणव्यापारानुपयोग?—इत्याशङ्क्याह

**कर्तरि ज्ञातरि स्वात्मन्यादिसिद्धे महेश्वरे।**
**अजडात्मा निषेधं वा सिद्धिं वा विदधीत कः॥ २॥**

इह क ईश्वरे कीदृशे कीदृशेन प्रमाणेन

---

[61] अक्षैर्यार्थग्रहः पुंसां तज्जाग्रदिति कथ्यते।
यत्तैर्विनार्थस्मरणं मनसा स्वप्नसंज्ञितम्॥
यत्रार्थस्मरणे न स्तत्सौपुप्तमिति स्मृतम्।
शुद्धबोधैकरूपो योऽवस्थातः सैव तुर्यता॥

इति। मूर्छादिन्यायेन सौपुप्तं, सवेद्यमपवेद्यं च इति द्विविधम्; सुखी अहम् इति सवेद्यम्, मया किंचित् न चेतितम् इत्यपवेद्यम्। परो हि ईश्वरविषयं साधकं बाधकं वा अभिदधत् सिद्धिम् अस्तीति प्रकाशव्यवहाररूपां, निषेधं वा नास्तीति तच्छून्यवस्त्वन्तरप्रकाशव्यवहरणरूपं कर्तुम् उद्युक्तः, स एवं कुर्वाणः प्रमाणस्य तत्कृतयोश्च सिद्धिनिषेधयोः विषयतया अधिकरणमीश्वरं प्रमेयं परतन्त्रमेव अभिमन्यते जाड्यं तु अस्य विधीयते परमतेन सिद्धिविषयत्वं सूचितं नहि उपपद्यते तत्प्रमात्रेकरूपत्वात् इति अक्षरार्थसंगतिः। अयमाशयः—कः ईश्वरस्य निषेधं सिद्धिं वा कुर्यात्, कुतः, य ईश्वरविषयनिषेधसिद्धिकारी तस्यैव सत्ता नास्ति परमेश्वरसत्तां विना इति कथं तौ साधयेत्, तदपि अस्मिन् परमेश्वरे ये बौद्धनैयायिकादयो मोहाद्विप्रतिपद्यन्ते। तेषु इदमापतितम् यथा कश्चित् माण्डलिको राजा चक्रवर्तिनः काका किंचित् चतुरङ्गादिसाधनं प्राप्य अनन्तरं साम्राज्यजिगीषया तेनैव सह युद्धं कर्तुमिच्छति तदात्मविनाशायैव तस्य स्यात्। एवं तेषामपि। तदित्थमपि अस्य अजय्यत्वं सिद्धमेव इति।

अस्ति-इति ज्ञानलक्षणां सिद्धिं, नास्तीति ज्ञानलक्षणं वा निषेधं कुर्यात्? प्रमाता इति चेत्, स एव कः? देहादिर्जडः उत तदन्यो वा कश्चित् आत्मादिशब्दवाच्यः? सोऽपि स्वप्रकाशस्वभावो वा न वा? देहादिर्जडः इति चेत्, स एव स्वात्मनि असिद्धः परत्र कां सिद्धिं कुर्यात्? आत्मापि अस्वप्रकाशो जड एव तत्तुल्ययोगक्षेमः। स्वप्रकाशस्वभावः इति चेत्, कीदृशेन स्वेन रूपेण आभाति? यदि परिनिष्ठितसंविन्मात्ररूपेण, तदा संविदां भेदनं, भेदितानां च अन्तरनुसंधानेन अभेदनं न स्यात्; तेन स्वतन्त्रस्वप्रकाशात्मतया तावत् स भासते, तथा भासमानश्च कीदृशमीश्वरं साधयेत् निषेधेत् वा? कर्तृज्ञातृस्वभावम् इति चेत्,ननु स प्रमातैव तथाभूतः—इति कोऽन्यः सः? ननु सर्वकर्तृत्वसर्वज्ञत्वे प्रमातुर्न स्तः; न खलु सर्वशब्दार्थो ज्ञातृकर्तृत्वयोः स्वरूपं भिनत्ति, भेददर्शनेऽपि ईश्वरज्ञानचिकीर्षायत्नादेर्नित्यस्य विषयेण अकारणभूतेन अनाधेयातिशयत्वात्। प्रकाशमानतानयनमेव विषयत्वम् इति चेत्, अप्रकाशस्वभावस्य तथात्वम-

नुचितम्—इति वक्ष्यामः । प्रकाशमानस्वभावत्वे विषयोऽपि सर्वात्मना प्रकाश एव निमग्न इति प्रकाशः प्रकाशते—इत्येतावन्मात्रपरमार्थत्वे कः सर्वज्ञासर्वज्ञविभागः?, प्रमाणमपि एवं सिद्धत्वासिद्धत्वाभ्यां पर्यनुयोज्यम्[६२]; एवं सिद्धिरपि । तस्मात् विषयाभिमतं वस्तु शरीरतया गृहीत्वा तावत् निर्भासमान आत्मैव प्रकाशते विच्छेदशून्यः, सुषुप्तमपि प्रति प्रकाशत एव, अन्यथा स्मृत्ययोगात्; प्रकाशस्य च नित्यत्वात् विच्छेदहेतोरभावेन, अन्यप्रमात्रपेक्षया च प्रकाशमानत्वात्, स्वपरप्रमातृविभागस्य तत्सृष्टस्य मायीयत्वेन वक्ष्यमाणत्वात् । स चायं स्वतन्त्रः । स्वातन्त्र्यं च अस्य अभेदे भेदनं, भेदिते च अन्तरनुसंधानेन अभेदनम्—इति बहुप्रकारं वक्ष्यामः। तदेव अस्य पारमेश्वर्यं मुख्यमानन्दमयं रूपम्—इति पूर्वमुपात्तं[६३] 'कर्तरि'

---

६२ प्रमाणं चेत्प्रकाशान्तर्गतं सिद्धं प्रकाश एव सः स्वात्मनः सिद्धिनिषेधौ किं कुर्यात्, असिद्धं चेत् अप्रकाशस्वभावस्य तथात्वमनुचितमिति ।

६३ यतो ज्ञाने कृतौ च स्वातन्त्र्यमेव चित्त्वं ततः कर्तृशब्देन अभ्युपगमेन क्रियासामान्याभिधायिकरोतिप्रकृतिकेन वा क्रियाविशेषोपाधिसंबन्धकालुष्यानारूपितं स्वातन्त्र्यमभिदधता तन्निमित्तिलब्धं ज्ञानस्वातन्त्र्यं श्लेषेण च निर्मातृत्वस्य तदविनाभाविता दर्शयितुं यत्परिगृहीतेन तत्पू-

इति। तदेव तु स्वातन्त्र्यं विभज्य वक्तुं 'ज्ञातरि' इति पश्चान्निर्दिष्टम्। ज्ञानपल्लवस्वभावैव हि क्रिया—इति वक्ष्यते। तेन सर्वक्रियास्वतन्त्रे सर्वशक्तिके—इति यावद् उक्तं, भवेत् तावदेव 'कर्तरि ज्ञातरि' इति। इयमेव च संवित्स्वभावता। संविदिति तु उच्यमाना विकल्प्यत्वेन प्रमेयतां[६४]

---

र्वकं निर्माणे स्वातन्त्र्यमुक्तम्, अन्यथा यद्येप शुद्धस्वातन्त्र्यप्रतिपादनाभिप्रायो न स्यात् तत् ज्ञानपूर्वकं निर्माणं दृष्टम् असंविद्रूपस्य हि कारणत्वं दूषयिष्यते, न च तन्निर्माणम् इति एवं ज्ञातरि इति प्राक् निर्दिश्येत।

६४ प्रमेयत्वे हि स्वातन्त्र्यं विघटते तदैव तत्रैव स्वातन्त्र्यपारतन्त्र्ययोर्विरोधात्, एवं प्रमेयं परतन्त्ररूपं विभिन्ने स्वतन्त्रे प्रमातरि विश्राम्यत् प्रमेयं भवति। न च नीलं स्वात्मनि प्रकाशविमर्शमये विश्रमयन् प्रमाता स्वात्मानं प्रकाशविमर्शान्तरे विश्रमयेत्, अनवस्थानात्। न च प्रकाशविमर्शान्तरमपि अस्ति, स्वरूपदेशकालभेदासंभवात्। तदयं प्रमाता अनन्याधीनस्वाभाविकप्रकाशविमर्शमयः प्रमेयतां कथं यायात्, प्रमेये च प्रमाणचिन्ता। तदयं प्रयोगः—प्रमेयप्रतिष्ठानं यतः प्रमाता ततः प्रमेयो न भवति, प्रमेयताया व्यापकं पारतन्त्र्यं तद्विरुद्धेन च प्रमेयप्रतिष्ठानत्वं स्वातन्त्र्येण व्याप्तं पारतन्त्र्येऽनवस्थानात् प्रमेयप्रतिष्ठानायोगात्, तत् इयं व्यापकविरुद्धव्याप्तोपलब्धिः प्रमातरि प्रमेयतां निषेधति, स्वप्रकाशोचित एव परामर्शोऽहमिति उच्यते। ननु दृष्टः प्रमातरि प्रमेयताव्यवहार उपदेशादौ, नासौ प्रमातरि अपि तु नीलादिस्थानीये सृष्टे वस्त्वन्तरे एव। ननु च देशकालरहितत्वम् अविच्छिन्नावभासत्वयोगात् विच्छिन्नावभासनकृतपुनरर्थप्राणत्वनिषेधपर्यवसितासकृद्विभातरूपता प्रमातृत्वं च कथं सृष्टे संभवेत्, कथं च अतो वाक्यात् प्रमातरि आत्मनि प्रतिपत्तिर्भवेत्। सत्यमेवम् किन्तु प्रकाशस्वभावोऽनन्याधीनाहमिति-विमर्शमयश्च यः प्रमाता तत्स्वातन्त्र्यात् उदितो यो मेयः स तमेव मूलत्वेन अवलम्बमानो दृश्यविकल्प्यैकीकारन्यायेन विकल्परूपया सृष्ट्या तत्स्वप्रकाशरूपैकीकारेणैव अव्यवधानतया सृज्यते।

स्पृशन्ती स्पृष्टत्वात् न परमार्थसंवित्—इति वक्ष्यामः। कर्ता ज्ञाता च महेश्वर—इत्यभिधानेऽपि स एव प्रकार आपतेत्, इति—यथा यथा प्रमेयभूमिकापादनन्यक्कारकलङ्कपरिहारः शक्यः तथा तथा यावद्भाति यतितव्यम्,—इति भूतविभक्त्या निर्देशः कृतः । उपदेशावसरे[६५] हि सर्वात्मना तावत् सा प्रमेयता अस्य परिहर्तुम् अशक्या । 'स्वात्मनि'[६६] इति, स्वस्मिन् अनपायिरूपे स्वभावे

---

६५ उपदेशावसरे हि कर्तरि इति विषयत्वं युक्तम् ईश्वरस्य, न तु वस्तुतः परमशिवावस्थायामयमीश्वर इति अनुत्तरस्यानिर्देश्यत्वात्, उपचारत एव उपदेशकाले निर्देशः न तु तत्त्वतो वेद्यत्वम् ।

६६ स्वात्मनीति । यद्यपि आत्मा वस्तुस्वभाव इति दृष्टया स्वभाववाची संबन्धिशब्दः तथापि वैशेषिकादिदृशि स्वतन्त्र एव आत्मपदार्थः इति शङ्क्येतापि । स्वशब्दोपादाने तु स्वभाववचनता अस्य गम्यते । ननु स्वो यदि आत्मीयः तदा आत्मनो यः संबन्धी स्वभाव इति आत्मप्रकृतिवाच्यः स्वभाव एव इति स्वभावस्य स्वभाव इति न किंचिदुक्तं स्यात्! सत्यम्—किन्तु आत्मपदे उच्यमाने पृथगेव आत्मपदार्थो घटस्थानीयः प्रतीयेत, स्वशब्दे तु स्वं वस्त्रमित्यत्र यथा अन्यलग्नत्वं प्रतीयते आत्मीयं वस्त्रमिति, एवं आत्मीय आत्मा इति । कस्य आत्मीय इत्यवतरति अन्याकाङ्क्षा । न च कश्चित् उपात्त इति सर्वस्य आत्मीय आत्मा—इति गम्यते । तत्र आत्मीयार्थेऽपि य आत्मार्थः स पृथक् दृष्ट एव उपदेश्योपदेशोपायतया, अन्यथा हि न संबन्धिप्रतीतिर्भवेत् इति । सर्वेषामात्मनि इत्यादिवाक्यान्तरसमाश्लेषेऽपि संयोगित्वादिसंबन्धान्तरशङ्का निवर्तेत । आत्मीयत्वे तु अव्यभिचरणीयत्वमनन्यापेक्षत्वं स्वविश्रान्तत्वं गम्यते इत्येतदर्थं दृष्ट एव भेदेन आत्मा, उपदेशस्य प्रकृतासिद्ध्यङ्गस्य अन्यथानुपपत्तेः ।

इत्यनेन वैशेषिकाद्यभिमतजडात्मवादनिरासः। 'आदिसिद्धे' इति, अविच्छिन्नप्रकाशे इत्यर्थः। 'महेश्वरे' इति, एतदेव माहेश्वर्यं—यद् अनवच्छिन्नप्रकाशत्वेन ज्ञातृ-कर्तृत्वधारोपारोहः। 'अजडात्मा' इति, यस्य तु वैशेषिकादेर्जड आत्मा स सिद्धिं करोतु ईश्वरविषयाम्; अन्यस्तु सांख्यादिर्निषेधं; सांख्योऽपि विषयावभासनरूपं ज्ञानं बुद्धिधर्ममिच्छन् आत्मानं वस्तुतो जडमेव उपैति; न च जडात्मा स्वात्मन्यपि दुर्लभप्रकाशस्वातन्त्र्यलेशः किंचित् साधयितुं निषेद्धुं वा प्रभविष्णुः पाषाण इव; न च अजडात्मनोऽपि एतद् उचितं, तथाहि—स स्वात्मनि सिद्धिमित्थं कुर्यात्—यदि अस्य सोऽभिनवत्वेन भासमानः पूर्वं न भासते, अनाभासनं चेत् जडतैव। निषेधं च इत्थं विदध्यात् – यदि स न प्रकाशते तथा च जडः, न च जडस्य एतत् युक्तम्—इत्युक्तं, नापि अजडस्य; तस्मात् संवित्प्रकाश एव घटादिप्रकाशः, न त्वसौ स्वतन्त्रः कश्चित् वास्तवः; प्रकाश एव च आत्मा; तत् न तत्र कारकव्यापा-

रवत् प्रमाणव्यापारोऽपि नित्यत्ववत् स्वप्रकाशत्वस्यापि तत्र भावात् ॥ २ ॥

ननु कारकव्यापारः प्रमाणव्यापारश्च यदि ईश्वरे न संभवति, तर्हि प्रत्यभिज्ञापयामि—इति यो व्यापार उक्तः स कतमो व्यापार?,—इत्याशङ्क्याह

**किंतु[६७] मोहवशादस्मिन्दृष्टेऽप्यनुपलक्षिते ।**
**शक्त्याविष्करणेनेयं प्रत्यभिज्ञोपदर्श्यते ३**

स ईश्वरस्वभाव आत्मा प्रकाशते तावत्,

---

६७ किमिति प्रश्नयोग्यतां, तु इति विशेषं द्योतयति, किं तु इति—असमासवक्तव्यतां द्योतयन् अन्यप्रमेयाभिधानावकाशमाह । मोहयति इति मोहः ईश्वरः तस्य वशः सामर्थ्यं मायाशक्तिः ततः, मोहयति अनेन शक्तिविशेषेण इति वा मोहो मायाशक्तिः तस्या वशः सामर्थ्यं मोहनकार्यं प्रति अविरामः । यथोक्तं

'मायाविमोहिनी नाम...........'

इति । मुहिर्वा मोहः आवरणं, तस्य वशो विच्युतिः इति—क्रियया शक्तिः, तया च शक्तिमान् आक्षिप्यते, तेन पशुप्रमातॄणामख्यातिरूपो मोहः, कारणं च अस्य ईश्वरशक्तिः इति—स्वरूपतः कारणतश्च निर्वाच्यतैव । न खलु अनिर्वाच्याकारः कश्चित् अविद्यात्मा मोहः अवस्तुत्वेन अस्य इयद्वैचित्र्यप्रथनसामर्थ्यासंभवात् संभवे वा पूर्णमेव वस्तुत्वं नानिर्वाच्यता । नापि सांख्यदृशि इव रजस्तमोवृत्तिः मोहः, तस्य जडत्वेन प्रवृत्तिवैचित्र्यानुपपत्तिः यतः, तस्मात् परमेश्वरस्वातन्त्र्यमेव मायाख्यं मोहयति इत्याशयः । न च स्वप्रकाशत्वमीश्वरस्य यत्नेन उपपादितं तत् कथमुक्तम् अस्मिन् ईश्वरे दृष्टेऽपि इति वाच्यम्, दृष्टशब्दोऽयम् उपचरितकर्मसाधनः उपचरितं

# तत्र च अस्य स्वातन्त्र्यम्—इति न केनचिद्वपुषा न प्रकाशते, तत्र अप्रकाशात्मनापि प्रकाशते प्रकाशात्मनापि, तत्रापि प्रकाशात्मनि सर्वथा प्रकाशात्मना प्रकाशो भागशो वा; भागशः प्रकाशने सर्वस्य व्यतिरेकेण अव्यतिरेकेण वा,

---

यत् कर्म आतिदेशिकं यगात्मनेपदादि हि तत्र उदाहरणमात्रम् भिन्नः कुसूलः स्वयमित्यपि दर्शनात् । यदि वा उपचरितं दृशः कर्तृस्वभावकंतायां गौण्या वृत्त्या आश्रितं कर्म तत् साधनं यस्य स तथा, तत्र उपचारे मुख्यार्थबाधबीजं स्वप्रकाशस्य दृशिक्रियाया विषयासंभवः । नहि द्रष्ट्रन्तरमस्ति अनवस्थानात् । निमित्तं च प्रकाशमानत्वं प्रयोजनं च स्फुटदृष्टाभिमतघटादितुल्यताप्रतिपादनेन अनपह्नवनीयत्वप्रख्यापनम् । यथा दृष्टोऽर्थो विमर्शं विना न सुखविश्रमाद्यर्थक्रियासु क्षमः तथा आत्मापि, इति—दृष्टान्तदार्ष्टान्तिकताख्यापनमपि प्रयोजनम् ।

६८ (१)अप्रकाशात्मनेति जडात्मना शून्यरूपतया । (२) सर्वथा प्रकाशात्मना—इति शिवात्मना । (३) सर्वस्य व्यतिरेकेण—इति पशुप्रमातृरूपेण । (४) अव्यतिरेकेण—इति मन्त्रमहेश्वरादिरूपेण । (५) कतिपयस्य व्यतिरेकेण इति विद्येशरूपेण, विद्येश्वराः प्रमातारो हि स्वात्मनि विपर्यासाभावेपि स्वतो भिन्नं वेद्यं पश्यन्ति । (६) अव्यतिरेकेण इति विज्ञानाकलरूपेण, तेषां यद्यपि अन्योन्यं भेदः तथापि ते वेद्यं शुद्धबोधात्मकं स्वतो भेदशून्यमेव पश्यन्ति । (७) पूर्णतया—इति परमशिवरूपेण, इति—प्रकारसप्तकेन ग्रहीतृभेदः । परमेश्वरप्रकाश एव स्वमायाशक्त्या अतिदुर्घटकारित्वस्वातन्त्र्यरूपया स्वरूपमनाच्छादितमपि आच्छादितमिव अवभासयति; तत्र अनाच्छादनांशप्रधानतायां सदाशिवेश्वररूपता समावेशदशा, आच्छादनभागावभासप्रधानतायां मायाविजृम्भारूपा संसारिदशा, ततो नीलमित्यादिवेद्यभेदः आभासमानकायभेदोपलक्षितः, मायाप्रमातृत्वे कायस्य मूर्धाभिषिक्तत्वात् । बुद्धिप्राणपुर्यष्टकाद्युपाधिभेदारूषितचैतन्यच्छायाकृतो वेदकभेदः इति भेदविजृम्भणम् ।

कतिपयस्य व्यतिरेकेण अव्यतिरेकेण वा, उक्तप्रकारपूर्णतया वा; तदमी सप्त प्रकाराः। तत्र प्रथमः प्रकारो जडोल्लासः, अन्त्यः परमशिवात्मा, मध्यमा जीवाभासाः, सैव भगवतो माया विमोहिनी नाम शक्तिः, तद्वशात् प्रकाशात्मतया सततम् अवभासमानेऽपि आत्मनि भागेन अप्रकाशनवशाद् 'अनुपलक्षिते' सर्वथा हृदयंगमीभावमप्राप्ते अत एव पूर्णतावभासनसाध्याम् अर्थक्रियाम् अकुर्वति, तत्पूर्णतावभासनात्मकाभिमानविशेषसिद्धये 'प्रत्यभिज्ञा' व्याख्यातपूर्वा प्रदर्श्यते[६९], कथं 'शक्तेः'[७०] ईश्वरनि-

---

६९ ईश्वरस्य स्वसंवेदनसिद्धत्वात् दृष्टत्वं केवलं मायाव्यामोहात् अनुपलक्षितत्वमहृदयङ्गमत्वं मार्गदृष्टस्य तृणादेरिव, यथा रथ्यागमने तृणादि भातमपि अभातमेव तृणादिविशिष्टरूपेण अविमृष्टत्वात् सति विमर्शने अर्थक्रियायामुपयुज्यते। यथा वा अस्मिन् घटादिके दृष्टेपि मोहवशात् अनुपलक्षिते अत्यन्तोपादेये व्यवहारसाधनेन स्वशक्त्याविष्कारेण दृढनिश्चयप्रदर्शनमिति लोके दृष्टं, तथा च अयमात्मा ईश्वरो दृष्टोऽपि तथा अनुपलक्षित इति स्वभावहेतोः अत्यन्तोपादेयस्य दृष्टस्यापि अविमृष्टस्य कथमुपादानं स्यात्। विमर्शपदवीमप्राप्ततया ईश्वरसाधारणधर्मैः नित्यत्व–विभुत्व–सर्वज्ञतादिभिः समवायशालिनं स्वात्मानमविमृश्य कथं च परमचमत्कारात्मानन्दरसास्वादनसमापत्तिः स्यात् अर्थक्रियात्मा। सूत्रे निमित्तार्थसप्तमी। यतोऽयमीश्वरो दृष्टोऽपि अनुपलक्षितः, ततः प्रत्यभिज्ञा तस्यैव प्रदर्श्यते।

७० शक्तिः असाधारणः प्रभावः अनीश्वरेऽसंभाव्यः ज्ञत्वकर्तृत्वादिमा-

ष्ठत्वेन प्रसिद्धाया दृक्क्रियात्मिकाया 'आविष्करणेन' प्रदर्शनेन अभिमानसाध्यार्थक्रियाणां तदभिमानसिद्ध्या विना असिद्धेः; तथा च दृष्टान्तं दर्शयति

'तैस्तैरप्युपयाचितैः (४अ०२आ०१७श्लो०) ।'

इति । एतदुक्तं भवति—न कारकव्यापारो भगवति, नापि ज्ञापकव्यापारोऽयम्, अपि तु मोहापसारणमात्रमेतत्, व्यवहारसाधनानां प्रमाणानां तावत्येव विश्रान्तेः । घटोऽयमग्रगः प्रत्यक्षत्वात्—इत्यनेन हि घटो न ज्ञाप्यते प्रत्यक्षेणैव प्रकाशमानत्वात्, अन्यथा पक्षे हेत्वसिद्धेः, केवलं मोहमात्रमपसार्यते । यश्चायं मोहस्तदपसारणं च यत्, तदुभयमपि भगवत एव विजृम्भामात्रं, न तु अधिकं किंचित्—इत्युक्तं वक्ष्यते च ॥ ३ ॥

ननु परिदृश्यमाने भावराशौ किमीया शक्तिराविष्क्रियते कं च प्रति? इति, जडानां

---

ज्ञास्म्यमिति यावत्, तस्या आविष्करणमभिज्ञानख्यापनम्, अभिज्ञानम् एकधर्मात्मकस्वरूपमुखेन अनन्तधर्मचित्रवस्तुस्वरूपप्रवेशाद्युपायः अभितः स्वरूपसर्वस्वस्वीकारेण वस्तु ज्ञायते यथा इति तस्य ख्यापनेन ।

तावत् न ज्ञानात्मिका शक्तिरस्ति, क्रियात्मिकापि स्वातन्त्र्यप्राणा स्वातन्त्र्यव्यपगमाद् असंभावनाभूमिरेव; तथा च रथो गच्छति– इत्यादौ उपचारं केचन प्रतिपन्नाः, न च जडान्प्रति व्यवहारसाधनम् उचितम्; अथ अजडजीवज्जनताधिकारेण उभयमपि, तर्हि सर्वस्य स्वात्मा महेश्वर–इति दूरतरं विप्रकर्षिता प्रत्याशा, तदेतद् आशङ्क्य निरूपयति

**तथाहि जडभूतानां[71] प्रतिष्ठा जीवदाश्रया ।**
**ज्ञानं क्रिया च भूतानां[72] जीवतां जीवनं मतम् ॥ ४ ॥**

'तथाहि'इति युक्त्युपक्रमं द्योतयति, दृश्यतां

---

७१ ननु अजडो वर्गः प्रथमं वक्तव्यो न तु जडः अजडस्य प्राधान्यात् इतरस्य च तदभावात्?–इति चेत् नैतत्, जडं हि पूर्वसिद्धमनूद्य चिद्रूपे अन्तर्भावनीयं यत्नेन, न तु चिद्रूपस्य चिद्रूपतान्तर्भावनं यत्नसाध्यम् व्यामोहात्तु यत्तत्रानैश्वर्यं बहुत्वं चाभिमन्यते तत् केवलमपसारणीयम् तेन यत्नसाध्यचिदन्तर्भावनाय पूर्वं जडेत्युद्दिष्टम् ।

७२ ननु पञ्च भूतानि इति आहुः पञ्चानां भूतशब्दवाच्यत्वमिति तत् कथमुक्तं भूतानां जीवतामिति? उच्यते–सिद्धं भवति,–क्रियाकर्तृरूपं हि भूतमुच्यते तत् परमार्थतो जीवत एव भूतत्वमुचितं तत्प्रसादेन तु अपरस्य । पार्षदसमयस्तु अनियतः सोऽपि च अत्र अस्त्येव । भगवद्गीतासु च यद्यपि 'बुद्धिर्बुद्धिमतामस्मि' इत्यादौ संबन्धषष्ठी तथापि बाहुल्येन निर्धारणषष्ठ्यः 'पाण्डवानां धनञ्जय' इत्यादयः श्रूयन्ते,

किल इत्यर्थः। 'तथा' इत्यनेन साध्यं सूच्यते, 'हिना' हेतुरित्यन्ये, प्रकृतं साध्यं हेतुसिद्ध्या-यत्तमुपक्रम्यते[७३] इत्यर्थः। तेन इति बुद्धिवर्तिना, अत एव स्मर्यमाणेन ग्रन्थेन वर्णयिष्य-माणेन प्रकारेण यस्मात् सर्वमेतद् युक्तम् इति 'तथाहि' इति शब्दस्य वार्थः। इह तावत् भावराशिर्यथा विमृश्यते तथा अस्ति, अस्तित्वस्य प्रकाशं शरणीकुर्वतः प्रकाश-प्राणितदेशीयं विमर्शम् आश्रित्य समुन्मेषात्, अविमृष्टं हि यदि वस्तु तन्न नीलं न पीतं

---

समानजातीयानामेव च निर्धारणम् इति चेतनापि भूतरूपैव इति। जीवतामित्युपक्रम्य जीवनं ज्ञानक्रिये इत्येकवचनेन संविद् ऐक्यं पारमार्थिकमाह। ननु जीवनं यदि ज्ञानक्रिये तदा तत्संबन्धः स्वात-न्त्र्यस्य हेतुः इति किं केन संगतम्? इति चेत् ते एव हि स्वातन्त्र्यं वक्ष्येते

'चितिः प्रत्यवमर्शात्मा
परा वाक्स्वरसोदिता।
स्वातन्त्र्यमेतन्मुख्यं त-
दैश्वर्यं परमात्मनः॥'

इत्यत्र प्रकाशरूपं ज्ञानं विमर्शरूपा च क्रिया इत्येतदेव स्वातन्त्र्यमिति निर्णायिष्यते।

७३ जडभूतानां जीवदाश्रयं प्रतिष्ठानं जीवतां च जीवनं ज्ञानक्रिये एव यस्मात् तस्मात् तथेति आत्मैव ईश्वरः सदा सिद्धः इति। हि-शब्दो हेतुहेतुमद्भावं द्योतयति, आत्मनः सिद्धत्वमैश्वर्यं च यदुक्तं कर्तरि ज्ञातरि इति, तेन प्रकारेण यस्मात् इदं सकललोकसंमतं-जडानां जीवन्मग्ना सिद्धिः, जीवनस्य ज्ञानक्रिये तत्त्वम् इति उपपद्यते।

न सत् न असदिति, कुत?—इति पर्यनुयोगे किम् उत्तरं स्यात्। तेन यद् यथा यावत् अबाधितं विमृश्यते तत् तथा तावत् अस्ति, तत एव देशकालाकारविततात्मानोऽपि द्रव्यक्रिया-संबन्धादयः एकत्वेन परमार्थसन्त—इति वक्ष्यते

'क्रिया संबन्धसामान्य (२आ०२आ०१श्लो०)।'

इत्यादिना, [७४]ततश्च विततमपि इदं विश्वं संक्षेपविमर्शदशाधिरोहे जडं जीवच्च—इत्येतावता द्वयरूपेण अस्ति। तत्र जडा अपि विमृश्यमाना न स्वतन्त्रा भवन्ति, विमृश्यमानता हि तेषां न स्वशरीरविश्रान्तः कोऽपि धर्मः [८०]जडत्वाभावप्रसंगात्, मम नीलं भाति मया नीलं ज्ञायते इति। तेषां 'जडभूतानां' [८१]चिन्मयत्वेऽपि मायाख्यया ईश्वरशक्त्या जाड्यं प्रापितानां 'जीवन्तं' प्रमा-

---

७४ ननु जडाजडवर्गस्यायं वृत्तान्तो निरूपितः न त्वन्यस्य इत्याशङ्क्य, अन्यस्तु न कोप्यस्ति इत्यभिप्रायेण उत्तरयति—ततश्च 'विततमपि' इत्यादि। अयं भावः—निःसंख्याका अपि अमी भावाः तनु-करण-भुवनादिरूपा वेद्याः, ब्रह्मादयः स्थावरान्ताश्च वेदकाः तावत् जडमजडमिति द्वयता द्वैराश्यरूपेण विमृश्यन्ते प्रकाशन्ते च । तत् विमर्शप्रकाशपरवशत्वाच्च बहुत्वमुज्झित्वा द्वैधं शिष्यते । तत् एकतापि एभिः न दुर्लभा प्रकाशविमर्शरूपश्च ईश्वर एव स्वतन्त्रः तान् आत्मभूतान् यथारुचि रचयति नैषां किमपि प्रातिस्विकं तत्त्वमिति ।

तारमाश्रित्य 'प्रतिष्ठा'[७५] तत्प्रमात्राभिमुख्येन अवस्थानं, ततो जडा नाम न पृथक् सन्ति। यथोक्तं ग्रन्थकृतैव

'एवमात्मन्यसत्कल्पाः प्रकाशस्यैव सन्त्यमी।
जडाः......................................॥'

इति। स एव हि स्वात्मा सन् वक्तव्यो यस्य अन्यानुपाहितं रूपं चकास्ति; न च भारूपानुपाहितं जडं नाम किञ्चित्, तेन जडानां हि शक्तिराविष्क्रियते जडान्प्रति—इत्येतत् तावत् निरुत्थानमेव[७६]। ये तु अन्ये जडेभ्यो जीवन्त—इति नाम प्रसिद्धाः तेषामपि शरीरप्राणपुर्यष्टकशून्याकाराः तावत् जडा एव—इति तेषामपि किमुच्यते। एवं घटशरीरप्राणसुखतदभावरूपं सत् यद्वयं भाति तदेव जीवरूपभूतं सत्य; तस्य च आपाते यद्यपि बहुत्वं भाति तथापि तत् जडात्मकवेद्यशरीराद्युपाधेः। ततस्तत्[७७]

---

७५ तथा च घटो मम स्फुरतीति कोर्थः, मदीयं स्फुरणं स्पन्दनमाविष्टः मद्रूपतामापन्न एव चिन्मयत्वात्।

७६ असंभाव्यमित्यर्थः।

७७ न च संविदो भेद उपपद्यते—प्रकाशैकरूपायां हि संविदि संविदन्तरात्स्वरूपभेदकृते भेदव्यवहारे एकतरस्याप्रकाशरूपत्वमुक्तं स्यात् इत्यसंविद्रूपत्वमापतेत्, वेद्याश्चामी तत्स्वरूपैकात्म्यभाजः स्वयं भिद्यमानत्वं

अपारमार्थिकम् अन्योन्याश्रयात्, जीवा हि जडभेदात् भेदभागिनः जडाश्च[78] जीवभेदात्, एतद्देहोऽयम् एतद्द्वेद्योऽयम्—इति भेदम् उपेयुः, नीलपीतादिभेदस्तु प्रमातृसंलग्नतया अभेद-भूमिमेव परमारूढ इति किं तेन। तदयं जीवानामभेद एव संपन्न, इति जीवन् प्रमाता—इति जातं। जीवनं च जीवनकर्तृत्वं तच्च ज्ञान-क्रियात्मकं, यो हि जानाति च करोति च स जीवति—इत्युच्यते। तदयं प्रमाता ज्ञानक्रिया[79]-शक्तियोगाद् ईश्वर—इति व्यवहर्तव्यः पुराणा-

---

चेत्सहेरन् तत्स्वमहिम्ना संविदं भेदयेयुरपि त एव तु न स्वतो भेदमाल-म्बितुं समर्थाः। अथ संवेदनकृत एवैषां भेदः सुस्पष्टमन्योन्याश्रयम् इत्य-भिप्रायं प्रकटयति 'ततस्तदपारमार्थिकम्' इत्यादिना 'भेदमुपेयुः' इत्यन्तेन।

७८ 'परिच्छिन्नप्रकाशत्वं जडस्य किल लक्षणम्।
जडाद्विलक्षणो बोधो यतो न परिमीयते॥'

७९ तथा च

'इच्छा–ज्ञान–क्रियापूर्वा यस्मात्सर्वाः प्रवृत्तयः।
सर्वेऽपि जन्तवस्तस्मादीश्वरा इति निश्चिताः॥'

इति। ज्ञानक्रियाशक्तिलक्षणं च

'स्वप्रकाशे निजे धाम्नि भासयेन्नावविभ्रमान्।
भासना च क्रियाशक्तिरिति शास्त्रेषु कथ्यते॥
यया विचित्रतत्वादिकलना प्रविभज्यते।
भासनानवभाते च कथं नामप्रकल्पनम्॥
तदस्यान्तःस्थितं भानं ज्ञानशक्तिरहं स्मृता।'

गमादिप्रसिद्धेश्वरवत्; तदप्रसिद्धावपि सर्व-विषयज्ञानक्रियाशक्तिमत्त्वस्वभावमेव ऐश्वर्यं तन्मात्रानुबन्धित्वादेव सिद्धं; तदपि च कल्पितेश्वरे राजादौ तथा व्याप्तिग्रहणात्, यो यावति ज्ञाता कर्ता च स तावति ईश्वरो राजेव, अनीश्वरस्य ज्ञातृत्वकर्तृत्वे स्वभावविरुद्धे यतः, आत्मा च विश्वत्र ज्ञाता कर्ता च–इति सिद्धा प्रत्यभिज्ञा। ज्ञानक्रियाशक्ती एव स्वाभाविक्यौ अप्ररूढभेदोन्मेषे सदाशिवेश्वरौ, भेदस्य सामान्यतः प्ररोहे विद्याकले, विशेषतः प्ररोहे बुद्धिकर्मेन्द्रियगण–इति भविष्यति। जडा इति अजीवन्तः, अन्ये च जीवन्त–इत्यापाते तावत् भाति न तु संविदापाते भाति। जीवतामिति जङ्गमा एव अमी इत्थं निर्दिष्टाः ॥ ४ ॥

ननु ज्ञानक्रिये एव कथं सिद्धे यत ऐश्वर्यव्यवहारः प्रसाध्येत?,–इति शङ्कां शमयितुमाह

८० ऐश्वर्याप्रसिद्धौ, पुराणागमप्रसिद्धेश्वरताभावेपि वा।

[81]तत्र ज्ञानं स्वतःसिद्धं क्रिया कायाश्रिता सती
परैरप्युपलक्ष्येत तयान्यज्ञानमूह्यते ॥५॥

अहं जानामि, मया ज्ञातं ज्ञास्यते च—
इत्येवं प्रकाशाहंपरामर्शपरिनिष्ठितमेव इदं [82]ज्ञानं

---

८१ तत्रेति तयोर्ज्ञानक्रिययोर्मध्ये, दृष्टान्ताभिप्रायकं कायाश्रितत्वं न दार्ष्टान्तिके, ईश्वरीया क्रिया परीक्षितुं प्रारब्धा कायाश्रिता च परीक्ष्यते इति कोऽयं नयः? परैरिति मितप्रमातृभिः । कारिकातात्पर्यार्थस्तु,—स्वात्मनि ज्ञानं स्वप्रकाशं, क्रियाप्यान्तरी संवेदनादव्यतिरिक्ता विमर्शरूपा स्वप्रकाशा, सैव शरीरपर्यन्तीभूता बाह्यदर्शनस्पर्शनादिगम्या, परप्रमातरि तु कायपर्यन्तीभूता व्यापारव्याहाररूपा दर्शनादिप्रमाणगम्या तादात्म्यात्तत्कार्यत्वात् तत्पर्यन्तत्वात् आन्तरसंवेदननिर्भासमपि करोतीति स्वपरप्रमातृगतं जीवनं ज्ञानक्रियात्मसिद्धहेतुरूपम्, तत ऐश्वर्यव्यवहारसाधनमिति ।

८२ ननु ज्ञानं विषयप्रकाशसमये नैकान्तेन प्रकाशते अपि तु विषयः प्रकाशते न तत्प्रकाशः स तु यदा प्रकाशते तदा ज्ञानान्तरग्राह्यतयैव इत्याक्षपादीया शङ्का, न तु एतत् विषयः प्रकाशते इति हि यदि विषयस्य धर्मः तन्ममेति नियमेन प्रमातृलग्नता न स्यात्, प्रमातृकार्यत्वेन तथा इति चेत् न, कारणेन कार्यस्य तल्लग्नतावभासनियमकरणं न दृष्टं यतः, एवं हि सति कुविन्दस्यैव पट इति स्यात्, प्रमातृलग्नताभावे च स विषयप्रकाशः सर्वान्प्रति न कंचिद्वा प्रति इति सर्वज्ञं सुप्तं वा जगत्स्यात्, अथ प्रकाशते इति नायं विषयस्य धर्मः, तर्हि कस्य? आत्मन इति चेत् विषयः प्रकाशते इत्यात्मनि रूपं समवेतम् इति आत्मा विषयप्रकाशमय एव इत्यायातम्, तथात्वं च तस्य यद्यात्मनो न भासते तदतथाभूतरूपत्वात्कोऽस्य विशेषः शुक्लगुणयोगात् हि यः शुक्लः पटः स यथा जडः तथा प्रकाशमानत्वे, स्वातन्त्र्यविरहात्तथात्मापि भवेत् विषयप्रकाशयोग एव वास्तवेन वृत्तेन भवेत् जडत्वादात्मानं रक्षति इति चेत् अस्तु एवं तावत्, तथापि तु स्वात्मपरात्मविवेको न स्यात् परात्मापि हि वास्तवेन विषयप्रकाशन-

नाम, किं तत्र अन्यत् विचार्यते, तदप्रे[८३]-काशे हि विश्वम् अन्धतमसं स्यात्, तदपि वा न स्यात्, बालोऽपि हि प्रकाशविश्रान्ति-मेव संवेदयते । तदुक्तम्

'विज्ञातारमरे केन विजानीयात् ।' (बृ०२।५।१९)

इति । तन्निह्नवे हि कः प्रश्नः, किम् उत्तरं च स्यात्–इति । तत्र जानामि–इत्यन्तः संरम्भयो-

---

ज्ञानगुणसमवायबलेन ज्ञाता चेतनो न च प्रकाशते स्वात्माप्येवमिति, अहं जानामीति यत् आत्मनि स्वातन्त्र्यमनुभूयते परात्मविवेकेन तत् कथमुपपद्यते स्वात्मनि ज्ञानान्तरेण ज्ञातृतारूपं गृह्यते न परात्मनि तत्कथं स्वात्मपरात्मनोर्विवेकः तदपि ज्ञानान्तरं यदि अन्यत् ज्ञानमपेक्षते तदनवस्था तथापि च स्वात्मपरात्मविवेकासिद्धिः तत एवोक्तम् 'विज्ञातारमरे केन विजानीयात्' इति ।

किंच विषयस्य तावत् न प्रकाशो धर्म–इति स तावत् न प्रकाशते, विषयप्रकाशरूपमपि ज्ञानं न प्रकाशते, तद्ग्राहकज्ञानान्तरमालापि कल्पिता नाभाति, तत्समवायकारणभूतोऽप्यात्मा न प्रकाशते, तत्प्रकाशरूपमपि ज्ञानं न स्वयं भाति, तज्ज्ञानान्तरमालाप्येवम् इत्यनवस्थानात् न किंचिद्भाति इत्यन्धं जगत् स्यात्,–इति ममेति नियमेन प्रमातृलग्नत्वमेवेति ।

८३ यथा

असिद्धौ च प्रकाशस्य कोऽहं किं त्वं तमोऽपि किम् ।
न किंचिदपि वा किं स्यात्तूष्णीं स्यादपि वा कथम् ॥

किंच

अयं घटोऽयं पट इत्येवं नानाप्रतीतिषु ।
अर्कप्रभेव स्वज्ञानं स्वयमेव प्रकाशते ॥
ज्ञानं न चेत्स्वयं सिद्धं जगदन्धं ततो भवेत् ।

इति ।

गोऽपि भाति, येन शुक्लादेर्गुणात् अत्यन्त-जडात् जानामि—इति वपुः चित्स्वभावताम् अभ्येति; स च संरम्भो विमर्शः क्रियाशक्ति-रुच्यते । यदुक्तम् अस्मत्परमेष्ठिश्रीसोमानन्द-पादैः

'घटादिग्रहकालेऽपि घटं जानाति सा क्रिया ।'

इति । तेन आन्तरीयक्रियाशक्तिः ज्ञानवदेव स्वतः सिद्धा स्वप्रकाशा, सैव तु स्वशक्त्या प्राण-पुर्यष्टकक्रमेण शरीरमपि संचरमाणा स्पन्दन-रूपा सती व्यापारव्याहारात्मिका मायापदेऽपि प्रमाणस्य प्रत्यक्षादेर्विषयः । सा च परशरीरादि-

---

८४ अत्र वेदान्तमतेन विशेषः यथा जानाति इत्यादौ अन्तःकरण-वृत्तिविशेषरूपा क्रिया ज्ञाधातुवाच्या । ज्ञा अवबोधने इति हि धातुः । चित्प्रतिबिम्बलक्षणाभासविशिष्टश्च तिङर्थः आश्रयः परस्पराध्यासिताभा-सबुद्ध्योः विवेकाग्रहात् । यदुक्तमाचार्यैः

आत्माभासस्तु तिङ्वाच्यो धात्वर्थश्च धियः क्रिया ।
उभयं चाविवेकेन जानातीत्युच्यते मृषा ॥
बुद्धेः कर्तृत्वमध्यस्य जानातीति ज्ञ उच्यते ।
तथा चैतन्यमध्यस्य ज्ञत्वं बुद्धेरिहोच्यते ॥

इति । आत्माभास इति बहुव्रीहिः । धियोऽन्तःकरणस्य । तदेवाह । उभयं चेति मृषेति । आभासबुद्धितत्क्रियाणां मिथ्यात्वात् अयं व्यव-हारोऽपि मिथ्येत्यर्थः । सकलबुद्धिसमष्टिरूपमायावच्छिन्नं चैतन्यमीश्वरः । तत्तद्बुद्धिप्रतिबिम्बितं चैतन्यं जीवः । निरुपाधिकं पूर्णं शुद्धचैतन्यं ब्रह्म इति चितित्रिधा ।

साहित्येन अवगता स्वं स्वभावं ज्ञानात्मकं गमयति, न च ज्ञानम् इदन्तया भाति, इदन्ता हि अज्ञानत्वं, न च अन्यत् अन्येन वपुषा भातं भातं भवेत्, तत् ज्ञानं भात्येव परं, भाति च यत् तदेव अहमित्यस्य वपुः,–इति परज्ञानमपि[85] स्वात्मैव; परत्वं केवलम् उपाधेर्देहादेः, स चापि विचारितो यावत् न अन्य इति विश्वः प्रमातृवर्गः परमार्थत एकः प्रमाता, स एव च अस्ति। यदुक्तम्

'....प्रकाश एवास्ति स्वात्मनः स्वपरात्मभिः।'

इति। ततश्च भगवान् सदाशिवो जानाति इत्यतः प्रभृति क्रिमिरपि जानाति–इत्यन्तम् एक एव प्रमाता–इति फलतः सर्वज्ञत्वं[86] प्रमातुः।

---

८५ परकायक्रियोपहितं परज्ञानमपि प्रकाशमानतादिन्यायोपहतत्वात् स्वात्मैव, नहि घटद्वयान्तर्गतयोः आकाशयोः भिन्नत्वं; मायापदे तु स्वपरविभागस्य इहत्यदर्शनेऽतात्त्विकत्वात्। संवेदनं हि एकमेव परमार्थतः, कल्पितशून्यप्राणशरीरादिमायाप्रमातृविषयतया तु स्वपरव्यवहारः इति।

८६ ननु यथात्मा ईश्वरः सर्वः सर्वज्ञो न कस्मात्? सर्व इति यदि प्रमातृभेदाशयेनोक्तिः तदसत् प्रमातृभेदस्यापारमार्थिकत्वात्, केवलं स्वातन्त्र्यशक्त्यैव तद्भेदावभासनम् एकस्तु प्रमाता शिवादिस्थावरान्तः स च सदा सर्वज्ञ एवेति अतो रामावतरणकाले नाहमभूवमित्यत्रापि प्रमात्रन्तरसंवेदनात्मना वक्तैव तत्कालानुभविता–इत्यादि अयत्नघटितमुपपद्यत एव।

एवं कर्तृत्वेऽपि वाच्यम् । यदुक्तम् अस्मत्परमेष्ठिभिः शिवदृष्टौ

> 'घटो मदात्मना वेत्ति वेद्म्यहं च घटात्मना ।
> सदाशिवात्मना वेद्मि स वा वेत्ति मदात्मना ॥
> नानाभावैः स्वमात्मानं जानन्नास्ते स्वयं शिवः ।'

इत्यादि ।'ऊँह्यते' इत्यनेन ज्ञानस्य प्रमेयत्वं न निर्वहति–इति दर्शयति, अन्यथा हि अनुमीयते–इति ब्रूयात् । तदेवं येषां तार्किकप्रवादपांसुपातधूसरीभावो न वृत्तोऽस्मिन् संवेदनपथे, ते इयतैवं आत्मानमीश्वरं विद्वांसो घटशरीरप्राणसुखतदभावान् तत्रैव निमज्जयन्त ईश्वरसमाविष्टा एव भवन्ति । ततोऽयम् उपोद्घातः[८८]–उप इति आत्मनः समीपे टङ्कवत् ईश्वराभिज्ञानलक्षण उत्कर्षो हन्यते विश्राम्यते येन; एतावदेव च अस्य ग्रन्थस्य तात्पर्यम्,–

---

८७ ऊह्यते इति नानुमेयतामात्रं परसंवेदनस्य ऊहनं तर्कणं संभावनमित्यत्रांशे इन्द्रियव्यापारणमप्यस्ति ततश्च साक्षात्कारमुपलक्षयत्यूहः सोऽपि हि परमार्थतः परसंवेदनेऽस्ति परत्वं तु मायामोहकृतमभिमानमात्रसारम् ।

८८ संक्षेपेण वस्त्वभिधानं नोक्तिवैचित्र्यपोषणामात्रफलम् अपि तु अधिकारिविशेषं तीव्रशक्तिपातशरदभ्रभङ्गीभ्रश्यन्मोहावरणम् अनुपयोगिपूर्वपक्षोपक्षेपविस्तरमनुग्रहीतुम् इत्याशयेन आह इयतेति ।

इति । ततोऽपि अयम् उपोद्धातः[८९] ।–उपांशु अवि-
ततं कृत्वा उदिति शास्त्रस्य ऊर्ध्वे एव हन्यते
अपसार्यते प्रमेयविषयो व्यामोहो येन–इति ।
गत्यर्थत्वाद्वा हन्तेर्ज्ञानमर्थः, ज्ञायते प्रमेयं येन
इति । केचित्तु गतिं स्त्रियं गच्छति–इत्येतद्विषया-
मेव हन्त्यर्थमाहुः । एवं श्लोकचतुष्टयार्थभावना-
दार्ढ्यादेव लभ्यते परमशिवः–इति शिवम् ॥५॥

इति श्रीमदाचार्योत्पलदेवशिष्य–श्रीमदाचार्यलक्ष्मणगुप्तद-
त्तोपदेश–श्रीमदाचार्याभिनवगुप्तविरचितायां श्रीप्रत्य-
भिज्ञाविमर्शिन्यां ज्ञानाधिकारे उपोद्धातः ।

इति प्रथममाह्निकम् ॥ १ ॥

---

८९ प्रतिपाद्यमर्थं बुद्धौ संगृह्य तदर्थमर्थान्तरवचनमुपोद्घातः । तथा च

'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते ।
प्रसक्तानुप्रसक्तादि प्रस्तुतादुपजायते ॥'

इति ।

## अथ द्वितीयमाह्निकम् ।



पूर्वपक्षतया येन विश्वमाभास्य भेदतः ।
अभेदोत्तरपक्षान्तर्नीयते तं स्तुमः शिवम् ॥

इह यत् परमार्थरूपं तद् आशङ्क्यमानप्रतिपक्षप्रतिक्षेपेण निरूपयिष्यमाणं सुष्ठुतमां स्पष्टीकृतं भवति । यदाह भट्टनारायणः

'नमस्ते भवसंभ्रान्तभ्रान्तिमुद्भाव्य भिन्दते ।
ज्ञानानन्दं च निर्द्वन्द्वं देव वृत्वा विवृण्वते ॥'

तत्रेह[1] अनात्मानीश्वरवादिनां भ्रान्तिभेदनपूर्वकं परमार्थं विवरीष्यन् तदुद्भावनं तावत् एकादशभिः श्लोकैः करोति

'ननु स्वलक्षणाभासम्······················ ।'

---

1 आत्मन एव सद्भावे ये विप्रतिपन्नाः, त एव कथं तस्य ऐश्वर्यमुपगच्छेयुः–इति त एव इह मूलविपक्षाः । तत्र लोकायतिकाः स्वपक्षस्थापनाविहीनाः परपक्षमपि कथं दूषयेयुः प्रमाणादिप्रक्रियामर्यादानुप्रवेशेन तद्दूषणात्, तदनुप्रवेशे तु चार्वाकताहानिः–इति सौगता एव इह पूर्वपक्षवादिनः । ये हि आत्मानमुपयन्ति अनेकमनीश्वरं च, एकं वा छन्नैश्वर्यम्, ते तावत् नात्यन्ताय इह दूरं स्फुटिताः असाधारणेन धर्मेण धर्मिणोऽङ्गीकरणेन, अङ्गीकृतधर्माभ्युपगमा हि सुघटाः ननु सर्वथानुपगमे–इति सौगतीयः पूर्वपक्षोऽत्र उद्भाव्यते ।

---

पं० ४ ग० पु० निरूप्यमाणमिति पाठः ।
पं० ८ ग० पु० अनातमनि ईश्वरवादिनामिति पाठः ।

इत्यादिभिः

'....................तेन कर्तापि कल्पितः॥'

इत्यन्तैः। तत्र श्लोकद्वयेन आत्मनो ध्रुवस्य दृश्यो[2]नुपलब्ध्या अभाव उक्तः प्रत्यक्षात्मवादि[3]नः प्रति। तत्र श्लोकत्रयेण स्मृत्यनुसंधानं संस्कारात् सिद्धम्—इति अन्यथासिद्धत्वात् आत्मानुमानाय न पर्याप्तम्—इति प्रोक्तम् अनुमेयात्म[4]वादिनः प्रति। तत्र श्लोकेन ज्ञानादिगुणैर्गुणिनि प्रति[5]पत्तिः—इति अनुमानं निरस्तम्। एवम् आत्मानं निराकृत्य, ततो ज्ञानक्रियाशक्तिसंबन्धरूपमै[6]श्वर्यं निराकर्तुं ज्ञानस्य स्वरूपमेव व्यतिरिक्तं वाद्यन्तरमते, सांख्यमते च अयुज्यमानम्—इति निरूपितं श्लोकद्वयेन। तत एकेन क्रिया नाम न काचित् कचिदपि अस्ति—इति कथितं। तत्र साधकं प्रतिक्षिप्य बाधकं च

---

२ दृश्यस्य दर्शनार्हस्य प्रमातुरनुपलब्ध्या।

३ शैव–वेदान्तिनो मानसप्रत्यक्षात्मवादिनः।

४ नैयायिकान्प्रति

५ तार्किकमतेन।

६ ज्ञानक्रियासंबन्धाज्ज्ञातृत्वकर्तृत्वरूपम्।

---

पं० ४ ग० घ० पु० प्रत्यक्षवादिन इति पाठः।

पं० ६ ग० पुं० आत्मानमनुमायेति पाठः।

उपन्यस्यति । ततः संबन्धस्य श्लोकेन नास्तित्वं प्रतिपादितं प्रमाणाभावं वदता । श्लोकेनैव तत्र बाधकं प्रमाणमुक्त्वा, न आत्मा स्थिरो, नापि ज्ञातृत्वकर्तृत्वलक्षणम् अस्य ऐश्वर्यम्—इति स्वपक्ष उपसंहृतः—इति पूर्वपक्षस्य पिण्डार्थः ।

अथ ग्रन्थो व्याख्यायते

ननु स्वलक्षणाभासं ज्ञानमेकं परं पुनः ।
साभिलापं विकल्पाख्यं बहुधा नापि तद्द्वयम् ॥ १ ॥

नित्यस्य कस्यचिद्द्रष्टुस्तस्यात्रानवभासतः
अहंप्रतीतिरप्येषा शरीराद्यवसायिनी ॥२

७ ज्ञानक्रियादेः ।

८ आक्षेपेण च पूर्वपक्षी युक्तिविदग्धंमन्यताक्रान्तहृदयोऽत्र विप्रतिपन्नो यत्नेन स्वाभिनिवेशात् सौजन्याङ्गीकृतपरोपकारप्रावण्येन सिद्धान्तिना निवर्त्यते—इति सूचयन् अज्ञससंशयौ दण्डापूपिकयैव इह व्युत्पाद्येते—इति दर्शयति ।

पं० १ ग० पु० न्यस्येति तत इति पाठः ।

पं० ३ क० ग० पुं० न आत्मा अस्ति नापि इति पाठः ।

पं० ४ ग० पु० ज्ञातृत्वलक्षणमिति पाठः ।

पं० ६ क० ग० पु० ग्रन्थार्थः इति पाठः ।

'ननु' इति आक्षेपे[9]; इह आत्मा संवित्स्वभावः स्थिरः—इति तावदयुक्तम्, स्थिरस्य स्वप्रकाशस्य अप्रकाशनात्। तथाहि[10]—घटप्रकाशो, घटविकल्पो, घटप्रत्यभिज्ञा, घटस्मृतिः, घटोत्प्रेक्षा—इत्यादिरूपेण ज्ञानान्येव प्रकाशन्ते, भिन्नकालानि भिन्नविषयाणि भिन्नाकाराणि[11] च। तत्र नीलप्रकाशः[12] 'स्वलक्षणाभासं ज्ञानं'। 'स्वम्' अन्याननुयायि स्वरूपसंकोचभागि 'लक्षणं' देशकालाकाररूपं यस्य तस्य 'आभासः' प्रकाशनम् अन्तर्मुखं यस्मिन् बहिर्मुखीनस्वरूपधारिणि[13] ज्ञाने तत् अविकल्पकं, विषयभेदेऽपि एकजातीयं स्वरूपे, तद्वैचित्र्ये कारणाभावात्। विकल्पे हि वैचित्र्यकारणम् अभिलापः, स च अत्र नास्ति; नहि अभिलापो नीलस्य धर्मः,

---

९ उक्तस्य सिद्धान्तस्य निराकरणमाक्षेपः। ज्ञानक्रियाशक्तिमत्त्वं संवित्स्वभावत्वम्।

१० घटप्रकाशो निर्विकल्पतया, घटविकल्पः अयं घट इति, घटप्रत्यभिज्ञा सोऽयं घट इति, घटस्मृतिः—स घट इति, घटोत्प्रेक्षा—प्रायेणानेन घटेन भवितव्यम् इति।

११ ज्ञानानां क्षणिकत्वात्।

१२ निर्विकल्परूपः।

१३ मेयोपरागबाह्येन्द्रियजन्ये।

नच चक्षुर्ग्राह्यः[14], ततोऽसौ प्राच्यैः[15] स्मर्तव्यः, अप्रबुद्धे च संस्कारे न स्मृतिः, तत्प्रबोधश्च वस्तुदर्शनोत्थितः—इति वस्तुदर्शनसमयेऽभिलापस्मृतिर्नास्ति । ततः '[16]परं' विकल्पकं ज्ञानं, सर्वस्य विकल्पस्य साक्षात्, पारम्पर्येण वा निर्विकल्पकमूलत्वात् । 'परम्' इति च अन्यरूपं सामान्यलक्षणं तस्य विषयः, स्वलक्षणेऽतिसंकोचिनि विततविकल्पसाध्यस्य वृद्धव्यावहारिकस्य, औपदेशिकस्य वा संकेतस्य कर्तुम् अशक्यत्वात्, कृतस्यापि वैयर्थ्यात्, तेन हि अननुयायिना न पुनर्व्यवहारः। तच्च बहुभेदं, यतस्तत् अभिलापेन[17] संजल्पात्मना शब्दनरूपेण

१४ अभिलापस्य श्रावणत्वात् ।

१५ समयरूपः

१६ परमिति अन्यत् अनुभवोत्तरभावि च तदुपजीवित्वात् सर्वविकल्पानां पारम्पर्येण अनुक्रमेण स्मृत्यादिरूपेण, यथा मणिप्रभादर्शनोत्थस्य मणिविकल्पकस्य पारंपर्येण मणिप्रभादर्शनोत्थत्वं, प्रभया हि प्रभादर्शनं तेन च प्रभाविकल्पः, तेन च मणिविकल्पः—इत्यादि ।

१७ अभिलप्यते आभिमुख्येन विषयपरवशतात्यागेन बोधस्वातन्त्र्यशब्दनेन च विषयस्य तादात्म्यापादनेन व्यञ्जनया प्रमातृसाक्षात्कारपर्यन्ततया उच्यते परामृश्यते येन सोऽभिलापः, आन्तरशब्दलक्षणः संजल्पः। यदाहुः भर्तृहरिपादाः

'सोऽयमित्यभिसंबन्धाद्रूपमेकीकृतं यदा ।
शब्दस्यार्थेन तं शब्दमभिजल्पं प्रचक्षते ॥'

सह वर्तते। शब्दनं च इदम्–इति, तत्–इति, तदिदम्–इति, भवेदिदम्–इति, इदं वा इदम्–इत्यादि 'बहुधा' भिद्यते। तच्च न विषयपक्षे वर्तते, अपि तु तस्य विकल्पस्य स्वरूपमेव विचित्रीकुर्वत् प्रतिभाति–इति विकल्पो बहुभेदः। एवम् अनुभवविकल्पपरम्परा तावत् स्वप्रकाशत्वेन भाति। स्यादेतत्, यल्लग्नासौ परम्परा सोऽपि आभाति–इति; तन्न, यतो द्वयम्[१८]अपि एतद् अविकल्पेतररूपं न अन्यस्य 'कस्यचित्' एत-

इति। तेन सह वर्तते–इत्यनेन सोऽयमित्यभिसंबन्धात्मकसंकेतव्युत्पत्तिकालव्यवहारकालानुगामित्वं विषयस्य वदता सामान्यविषयत्वं दर्शितम्। बहुधात्वे अवान्तरजातिभेदकृते युक्तिः सूचिता, स इत्यनुसंधाने स्मृतिः, सोऽयमित्यनुवेधे प्रत्यभिज्ञा, स इवायमित्यनुरोधे उत्प्रेक्षा, स एवायमित्यनुयोगे व्यवच्छेद इत्यादयो विकल्पभेदा अभिलापभेदमूला एव। स्मृत्युत्प्रेक्षादेश्च अवान्तरजातिभेदयोगेऽपि विकल्पलक्षणमहासामान्ययोगः–इत्यपि साभिलापशब्देन सूचितम्॥

१८ अपिशब्दो भिन्नक्रमः, द्वयमपि तत् न नित्यस्य कस्यचित् ब्रह्मशब्दवाच्यस्य परैरुपगतस्य संबन्धित्वेन युक्तम्। तस्य नित्यस्य अत्र ज्ञानद्वये भासमाने सति, अत्र द्वये आधारतया च परेण स्वप्रकाशताभ्युपगतप्रकाशभावयोग्यस्यापि अप्रकाशनात्, तस्य इति वा ज्ञानद्वयस्य अत्र आत्मनि आधारे अनवभासनात् स्वतन्त्रतयैव तत् ज्ञानद्वयं भाति नतु क्वचित् नित्ये आश्रितं सदित्यर्थः।

---

पं० २ ग० घ० पु० इदं वा इदं वा इत्यादीति पाठः।

पं० ४ ख० घ० पु० विकल्पस्येति पाठः।

दतिरिक्तस्य 'द्रष्टुः' अनुभवितुः संबन्धि, दृश्यस्य तु भवतु बाह्यार्थवादे । अत्र हेतुः— यतः 'तस्य' द्रष्टुः, अत एव संवित्स्वभावतोपगमात् स्वप्रकाशतायोग्यत्वात् आपन्नोपलब्धिलक्षणप्राप्तेः; 'अत्र' एतद्बोधद्वयमध्ये नास्ति अवभासः । ननु अस्त्येव अवभासः–इति असिद्धा दृश्यानुपलब्धिः[19] । तथाहि–अहं वेद्मि, निश्चिनोमि, स्मरामि इदम्–इति विदादिप्रकृत्यर्थरूपात् ज्ञानस्मृत्यादेः, इदम्–इति च कर्मरूपात् विषयात् अतिरिक्तमेव अहम्–इति अनुयायिनि प्रकाशे अनुयायि रूपं भाति । क एवमाह भाति–इति ? । भानं हि अविकल्पकम्, अहम्–इति शब्दानुविद्धो विकल्पप्रत्ययः । ननु तथापि किम् अनेन विकल्प्यते, शरीरसंतानो[20] वा कृशोऽहम्–इत्यादिप्रत्ययात्,

१९ दृश्यस्य दर्शनार्हस्य प्रमातुः ।

२० अनादिप्रबन्धप्रवृत्तो ज्ञानानां हेतुफलभावप्रवाहः संतानः । अहं–प्रतीत्या अहं जानामि, अहं पश्यामि–इत्येवंरूपेण अनुभवेन शरीरसंतानो, ज्ञानसंतानो वा निश्चीयते, ननु ज्ञाता द्रष्टा कश्चिन् अन्यो ज्ञाप्यते–इति सौगताः ।

पं० १२ क० पु० अविकल्पनमिति पाठः ।

ज्ञानसन्तानो वा सुख्यहम्—इत्यादिप्रतीतेः। मत्वर्थीयश्च सन्तानमेव स्पृशति नातिरिक्तम्। तदेतदुक्तम्—'अहंप्रतीतिरपि'[21] शरीरम्, आदिग्रहणात् ज्ञानम् अवस्यति, संतानरूपतया विकल्पयति अवश्यं; सद्देशापरापरभावभेदग्रह-[22]

२१ 'आत्मानमात्मनात्मैव लिङ्गादनुमिनोति हि।
तत्र नूनमुपेतव्या कर्तृता कर्मतास्य च॥
तत्रानुमानज्ञानस्य यथात्मा याति कर्मताम्।
तथाहं-प्रत्ययस्यैव प्रत्यक्षस्यापि गच्छतु॥
देहादिव्यतिरिक्तश्च यथा लिङ्गेन गम्यते।
तथाहं-प्रत्ययेनापि गम्यतां तद्विलक्षणः॥'

ननु आत्मनः किं रूपं यत् प्रत्यक्षेण साक्षात्क्रियते, यद्येवं सुखादेरपि किं रूपं यत् मानसप्रत्यक्षसमधिगम्यमिष्यते! ननु आनन्दादि स्वभावप्रसिद्धमेव रूपं सुखादेः, तर्हि तदाधारत्वं स्वात्मनोऽपि रूपमवगच्छतु भवान्

'सुखादि चेत्यमानं हि स्वतन्त्रं नानुभूयते।
मतुबर्थानुवेधात्तु सिद्धं ग्रहणमात्मनः॥
इदं सुखमिदं ज्ञानं दृश्यते न घटादिवत्।
अहं सुखीति तु ज्ञप्तिरात्मनोऽपि प्रकाशिका॥'

अपि च

'ज्ञातृज्ञानविशिष्टार्थग्रहणं किल भाष्यकृत्।
स्वयं प्रादीदृशत्तच्च किं वा युक्तमुपेक्षितुम्॥
विशेष्यबुद्धिमिच्छन्ति नागृहीतविशेषणाम्।'

इति प्रत्यक्षात्मवादिमतं मनसि निधाय आत्मप्रत्यक्षत्वं दूषयति अहंप्रतीतिरपि इत्यादिना।

२२ सद्देशेति तत्त्वतो हि ज्ञानमात्रमेकमेव इदमनारोपितनीलादिभेदम् अनध्यस्तग्राह्यग्राहकादिप्रपञ्चं सौगतानां। अयं घटः, सोऽयं घटः,

णसामर्थ्यवासनाविष्टत्वात्—इति । 'एषा' इति न अस्माभिर्निह्नुता, 'साभिलापं विकल्पाख्यम्' इत्यनेन संगृहीतत्वात् । एतदुक्तं भवति—अहं-प्रतीतिरेव तावत् न आत्मा, तस्या अपि विकल्परूपत्वात् अस्थैर्याच्च । एतत्प्रतीतिप्रत्ये-योऽपि नास्ति अन्यः शरीरादेः, भवन्नपि वा वेद्यपक्षपतितः स्यात्—इति । तथापि संवि-त्संवेद्य[23]व्यतिरिक्तस्य आत्मनो न सिद्धिः—इत्येतत् अपिशब्देन द्योतितम् । एवं नास्ति आत्मा संवित्संवेद्यव्यतिरिक्तो दृश्यस्य अनुप-लब्धेः—इति ॥ २ ॥

अत्र आत्मवाद्यनुमानमुत्थापयितुमाह

[24]अथानुभवविध्वंसे स्मृतिस्तदनुरोधिनी ।

---

स घटः, घटेन भवितव्यम्—इत्यादिरूपो हि अन्यान्यभावः सदृशः स एव भेदः सदृशापरापरभावात्मा भेदः—इति यावत् । तस्य ग्रहणं विकल्पनं तत्सामर्थ्यं तद्रूपत्वमेव वासना अनाद्यविद्यारूपा तयाविष्टाहं—प्रतीतिः अवश्यं विकल्पयत्येव । ततश्च किं निष्पन्नं ?—तुल्यापरापरोत्पत्त्या हेतुना ज्ञानानामर्थानां च स्थैर्यप्रतिपत्तिर्भ्रान्त्यैव, योऽहं घटमद्राक्षं सोऽहमस्राक्षं तदेव इदं वपुः—इत्येवं—विधा—इति कृत्वापि अहमिति—शब्दसंस्पृष्टो विकल्पप्रत्यय एव आगतो ननु नित्यः कश्चिदात्मा—इति ॥

२३ संवित् ज्ञानसंतानः, संवेद्यं शरीरसंतानः, ताभ्यां भिन्नस्य इत्यर्थः ।

२४ घटविषयाः सर्वे अनुभवा उत्पन्नापवर्गिणः तावत्, अनुभवं च

**कथं भवेन्न नित्यः स्यादात्मा यद्यनुभावकः ॥ ३ ॥**

इह स्मृतिकाले सुस्मूर्षितोऽर्थो भवतु, ध्वंसतां वा—इति किम् अनेन, अनुभवस्तावत् ध्वस्तः—इत्यत्र सर्वस्य अविवादः, तमेव च अनुरुन्धाना स्मृतिर्जायते । तथाहि—स्मृतौ न अर्थस्य प्रकाशः, न अध्यवसायः, नापि अनुभवस्य, अर्थस्य च अङ्गुलिद्वयवत्[25], नापि अनुभवविशिष्टस्य अर्थस्य दण्डिवत्, सर्वत्र अयम्—इति प्रत्ययप्रसङ्गात्; किंतु अनुभवप्रकाश एव स्मृतौ प्रधानम्[26], अनुभवस्य

---

अनुरुध्यमाना स्मृतिर्दृष्टा, अन्यथा यत्रैव कुत्रचित् सा स्यात् । नच अनुभवोद्भवमात्रात् सा भवति, चैत्रदृष्टे मैत्रस्य तदभावात्, तदयमनुभवो बहिर्मुखेन वपुषा ध्वस्तोऽपि अन्तर्मुखेन अध्वस्त एव उपगन्तव्यः—इति परस्य सिद्धान्तिनो मतम् । अथ-शब्दद्योतितसंभावनारूपाशङ्कोपलक्षितं कारिकया पूर्वपक्षवादी आह—अथानुभवेति । अनुभवस्य विध्वंसे अनुभवस्वीकारद्वारपरिगृहीतनियतविषया स्मृतिः केन प्रकारेण भवेत्, यदि तदनुभवान्तर्मुखरूपोऽनुभविता स्थिर आत्मा न स्यात्, अस्ति च इयं स्मृतिः, तत् तेनापि भवितव्यमिति यदि परो ब्रूयादिति कारिकार्थः ।

२५ समप्रधानतया ।

२६ यस्य यः प्रकाशः स तत्प्रकाशं विना न प्रकाशितुं योग्यः, नहि नीलाख्यगुणप्रकाशं विना नीलोत्पलो दृष्टः,—इति अनुभवप्रकाशस्यैव अर्थप्रकाशयुक्तायां स्मृतौ प्राधान्यम् इति ।

---

पं० ४ ग० घ० पु० विध्वंसताम् इति पाठः ।

तु अर्थप्रकाशात्मकत्वात् अनुभवप्रकाशनान्तरीयकोऽर्थावभासः—इति । सर्वथा यदि अनुभवो ध्वस्तः, तदा तत्प्रकाशरूपा कथं स्मृतिस्तद्द्वारेण अर्थविषया स्यात्, तया च सर्वो व्यवहारः क्रियमाणो दृष्टः—इत्यसौ स्वरूपेण अनपह्नवनीया, सति अनुभवस्य नाशे, किंचित् अविनष्टम् आवेदयति । तदेव च अनुभवकर्तृ अनुभवितृरूपम्, आत्मा अनुभावको नित्यः—इति इयदेव च आत्मसिद्धेर्जीवितं । तत्त न अधिकम् इहैव उन्मीलितम् आचार्येण, वक्तव्यशेषविवक्षया पूर्वपक्षो मा तावत् समापत्—इत्याशयेन 'कथंभवेत्' इति । अर्थस्तावत् तस्याम् अकिंचित्करः, अनुभवश्च ध्वस्तः—इति न केनचित्प्रकारेण स्मृतिः स्यात्, तदभावे च संकेतशब्दस्मृत्यायत्ता अपि अस्तङ्गताः सर्वे विकल्पाः, निर्विकल्पं च अन्धमूकबधिरप्रायम्—इति हन्त निराक्रन्दम् अवसीदेत् विश्वम्—इति ॥ ३ ॥

इह कार्यव्यतिरेकेण तादृक् कल्पनीयं

पं० ११ ग० घ० पु० पूर्वपक्षे मा इति पाठः

यत् कार्यसिद्धये पर्याप्नोति, न चैवम् आत्मा, अर्थो हि तावत् स्मर्यते, स च अनुभवप्रकाशमुखेन, अनुभवश्च ध्वस्तः—इत्युक्तं; यदि आत्मा कश्चिदस्ति, किं तेन। एतदपि हि वक्तव्यम्—आकाशमपि अस्ति—इति। अथ उच्यते—न केवलेन आत्मना एतत् सिद्ध्यति, अपितु अनुभवसंस्कारोऽपि अत्र उपयोगी—इति, तर्हि स एवास्तु, किम् आत्मना?—तत् एतत् दर्शयति

**सत्यप्यात्मनि[२७] दृङ्नाशात्तद्द्वारा दृष्टवस्तुषु**
**स्मृतिः केन ॥**

२७ एवं सिद्धान्तिमतं संभाव्य दर्शितम्, अधुना एतन्निराकरणप्रकारं स्वयमेव वक्ष्यति—इत्याशयेन सिद्धान्तिनं पूर्वपक्षवादी पृच्छति—सत्यपीत्यादिना केनेत्यन्तेन। प्रश्नस्य च अयमाशयः—इह अनुभवस्य नीलं प्रकाशता च—इति धर्मद्वयं व्यावृत्त्युपकल्पितं वा, वास्तवं वा—इति तावदास्ताम्, किमस्थानेन विकल्पितेन। इदं तु विकल्प्यम्—स्मृतौ सविषयतालाभाय नीलप्रकाशतांश उपजीवितव्यो न अन्तर्मुखस्वप्रकाशतांशः, तस्य विषयविशेषसमर्पणायोग्यत्वे प्रमात्रभेदभेदयोश्च स्मृतिविशेषप्रसंगात्, स च उपजीवनीयोंऽशोऽर्थस्य अभावाय, असंनिकर्षाद्वा इन्द्रियव्यापाराभावात् वा सर्वज्ञतोपयोग्यदृष्टिनैर्मल्यसमाधानाद्यभावात् वा नष्ट एव, अर्थं आभासते यावता सामग्र्येण उक्तेन, तस्य अभावे तावत् नीलानुभवरूपा दर्शनरूपता नष्टा, सैव च केवला अविच्छिन्नबोधमात्रोपयोगमनपेक्षमाणा द्वारमुपायोऽनुभूतवस्तुविषयतालाभे यस्याः स्मृतेः

पं० ८ ग० पु० आत्मना एतत् इति पाठः।

'दृष्टेषु' अनुभूतेषु 'वस्तुषु' या 'स्मृतिः' तस्याम् अनुभवो दृगात्मा 'द्वारम्' अर्थांशस्पर्शी, स च 'सत्यपि आत्मनि' नष्टोऽनुभवः, तस्य हि अनाशे इदम्—इत्येष एव अत्रुटितः प्रकाशः—इति का स्मृतिः, तदनुभविता किं स्मृतेः कुर्यात्—इति ॥

[२८] अर्थे यत्रैवानुभवस्तत्पदैव सा ॥ ४ ॥

'यत्रैव' विषये 'अनुभवो' वृत्तः 'तदेव' तस्याः स्मृतेः 'पदं' स्मर्यमाणम् । तत्पदा—इति बहुव्रीहिः, 'सा' इति स्मृतिः ॥ ४ ॥

ननु ज्ञानान्तरस्य विषयेण कथं तस्याः विषयित्वाभिमानः—इत्याशङ्क्याह.

[२९] यतो हि पूर्वानुभवसंस्कारात्स्मृतिसंभवः ।

---

सा सत्यपि आत्मनि निर्विषयशुद्धान्तर्मुखसंवेदनेपि अभ्युपगने केन प्रकारेण इति न कश्चित् असौ प्रकारोस्ति येन सा स्यात्, ततो नैव भवेत् इति।

२८ अथ सिद्धान्तिनो वचनं हृदयस्थं संभावनया उपन्यस्यति अर्थेति।

२९ कथं सा नष्टस्य अनुभवस्य विषयेण विषयवती इत्यत्र हेतुमाह,—यतो हीति, यतः पूर्वानुभवसंस्कारात् स्मृतेः संभवः, तस्मात् विषयेण तत्पदैव सा, हि यस्मादेवं तस्मात् केन प्रकारेण स्मृतिरिति पर्यनुयोगासंभवः—इत्याशयशेषं हि-शब्देन दर्शयति ।

---

पं० १२ ग० घ० पु० विषयवत्त्वेति पाठः ।

अनुभवेन हि संस्कारो जन्यते स्वोचितः, संस्कारश्च प्राक्तनरूपां स्थितिं स्थापयति, आकृष्टशाखादेश्चिरसंवर्तितस्य विवर्त्यमानस्य भूर्जादेः । तेन अत्रापि संस्कारः तां स्मृतिं पूर्वानुभवानुकारिणीं करोति—इति तद्विषय एव स्मृतेर्विषयः ॥

यद्येवमन्तर्गडुना कोऽर्थः स्यात्स्थायिना-
त्मना ॥ ५ ॥

एवं तर्हि 'अन्तर्गडुः' यथा आयासाय परं, तद्वत् आत्मा स्थिरः कल्पनायासमात्रफलः—इति किं तेन, सर्वं हि संस्कारेण जगद्व्यवहारकुटुम्बकं कृतकरावलम्बम्—इति ॥ ५ ॥

ननु तस्यैव संस्कारस्य आश्रयो वक्तव्यः, स हि गुणत्वाद् आश्रयमपेक्षते, य आश्रयः स आत्मा स्यात्—इत्याशङ्क्याह·

ततो भिन्नेषु धर्मेषु तत्स्वरूपाविशेषतः ।
संस्कारात्स्मृतिसिद्धौ स्यात्स्मर्ता द्रष्टेव
कल्पितः[३०] ॥ ६ ॥

---

३० ननु संस्कारो धर्मरूपो गुणो न स्वतन्त्र—इति धर्मिणा अस्य भवि-

इह संस्कारे जायमाने, यदि आत्मनो विशेषः, स तर्हि अव्यतिरिक्तः—इति न नित्य आत्मा स्यात्; अथ न कश्चित् अस्य विशेषः,

---

तव्यम् । ज्ञानसंतान एव अस्य धर्मी इति चेत्, न तावत् संतानः कश्चित् अन्यो ज्ञानेभ्यः, तत् यदि ज्ञानेष्वेव संस्कार इत्युच्यते तत् अयुक्तम्, नहि अन्यत्र अनुभवरूपता, अन्यत्र संस्कारोऽन्यत्र स्मृतिः—इति युक्तं, प्रसिद्धे चैत्रमैत्रादिप्रमातृभेदे एवंविधवृत्तान्तानवलोकनात्, तस्मात् अनुभवसंस्कारयोरभेदः समर्थनीयः, स च स्वरूपेण नोपलभ्यते, अतो विलक्षणत्वात्—इति आश्रयाभेदात् एकार्थसमवायलक्षणादेव स सिध्यति, अनुभवसंस्कारयोश्च आश्रयद्वारेण अभेदे सिद्धे सुखादीनामपि प्रतिसन्धिः सिध्यत्येव, सर्वस्य प्रतिसंधेः य एव अहं सुखानुभवेन सुखी समभवं स एव इच्छामि दुःखी द्वेष्मि इच्छाद्वेषयुक् च आदातुं हातुं वा प्रयते—इत्यादेः स्मरणसारत्वात्, अनेनैव आशयेन संक्षेपव्याख्यारूपायामवतरण्यां संस्कारस्य धर्मत्वं व्याख्यातं, न सुखादीनां पृथक्; तस्मात् संस्कारस्य आश्रय एकः, एकत्वादेव च स्थिरो यः स एव आत्मा—इति पूर्वपक्षवादिनो मतमाशङ्क्य आह—ततो भिन्नेषु—इति । तत आत्मनो व्यतिरिक्तेषु धर्मेषु संस्कारादिषु सत्स्वपि, व्यतिरिक्ते च समवाये सत्यपि तस्य आत्मनः स्वस्मिन् रूपे अनुदितसंस्कारादिधर्मात् पूर्वरूपात् न विशेषः, विशेषे हि अनित्यत्वं, तस्मात् संस्कारादेव पूर्वोक्तन्यायेन स्मृतिः सिद्धा । यत्तु अहं स्मर्ता—इति भासते, तत्र तावदसौ अहंप्रतीतिरेव न आत्मा क्षणिकत्वात्, अस्थिरत्वात्, तत्प्रत्येयं तु वस्तु स्वलक्षणं यदि अनुभवगोचरीकृतं भाति तदस्थिरमेव, अथ विकल्प्यं तत् शरीरं संतानो वा इति तथा वेद्यवेदनातिरिक्तो न कश्चित् वेदकः स्मर्तृग्रहीतृरूपो भाति । एतदुक्तं भवति—यतो नित्य आत्मा, अतो यथा असौ अनुदितसंस्कारोऽपि न स्मृतौ व्यापरिष्ट, तथा उदितसंस्कारोऽपि न व्याप्रियेत, तत्स्वरूपस्य अंशेनापि अवैलक्षण्यात्; वैलक्षण्यं हि संस्कार एव, तत्कृते वा व्यतिरेकराहित्ये तस्य पूर्वरूपापायात् अनित्यत्वम्, व्यतिरिक्ते तु तस्य न तत् किंचित् स्यात्, ततः संस्कारस्य किमाश्रयेण स्मृतौ जन्यायामनुपयुक्तेन इति ।

तेन तर्हि किम्। अथ संस्कार एव अस्य विशेषः, तर्हि न व्यतिरिक्तोऽसौ–इति, पुनरपि अनित्ये ज्ञाने संस्कारः–इत्यायातम्। अनुभवाद्विशिष्टं विशिष्टस्मृत्याख्यकार्यकारि ज्ञानं परम्परया जायते–इति इयानेव संस्कारार्थः। अथ संस्कारात्मा व्यतिरिक्तो विशेषः, तस्य तर्हि किमसौ। संबन्धश्च व्यतिरिक्तो निराकरिष्यते। एवं ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा अपि विकल्पनीयाः। एतदाह–'ततः' इति आत्मनो 'भिन्नेषु धर्मेषु' अङ्गीक्रियमाणेषु तेषु सत्स्वपि, आत्मनः 'स्वरूपे' विशेषाभावात् स तावत् आत्मा स्मृतौ न व्याप्रियेत, अस्मर्तृरूपासंस्कृतरूपादिप्राच्यरूपानपायात्–इति 'संस्कारादेव स्मृतेः सिद्धिः'–इति। अहं स्मरामि–इति यः 'स्मर्ता' सोऽपि शरीरसंतानो, ज्ञानसंतानश्च अध्यवसीयते, यथा 'द्रष्टा'। पूर्वं हि उक्तम्

'अहंप्रतीतिरप्येषा शरीराद्यवसायिनी।' (१।२।२)

---

पं० १२ ख० पु० व्याप्रियते इति पाठः।

इति[३१]। एवम् आत्मनि साधकं प्रमाणं प्रत्यक्षमनुमानं च पराकृतं, बाधकं च सूचितं[३२]—धर्मयोगे नित्यताहानिः, अन्यथा किं तेन । तदुक्तम्

'वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम् ।
चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्समः[३३] ॥'

---

३१ इयत्पर्यन्तमुक्तसंदर्भस्य संक्षिप्ताशयः-ननु स्वलक्षणेत्यादिना शरीराद्यवभासिनी-इत्यन्तेन श्लोकद्वयेन मानसप्रत्यक्षात्मवादिमतं दूषितम् । ततः, अथानुभवेत्यादिना कोऽर्थः स्यात् स्थायिनात्मना-इत्यन्तेन अनुमेयात्मवादिमतं दूषितम् । तदनु, ततो भिन्नेषु-इत्यनेन इच्छाद्वेषप्रयत्नसुखदुःखज्ञानानि आत्मलिङ्गम्-इति सूत्रकारवचनात् पुनरपि यत् इच्छादिभिर्गुणैः गुणिन आत्मनोऽनुमेयत्वं प्रत्यपादि तददूष्यत-इति ।

३२ तदयमत्र संक्षेपः-यत् कल्पितमपि यत्सिद्धये न संभवति न तत् तत्सिद्धये प्रकल्प्यते, खपुष्पमिव अङ्कुरसिद्धये, तथा च नित्यः कश्चित् आत्मा स्मरणप्रतिसंधिसिद्धये । इह हि कल्पनाया नियमवत्त्वं व्यापकम्, अन्यथा सा न विरमेत्, यदि च तत् अप्रभविष्णु तत्सिद्धये कल्प्यते तत् व्यापकत्वमस्या हीयेत-इति तत्सिद्धये प्रकल्पनं तदप्रभविष्णुविपर्ययेन व्याप्तं, तच्च व्यापकमिह नोपलभ्यते-इति व्यापकानुपलब्धिः । तदाह-वर्षातपाभ्यामिति ।

'यस्मिन् सति भवत्येव यत्ततोऽन्यस्य कल्पने ।
तद्धेतुत्वेन सर्वत्र हेतूनामनवस्थितिः ॥'

इति च ।

३३ इदमत्र तात्पर्यम्—नित्यस्तु आत्मा अभ्युपगम्यमानो यदि सुखादिजन्मना विकृतिमनुभवति तदयमनित्य एव चर्मादिवत् उक्तः स्यात् । निर्विकारत्वे तु सता असता वा सुखदुःखादिना कर्मफलेन कस्तस्य विशेषः-इति कर्मैवफल्यमेव । तदुक्तम्-वर्षातपाभ्यां किमित्यादि । तस्मात् उत्सृज्यताम् एष मूर्धाभिषिक्तः प्रथमो मोह आत्मग्रहो नाम, तन्निवृत्तौ आत्मीयग्रहोऽपि निवर्त्स्यति अहमेव न किं मम इति । तत्

इति ॥ ६ ॥

इत्थम् आत्मानं निराकृत्य, तस्य ऐश्वर्य-मपि निराकर्तुं, ज्ञानशक्तिमेव परीक्षितुमाह[34]

**ज्ञानं च चित्स्वरूपं चेत् तद् अनित्यं किमात्मवत् ।**
**अथापि जडमेतस्य कथमर्थप्रकाशता ॥ ७ ॥**

पराभ्युपगमेन प्रसङ्गापादनम् एतत् पूर्व-पक्षवादी करोति—प्रसङ्गविपर्ययलाभो मे भविष्यति—इति । तत्र आत्मवादी नित्यत्वम् आत्मन इत्थं ब्रूते—इह कालो नाम इदंभाव-विशिष्टस्य विशेषणताम् अवलम्बमानः तं वि-शिष्टीकुर्वन् तत्संकोचात् अनित्यं संपादयति, आत्मनश्च चित्स्वभावत्वात् इदम्—इति प्रथना-

---

इदम् अहंकार-ममकारग्रन्थिप्रहाणेन नैरात्म्यदर्शनमेव निर्वाणत्वात् अवलम्ब्यताम् इति ।

३४ एवं धर्म्येव तावदात्मा नास्ति—इति कुत्र हेतूपन्यासैरैश्वर्यं प्रसा-ध्येत—इत्युक्त्वा ज्ञानक्रियायोगात्–इति यो हेतुरुक्तः तत् निराकर्तुं ज्ञानमेव परस्य नोपपन्नं जडत्वेन अजडत्वेन वा—इति परस्य प्रसङ्गा-पादनं कर्तुं कारिकाद्वयम् ।

भावेन विशेष्यत्वं नास्ति, विशेषणविशेष्य-भावो हि योजकायत्तः, नच स्वप्रकाशे योज-कान्तरम् अस्ति। स इत्थं ब्रुवाणः पर्यनुयुज्यते—'ज्ञानमपि' तर्हि स्वप्रकाशम्—इति, तत्रापि एषैव वार्ता—इति । तदपि कस्मात् न नित्यम्[35]?, नच द्वयोर्नित्ययोः कश्चित् संबन्धः, कार्य-कारणभावो हि असौ नान्यः, तत आत्मनो ज्ञानं शक्तिः—इति अवसन्नम् अदः । अथ[36] न

---

[35] अत्र अयं वैधर्म्यदृष्टान्तो भवन् साधर्म्ये एव पर्यवस्यति; इवार्थतुल्यार्थयोः सादृश्यमेव हि सर्वत्र परमार्थतः । ततो वैधर्म्ये तत्प्र-योगः केवलं साधर्म्यस्य व्यतिरेकनिष्ठतामभिधातुं विशेष्य व्यपदिश्यते तस्मात् एवमत्र योजना—समस्त एव अकारो नञर्थः प्रसज्यप्रति-षेधेऽपि वा 'अकर्तरि' इत्यत्र कारकशब्दोपादानलिङ्गसमार्थितोऽसमर्थ-समासः, ततश्च निषेध्येन तुल्यता आत्मवत् नित्यं कस्मात् न भवति इति चित्स्वरूपत्वेन तु स्पष्टा । अथ वा किंशब्देन काक्का निषेधोऽभिधी-यते—आत्मवत् किमनित्यम्? आत्मवत् नानित्यमिति यावत्। यदि वा किमित्यनेन अनुपपत्तिप्रभवपर्यनुयोज्यधर्मत्वमभिधीयते, तेन यथा आत्मा किमनित्यः, तथा ज्ञानमपि किमनित्यम्, उभयोरपि अनित्यता-धर्मोऽनुपपद्यमानत्वेन पर्यनुयोगमात्रम् इति ।

[36] अथेत्यादिना कारिकाया द्वितीयार्धं व्याचष्टे—यदि न स्वप्रकाशं ज्ञानं स्यात्, तर्हि परस्य घटादेरपि प्रकाशो बोधो न भवेत्, यस्मात् कारणात् असौ बोधः स्वकीयं यत् प्रकाशरूपं तस्मिन् आवेशनं परस्य कुर्वन् परं घटादिकमपि स्वप्रकाशान्तःकृतं विदधत् परस्य प्रकाशो भवति, अपि-शब्दात् स्वस्यापि प्रकाशो बोधः । स्वप्रकाशस्य एतल्लक्षणं—यत्

---

पं० ७ ग० पु० भाव एव हि इति पाठः ।

स्वप्रकाशं ज्ञानं, तर्हि परस्यापि अदो न प्रकाशः, स्वप्रकाशरूपावेशनं हि असौ परस्य विदधत् बोधः प्रकाशो भवति परस्यापि, ततः स्वपरप्रकाशताशून्यो न असौ अर्थस्य प्रकाशः स्यात्, भावान्तरवत् ॥ ७ ॥

जडोऽपि असौ इत्थम् अर्थस्य प्रकाशो भविष्यति—इति सांख्यमतम् आशङ्कते

---

स्वमपि प्रकाशयन् परमपि प्रकाशयति इति । एतदुक्तं भवति—एतेषां नित्यत्वव्यापित्वाद्वैतत्वानां यः प्रसङ्गो बलादेव आपतितः, स एव दोषः स्वपक्षोपमर्दनात् ततो भीरुणा आत्मवादिना जडैकरूपं यदि ज्ञानमङ्गीक्रियते, तदा नीलं यथा न पीतस्य प्रकाशनरूपं भवति तथा ज्ञानमपि न स्यात् । ननु जडोऽपि प्रकाशो भवति आदित्याद्यादिः इति चेत् न, आलोकादित्वे दीपसूर्यरत्नप्रभादिमध्यप्रवेशः स्यात्, सत्यपि आलोके, प्रमातरि अविद्यमाने नार्थो भाति, सत्यपि तु प्रमातरि प्रदीपकल्पे तज्ज्ञानेन भासेतैव अर्थः । प्रदीपशतप्रज्वालनेऽपि न भात एव योऽर्थः स ज्ञाने तादृश्येव कस्मात् भासते, यो यथा जातीयसंनिधाने यथा न भवति स तथा भवन् तद्विलक्षणजातीयसंनिधिमवद्योतयति, यथा—शीतलजलहिमवायुसंनिधावपि घटोऽरक्तत्वेन अनुभूतो रक्तो भवन् उष्णवह्निसंनिधिम् । जडजातीयसंनिधौ च भावो दृश्यमानत्वाध्यवसीयमानत्वव्यवहार्यतारूपं विशेषमप्रतिलब्धं कदाचन प्रतिलभमानोऽजडजातीयसंनिधिमवद्योतयति, विपर्यये निर्निमित्तत्वप्रसङ्गात् बाधकात् व्याप्तिसिद्धौ स्वभावहेतुः । संविदि अनुभवनिश्चयरूपायां निष्ठा अनन्यापेक्षिणी विश्रान्तिः यासां ता विषयाणां नीलादीनां व्यवस्थितयो विविधेन असंकीर्णेनात्मना अवस्थानानि, ता व्यवस्थितीः कथमचेतनोऽर्थो नीलादिप्रायः प्रयुञ्जीत व्यवस्थापयेत् व्यवस्थितीरिति ।

**अथार्थस्य यथा रूपं धत्ते बुद्धिस्तथात्मनः।**
**चैतन्यं ॥**

इह तावत् अर्थं जानामि—इत्यस्ति व्यवहारः । तत्र अर्थस्य प्रकाशः—इति एतावत्परमार्थः । तत् न अर्थस्य स्वं रूपं, सर्वं प्रति तथात्वप्रसङ्गात्, न कंचित्प्रति वा—इति सर्वज्ञम् अज्ञं वा जगत् स्यात् । नापि अर्थे अन्यत एतद्रूपम् उपनिपतितम्, एष एव हि दोषः स्यात् । तत् नूनम् अन्यत्रैव अयं धर्मः तत्त्वान्तरे,[३७]

[३७] उक्तार्थस्य तात्पर्यमिदम्—ननु वैशेषिकादयोऽपि बुद्धिरुपलब्धिः ज्ञानम्—इत्यनर्थान्तरं मन्यन्ते तत् कोऽस्य वादस्य पूर्ववादात् विशेषः, संवित्स्वभाव एव आत्मनि उपगते किमन्येन ज्ञानेन अभ्युपगतेन, बुद्धिधर्मे वा ज्ञाने किमन्येन आत्मना कृत्यमिति चेत् न, वैशेषिकादिदृशि तत् ज्ञानमात्मनो धर्मः सांख्ये तु न तथा इति भेदः—इत्येका शङ्का निरस्ता । शुद्धस्वभावसंवित् न अर्थप्रकाशः—इति द्वितीया, जडप्रधानविकारबुद्धिस्वभावत्वात् जडं ज्ञानं न स्वतः प्रकाशरूपम्—इति तृतीया । ननु सौगतेऽपि संवेदनलक्षण आत्मा—इति चेत् न, स्वप्रकाशमात्ररूपमेव आत्मतत्त्वं सांख्यानाम्, सौगतानां तु स्वप्रकाशत्वेन अन्तर्मुखं बाह्यनीलादिप्रकाशत्वेन च बहिर्मुखम् । न च एकस्य उभयोन्मुखता उपपन्ना स्वपरयोः ऐक्यापत्तिप्रसङ्गात्, नच सा युज्यते बाह्यस्य अर्थस्य ग्राहकात् विच्छेदेन अवभासात्—इति ग्राहकोऽन्तर्मुख एव । अत एव बाह्यत्वग्राहकत्वायोगात् न तेन तुल्यकक्ष्यतया परं किंचन चकास्ति, तुल्यकक्ष्यताप्रतिभासकृतश्च गुणभावप्रधानभावाभ्यां

पं० ४ ग० पु० इत्येतावान् परमार्थ इति पाठः ।

तत्रापि कथम् अर्थस्य प्रकाशः स्यात्—इति नूनं तत्र तत्त्वान्तरे सोऽर्थः प्रतिबिम्बत्वेन उपसंक्रामति। तत् तत्त्वान्तरं सत्त्वप्रधानत्वात् प्रतिबिम्बोपग्रहयोग्यं तमसाऽऽच्छादितत्वात् सकलप्रतिबिम्बनतो व्यावर्तितम्, भागे रजसा तमसोऽपसारणात् किंचिदेव प्रतिबिम्बकं गृह्णाति, तदेव बुद्धितत्त्वम् उच्यते। अर्थ-

---

धर्मिधर्मभाव–विशेषणविशेष्यभाव–उपधानोपधेयभावादिव्यवहारः। तथा च पटोऽयं शुक्लः–इति पटाभासशुक्लाभासयोर्बहिर्भूमौ तुल्येदन्ताग्राह्यभावेन स्थितयोः पटाभासोपरक्तः शुक्लाभासो विपर्ययो वा भवति–इति युज्यते। तेन अत्र गुणभूतो विशेषणम् अन्योपधेयरूपत्वात्, अन्यत् स्वरूपव्यतिरिक्तमुपधेयं स्वात्मना अनु-रञ्जनीयं रूपं विशिष्टलक्षणं येन इति। प्रधानभूतस्तु विशेष्यः, अन्येन उपरञ्जनीयं रूपमस्य इति। एवं च विशेष्यभावमुखेन यो व्यवहारः, स आत्मनि नोपपद्यते–इति न असौ कस्यचित् धर्मो, नापि कस्य कश्चित् धर्मः इति। ज्ञानं नाम यद्यपि बुद्धिरूपं तथापि न आत्मनो धर्मः–इति नैयायिकादितो भेदः। ननु स एव पुरुषोऽस्तु किमनेन ज्ञानेन–इति चेत् न, स हि शुद्धः प्रकाशः तेनैव वपुषा यदि अर्थानां प्रकाशः स्यात् तत् तस्य रूपस्य तृणमात्रेणापि अन्यूनाधिकरूपत्वात् सदा सर्वस्य अवभासनं, कस्यचित् वा कदाचिदपि अनवभासनं भवेत्–इति सर्वज्ञमज्ञं वा जगत् भवेत्। नच घटपटाभाससंभेदं चिन्मात्ररूपं पुरुषः सहते। नच संवेदनं विषयस्य स्वरूपं जडाजडयोः रूपयोर्विरोधात् पूर्ववत् सार्वज्ञ्याज्ञताप्रसङ्गात् च, तत् इदंविषयः प्रकाशते–इति यत् प्रकाशनं न तत्स पुरुषो नापि तत् नीलादि–इति पुरुषस्य प्रकाशरूपस्य छाया–इत्यायातम्।

---

पं० २ ग० पु० प्रतिबिम्बेन–इति पाठः।

प्रतिबिम्बोपग्रहश्च ज्ञानम् अस्य वृत्तिरूपं[३८] पूर्व-व्यपदेशतिरोधायकदध्यादिपरिणामविलक्षण-परिणतिविशेषात्मकम्। एवम् 'अर्थस्य' तावत् 'रूपं बुद्धिः' धारयति। इयच्च सत्त्वादीनां सुख-दुःखमोहतया भोग्यत्वात् जडम्—इति दर्पण-वत्[३९] अप्रकाशं। नच भोग्यस्य अप्रकाशस्य

---

३८ सम्यक् ख्यातिः प्रकृतिपुरुषयोः विवेकेन, संख्यानं च परिगणनं तत्त्वभेदानां संख्या, तदधिकृत्य कृतो ग्रन्थः सांख्यः, तत्र बुद्धितत्त्वस्य वृत्तिर्ज्ञानमुक्तम्। वर्तनं वृत्तिः परिणामविशेषः, पूर्वरूपं हि तिरोदधत् कश्चित् परिणामः काष्ठभस्मवत् स कार्यपरिणाम उच्यते। यस्तु अति-रोदधत् स धर्मपरिणामो, यः सिद्धाकारतया भाति सुवर्णस्येव कुण्डलता। यस्तु अतिरोदधत् साध्याकारत्वेन गच्छति, बुध्यते—इति स वृत्तिपरि-णामः। तथाहि—वर्तनं तस्यैव तथेति वृत्तिरुच्यते। अथवा बुद्धि-तत्त्वस्य जानामि—इत्येवंभूता जिघृक्षाप्रयत्नोपक्रमा विषयालोचनश-रीरा निश्चिनोमि—इत्यवसाना पूर्वापरीभूता, तावद्विषयाध्यवसायफलै-क्येन एका तद्धर्मिपरामर्शमतिरोदधती क्रियात्मा विशिष्टा परिणाम-परंपरा ज्ञानाख्या वृत्तिर्वर्तनं तथावस्थानमुच्यते, काष्ठस्य हि भस्म न वृत्तिः, काष्ठपरामर्शस्य तिरोधानात्, नापि एक एव क्षणो वृत्तिः, तत्र हि अयमित्थं वर्तते—इति को विभागः। तत् अनेक एव क्षणो धर्मिपरामर्शमतिरोदधत् फलबलेन कल्पितविचित्रमर्यादः क्रियात्मा परिणामो वृत्तिः, चैत्रे गच्छति इतिवत्। सा च वृत्तिर्विषयस्य अध्य-वसाये पर्यवसितरूपा पुरुषच्छायाबलेन प्रकाशरूपतामुपगता ज्ञान-मुच्यते।

३९ ननु सत्त्वं तावत् प्रकाशकं, तत्र चेत् विषयप्रतिबिम्बं पतितं जातो विषयप्रकाशताव्यवहारः, किमन्येन आत्मप्रतिबिम्बकल्पनेन—इत्या-शङ्कां वारयति 'दर्पणवदिति' स हि सत्त्वप्रकाशो बाह्यालोककल्पो जड इत्यर्थः।

तद्विरुद्धभोक्तृतारूपप्रकाशात्मकस्वभावसंभवो युक्त्यनुपाती—इति तद्विलक्षणेन भोक्त्रा भवितव्यम्। स च[40] प्रकाशः—इत्येतावत्स्वभावः, स्वभावान्तरं हि अप्रकाशरूपं भोग्यं कथं भोक्तुः स्वभावतया संभाव्येत। स च प्रकाशमात्रस्वभावत्वेनैव यदि विश्वस्य प्रकाशः, तर्हि विश्वं युगपदेव प्रकाशेत, घटप्रकाशोऽपि

---

४० ननु भोक्तैव अर्थादिभावमेत्य अर्थप्रकाशो भवतु इत्याशङ्क्य आह स च प्रकाशेति। इदमत्र तात्पर्यम्—मम प्रकटो घटः—इति आत्मन्येव उपसंहारदर्शनात् आत्मनिष्ठैव प्रकटता भविष्यति किं बुद्धितत्त्वेन—इति चेत् न, आत्मा संवित्स्वभावः साक्षात् द्रष्टा, केवलं तस्य विषयप्रकटता नाम यत् संविदोऽधिकं तज्जनकत्वं कथं स्वरूपं स्यात्। कथं तर्हि असौ विषयबोधेषु द्रष्टा साक्षी च—इति चेत् न, बुद्धावेव सत्याम्। ननु मा भूत् तत्र चिदात्मनि पुंसि किंचन अधिकं विकाराधायि, प्रकटतात्मकं फलं स एव तु भविष्यति, उच्यते निर्विकार एव असौ यदि नीलप्रकाशः स्यात् तर्हि नीलस्येव विश्वस्य तथा स्यात्, प्रकाश एव हि नीलप्रकाशः पीतप्रकाश इत्यायातम्। ननु आत्मच्छायावशात् विषय एव प्रकाशमानता अस्तु किमन्तरालकल्पितेन बुद्धितत्त्वेन, लोके च विषय एव प्रकटः—इति व्यवहारः। तथा च जैमिनीया अर्थदृष्टतामेव फलं मन्यन्ते। अत्र आह—यदि विषय एव प्रकटता उत्पद्यते तदा स विषयः तादृशो जातः स कथं कस्यचित् अतादृशः स्यात्, नहि कारणादुत्पन्नं रूपं कारणमेव प्रति तथा भाति, एवं हि कुम्भकारमेव प्रति कुम्भः कुम्भो भवेत् अन्यान् प्रति अकुम्भः, तस्मात् विषयः प्रकटः—इति बुद्धितत्त्वप्रतिबिम्बितस्य विषयस्य संवित्प्रतिबिम्बमेलनमेव इदमुच्यते, नतु बाह्यस्य प्रकटता काचित् धर्मः।

---

पं० १ ग० पु० प्रकाशात्मकसंभव इति पाठः।

पटप्रकाशः स्यात्—इति विश्वं संकीर्येत । स च अर्थात् अर्थप्रतिबिम्बात्, तदाधाराच्च बुद्धितत्त्वात् अन्यः कथम् अर्थस्य प्रकाशः स्यात्, असंबन्धात् । तस्मात्[41] बुद्धिरेव स्वच्छत्वात् प्रकाशप्रतिबिम्बमपि परिगृह्णाति । ततः प्रकाशप्रतिबिम्बपरिग्रहमहिमोपनतप्रकाशावे-

---

४१ यस्मात् न विषये प्रकटतालक्षणो भोगो विश्रान्तो, नापि आत्मनि, अस्ति च विषयात्मनोः भोगयोगव्यवहारः, ततो बुद्धिरूपं यत् सत्त्वं तस्य यतो नैर्मल्यं रजोऽपसारणसहिष्णुता तदीयतमोभागस्य, नतु नीलादाविव अनपसारणीयत्वं, ततो हेतोः उभयीमपि आत्मनो विषयस्य च संबन्धिनीं रूपच्छायां संवेदननीलमयतामनुकरोति, तदाकारधारितया भासते नीलरक्तपटमध्यगमितवस्त्रवत्, यत आत्मविषयप्रतिबिम्बं युज्यते ततो विषयबोधस्वभावो भोगः सिध्यति, स हि ग्राह्यस्य ग्राहकस्य च यो मेलनात्मा संबन्धः तद्रूपतयैव लक्षितो नान्यत् अस्य रूपमित्याशयः । ननु बुद्धौ यदि द्वयप्रतिबिम्बयोगः आत्मनो विषयस्य च कथं भोक्तृभोग्यव्यवहार इति । उच्यते, सा भोगसिद्धिः भोक्तृभोग्यभावे, आत्मा भोक्ता, विषयो भोग्यः—इति व्यवहारे हेतुर्यस्मात्, तस्मात् तयोरात्मविषययोर्भोक्तृभोग्यतायोग्ययोः बुद्धितत्त्वे संबन्धो यावद्भवति परस्पररूपमेलनात्मा वासगृह इव यूनोः यः स एव भोक्तृभोग्यभावः—इत्यादि सांख्यस्य बुद्धितत्त्वसद्भावे सर्वमुपपद्यते । यत आत्मा निर्विकारः, नच तादृक् असौ विषयप्रकाशः, विषयस्य च न प्रकटता नैसर्गिकी उपपन्ना, नच आत्मसंनिधानतः, नापि इन्द्रियसंनिधानमात्रात्, ततो बुद्धिसंज्ञकं स्वतन्त्रम् एवं-तत्त्वं वस्तुरूपम्, नतु आत्मनो धर्मो वैशेषिकवत्, नापि विषयस्य जैमिनीयवत्, न इन्द्रियाणां बार्हस्पत्यवत्—इति इयती सांख्यस्य मुख्या प्रमेयगतिः । अत उभयप्रतिबिम्बधारणात् असौ बुद्धिः अर्थस्य प्रकाशः तत्फलपर्यन्तोऽधिगम इत्यर्थः ।

श-बुद्धितत्त्वावेशितप्रतिबिम्बक-नीलाद्यर्थपर्य-न्तसंक्रान्तेः प्रकाशावेशस्य अर्थः प्रकाशते—इति सिद्धो व्यवहारः । तदेवं ज्ञानं जडबुद्धितत्त्वाव्यतिरेकात् जडमपि चित्प्रतिबिम्बयोगात् विषयस्य प्रकाशः—इति । एतदेवं[42] तावत् अनुचितम्—यत् प्रकाशात्मा पुमान् बुद्धौ प्रतिबिम्बम् अर्पयति, समानगुणे बिम्बकापेक्षया च विमले प्रतिबिम्बसंक्रान्तिदर्शनात्, रूपवति आदर्शे घटरूपप्रतिबिम्बवत्; आत्मबुद्ध्योश्च [43]अतिवैलक्षण्यम्, आत्मापेक्षया च न बुद्धि-

---

४२ बुद्धिप्रतिबिम्बवादस्य अनुपपत्तिः प्रदर्श्यते—एतदेवेति । अयमाशयः—स्वच्छमपि हि अधिकस्वच्छमपेक्ष्य अस्वच्छं नाधिकस्वच्छस्य प्रतिबिम्बं स्वीकरोति सितदुकूलमिव स्फटिकमणेः, तथा च बुद्धितत्त्वं पुरुषापेक्षया । तथाहि—आलोकोऽपि बुद्धिप्रकाशमपेक्ष्य अस्वच्छः, तथा सोऽपि पुरुषप्रकाशमपेक्ष्य पुरुषप्रकाशो हि सर्वतः स्वच्छः, तस्य अनन्यापेक्षणादेव संविद्रूपत्वम् यथा यथा हि स्फुटा वेद्यता तथा तथा स्वच्छताभावः । एवमधिकस्वच्छेन प्रतिबिम्बं स्वीक्रियते । अस्वच्छस्य प्रतिबिम्बस्वीकरणे यत् कारणं तद्विरुद्धमिह अस्वच्छत्वम्—इति कारणविरुद्धोपलब्धिः । एवं-वदतोऽयमाशयः—सौगत एव सांख्यमतं दूषयन् मत्पक्षस्यावकाशं दास्यति । सर्वतः स्वच्छे चिद्रूपे विश्वं प्रतिबिम्बितुमर्हति—इति सौगतस्यापि संविदि संवेद्यं प्रतिबिम्बमर्पयति ननु संवेद्ये संवित्—इति स्वपक्षसिद्धिराशये विपरिवर्तत एव ॥

४३ स्वच्छत्वं समानगुणत्वलक्षणं कारणं प्रतिबिम्बस्वीकरणे वस्तूनाम्.

---

पं० ७ ग० पु० पेक्षया विमल इति पाठः ।

**विमला, तत् भवतु तावत् एतत्—इति 'अथ'-शब्देन सूचयति ॥**

**किंतु[४४] प्रतिबिम्बवादेनापि न किंचित् प्रतिसमाहितं भवेत्—इति दर्शयति**

**[४५]अजडा सैवं जाड्ये नार्थप्रकाशता ॥ ८ ॥**

---

इति सिद्धं, तद्विरुद्धं च बुद्धेरात्मापेक्षया असमानगुणत्वम् अस्वच्छत्वं च कारणविरुद्धमुपलभ्यमानम् आत्मप्रतिबिम्बग्राहित्वस्य स्वविरुद्धकार्यस्य निषेधं करोति । अतिदूरवैलक्षण्यं धियः त्रैगुण्यात्मकत्वेन भोग्यत्वात्, आत्मनश्च नैर्गुण्येन भोक्तृत्वात्;—इति का समानगुणत्वे संभावनापीति भावः ।

४४ ननु सौत्रान्तिकाः संविदि नीलादिप्रतिबिम्बमुपयन्ति, नच सा तैः समानगुणा तद्वासनायोगात् अनादिप्रवृत्तात् समानगुणत्वं बुद्धावपि भविष्यति—इत्याशङ्क्याह,—किन्तु प्रतिबिम्बवादेनापि इति । अयमाशयः—एवं वदन् अपि इदं तावत् सांख्यः प्रष्टव्यः । विषयव्यवस्थापनं दर्शनपरामर्शात्मकं यदुच्यते तत् मुख्यामजडरूपां किं भोक्त्रीं चितिशक्तिमपेक्षते तां विना नो भवति—इति ओमिति चेत्, पुरुष एव तर्हि दर्शनपरामर्शनस्वभावोऽभ्युपगन्तव्यः किमनुपपद्यमानासंवेद्यमानबुद्धिप्रतिबिम्बितवादेन । अथ बुद्धिगतेन चित्प्रतिबिम्बेन तन्निर्वहति, तत्तर्हि जडमेव न चिद्रूपमिति बुद्धिरेव तादृशा तुर्येण गुणेन युक्ता कल्प्यतां, या विषयं व्यवस्थापयिष्यति—इत्यलं पुरुषकल्पनया । यदाह देवबलाचार्यः

'पुंसि कर्तृत्वमारोप्य बुद्धावपि चिदात्मताम् ।'

इति । अथ मुख्यचैतन्यमेव प्रतिबिम्बीभूतं तथा करोति—इत्युच्यते, तदयुक्तम्—अन्यत्र प्रतिबिम्बे तददृष्टेः, नहि दर्पणप्रतिबिम्बितो वह्निः तमेव दर्पणमपि तावत् तापयेत्, किमङ्ग इन्धनं दग्धुं प्रभवेत् । उक्तंच 'यज्जातीयेन प्रसिद्धाव्यतज्जातीयरूपेणैव भवितुं युक्तम्' इति बुद्धिपुरुषद्वयकल्पनमकिंचित्करमेव इति ।

४५ पूर्वसूत्रांशसंभावितसांख्योक्तौ दूषणमाह—अजडा सैवमिति ।

चैतन्यप्रतिबिम्बयोगे यदि तावत् तत्प्रतिबिम्बकमपि मुख्यं प्रकाशरूपमेव न भवति, तेनापि न किंचित् कृतं स्यात्; नहि प्रतिबिम्बितवह्निपुञ्ज आदर्शो दाह्यं दहेत् । अथ मुख्यप्रकाशरूपमेव तत्प्रतिबिम्बकं, तत् तर्हि बुद्धेरव्यतिरिक्तम्—इति मुख्यप्रकाशरूपैव बुद्धिर्जाता—इति, यतो विरुद्धधर्माध्यासात् भीरुभिः[४६] एतत् कल्पितं । स एव पुनः जाज्वल्यमानं निजम् ओजो जृम्भयति, ततश्च सा बुद्धिरेव चिन्मयी स्यात्, किं पुरुषेण । एवम् अर्थप्रतिबिम्बकद्वारेण अर्थमयी—इत्यपि आयातो विज्ञानवादः[४७] । कुत एव अस्याः तद्रूप-

---

एवं चैतन्यप्रतिबिम्बेन अजडा संविद्रूपा जाता, प्रकाशप्रतिबिम्बेनेव जलं प्रकाशरूपम् । एवं बुद्धिवृत्तिः चित्स्वरूपज्ञानात्मिका, ततश्च पूर्वोक्तनित्यत्वव्यापित्वादिदोषः, सांख्यदर्शनोचितदोषान्तरयोगश्च इत्याशयशेषः सूत्रान्तरकरणे । अथ तत्प्रतिबिम्बेपि न तद्रूपापत्तिः, अग्निप्रतिबिम्बेऽपि दर्पणस्य दाहकत्वादृष्टेः; तर्हि सा बुद्धिः अर्थचित्प्रतिबिम्बद्वयग्रहणेऽपि जडैव । तत् स एव दोषो विषयव्यवस्था ततः कथमिति सूत्रार्थः ।

४६ भोग्ये भोक्तृताध्यासो वा अचिद्रूपे चिद्रूपताध्यासो विरुद्धधर्माध्यासः, तस्मात् चकितैः सांख्यैः प्रकाशप्रतिबिम्बनं कल्प्यते ।

४७ विज्ञानवादिनो हि, निराकारस्य ज्ञानस्य अर्थप्रतिबिम्बद्वारेण साकारत्वं वदन्ति—इत्येतदेव योगाचारमतम् । यदुक्तम्

---

पं० १२ क०पु० आयातोऽर्थविज्ञानेति पाठः । ग० पु० तद्रूपमिति पाठः ।

त्वम् ?—इति, पूर्वकारणपरम्परातः—इति उत्तरं वाच्यम् । एवं सैव चेत् चिद्रूपा, प्राग्वत् नित्यताप्रसङ्गः; न चेत् चिद्रूपस्यापि नित्यता, तर्हि आत्मा न नित्यः कश्चिदस्ति, यस्य ज्ञानं नाम शक्तिः स्यात्—इति ज्ञानमात्रमेव अस्ति । योऽर्थप्रकाशरूपो बोधो, यश्च विकल्पस्मृत्यादिरूपः, तावता अर्थव्यवहारसिद्धेः—इति प्रसङ्गविपर्ययलाभे 'ज्ञानं च चित्स्वरूपं चेत्' इत्यादेः श्लोकद्वयस्य तात्पर्यम्[४८] ॥ ८ ॥

एवं ज्ञानं परीक्ष्य, क्रियां परीक्षते

**क्रियाप्यर्थस्य कायादेस्तत्तद्देशादिजातता।**
**नान्याऽदृष्टेः ॥**[४९]

'अथ स्वच्छतया पुंसो बुद्धिवृत्त्यनुपातिता ।
बुद्धेर्वा चेतनाकारसंस्पर्श इव लक्ष्यते ॥
एवं सति स्ववाचैव मिथ्यात्वं कथितं भवेत् ।
चिद्धर्मो हि मृषा बुद्धौ बुद्धिधर्मश्चितौ मृषा ॥
साकारज्ञानवादाच्च नातीवैष विशिष्यते ।
स्वत्पक्षः.............................. ॥'

इति । फलितमर्थं कथयति—एवमर्थप्रतिबिम्बकेति । तत्र पूर्वपूर्वानादिवासनाप्रबोधात् अर्थमयत्वमायातमिति ।

४८ एवं सूत्रद्वयोक्ताभियुक्तिभिर्यः प्रसङ्ग उक्तः, तद्विपर्ययेण अनित्यरूपस्य अन्यानाश्रितस्य ज्ञानस्य सिद्धिः ॥

४९ क्रियापरीक्षायै प्रथमं तावत् तद्वादिनां मते वस्तुस्वरूपप्रदर्शनम् ।

पं० ६ क० पु० विकल्पः स्मृत्यादीति पाठः ।

इह परिस्पन्दरूपं तावत् गच्छति, चलति, पतति–इत्यादि यत् प्रतिभासगोचरः, तत्र गृहदेशगतदेवदत्तस्वरूपात् अनन्तरं बाह्यदेशवर्तिदेवदत्तस्वरूपम्–इत्येतावत् उपलभ्यते,

---

तत्र कारकस्य फलसिद्धिहेतुभूतक्रियानिमित्तस्य स्वक्रियापेक्षया वा कर्तुः संबन्धी तत्समवायी तदात्मा वा व्यापारो रूपं स्वलक्षणं यस्याः सा क्रिया, यस्याः संबन्धिनो भागाः पूर्वापरीभूताः क्रमवृत्तयः। यदाह तत्रभवान् भर्तृहरिः

'यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वादभिधानं प्रतीयते ॥
गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥
श्वेतं श्वेतत इत्येतच्छ्वेतत्वेन प्रकाशते ।
आश्रितक्रमरूपत्वादभिधानं प्रवर्तते ॥
कार्यकारकभावेन ध्वनतीत्याश्रितक्रमः ।
ध्वनिः क्रमनिवृत्तौ तु ध्वनिरित्येष कथ्यते ॥'

इति । एवं-भूता च क्रिया आत्मनोऽस्त्येव गच्छति जानाति यतते–इति पूर्वापरीभूततत्तद्धर्मप्रतीतेः, अङ्गीकृता च ईश्वरात्मवादिभिः। यदाहुः ग्रन्थकारगुरुपादाः

'तविच्छा तावती तावज्ज्ञानं तावत् क्रिया हि सा ।'

इति ।

'एवं न जातुचित् तस्य वियोगस्त्रितयात्मना ।
शक्त्या································ ॥'

इति ।

'घटादिग्रहकालेऽपि घटं जानाति सा क्रिया ।'

इत्यादि च ।

---

पं० ३ ग० पु० गृहदेशकदेवदत्तेति पाठः। बाह्यदेशदेवदत्तेति च पाठः।

नतु तत्स्वरूपातिरिक्तां कांचित् अन्यां क्रियां प्रतीमः । 'देवदत्तो दिनं[50] तिष्ठति' इत्यत्र तु प्रभातकालाविष्टदेवदत्तस्वरूपं ततः प्रहरकालालिङ्गिततत्स्वरूपम्—इत्यादि भाति, 'दुग्धं परिणमते' इत्यत्र मधुरवस्तुरूपम् अम्लवस्तुरूपं द्रवरूपं कठिनरूपम्—इत्यादि[51] । एवं तद्देशतया तत्कालतया तदाकारतया च भाव एव भाति । सादृश्याच्च[52] तत्र प्रत्यभिज्ञा भिन्नेऽपि कायकेशनखादाविव । देशाकारान्यत्वे तु कालान्यत्वम् अवश्यंभावि देशकालान्यत्वेऽपि स्वरूपस्यैव[53] देशत्वात्, कालभेदे च

---

५० देशोपहितां क्रियां निरूप्य कालोपहितां तामाह दिनमिति । गमनादौ यद्यपि कालभेदोऽस्ति, तथापि स्थूलदृष्टिगम्यस्य देशभेदस्य तत्र असाधारणस्य संभवः—इत्यतः कालभेदः पृथक् उदाहृतः ।

५१ क्रियापि पूर्वापरीभूतावयवा एका कारकव्यापाररूपा न युक्ता, क्रमिकस्य अनेककालस्पृशः स्वात्मैक्यायोगात्, नापि कालक्रमव्यापी च एकस्वभावश्च तस्या आश्रयो युक्तः केवलं गमनपरिणामादिरूपा सा क्रिया कायादीनां तु तत्तद्भिन्नदेशकालगतापूर्वसत्तामात्रम्, एतदतिरिक्तस्य अन्यस्य अनुपलम्भात्—इति ।

५२ ननु सोऽयमिति प्रत्यभिज्ञानमेकत्रैव युक्तं, न देशादिना व्यवहिते—इति तत्राह—सादृश्यादिति ।

५३ स्वरूपस्यैव देशत्वात् इति, गमनक्रियायां देवदत्तसंबन्धिन्यां

---

पं० ७ ख० पु० भावा एव भान्तीति पाठः ।

स्वरूपभेदात्, देशकालाकारा आकार एव यद्यपि पर्यवस्यन्ति, तथापि स्थूलदृष्ट्या अस्ति भेदः-इति, ते हि भेदेन बौद्धैरुच्यन्ते-इति तात्पर्यम् । एवं प्रत्यक्षेण न दृश्यते क्वचित् क्रिया, तदभावात् न तत्पूर्वकेन[५४] अनुमानेन, कार्यं च ग्रामप्राप्त्याद्युत्तरक्षणरूपं तद्देशवस्तुरूपादि,-इति कार्यान्यथानुपपत्त्यापि न सा कल्प्या[५५] ॥

एवं प्रत्यक्षानुमानाभ्यां तस्या अदृष्टिः,-

---

देशभेदः, बहिर्देशसंबन्धान्तर्देशसंबन्धो देवदत्तस्य संभवति, कालभेदोऽपि क्रमगमनेनानुमेयः, आकारभेदश्च स्वरूपभेदापरपर्यायः संभवत्येव, यतो नीलति श्वेतते राजते दीप्यत इति स्वरूपभेदो देवदत्तस्य प्रतीयते, इति भेदत्रयविषयो न कश्चिद्विवादो गमनक्रियायाम् । परिणामक्रियायां तु मधुराम्लादिना स्वरूपभेदेनैव कालभेदोऽप्यस्ति, न तु तत्र देशभेदोऽनुभवगोचरः इति यद्यप्यस्ति तथापि देशस्यैव स्वरूपत्वम्-इत्यनादरो देशभेदस्य कालभेदेन कृत इति ।

५४ न तत्पूर्वकेनानुमानेनेति, प्रत्यक्षपृष्ठोपरिपातित्वादनुमानस्य, यत्र धूमस्तत्राग्निरिति साहचर्यनियमो व्याप्तिः, यथा महानसादौ प्रत्यक्षदृष्टत्वात् इति प्रत्यक्षपूर्वमेव अनुमानमिति ।

५५ कार्यान्यथानुपपत्त्येति, पीनश्चैत्रो दिवा न भुङ्क्ते इत्यत्र यथा पीनत्वेन कार्येण रात्रिभोजनम् अर्थापत्त्यनुमानेन कल्प्यते न तथा इहेति भावः ।

---

पं० ३ क० ग० पु० इति आदिपदम् इति पाठः ।

इति साधकप्रमाणाभाव उक्तः, बाधकमपि आह

........न साप्येका
क्रमिकैकस्य[५६] चोचिता ॥ ९ ॥

तत्र पूर्वापररूपता क्षणानां नतु स्वात्मनि किंचित् पूर्वम् अपरं वा, वस्तुमात्रं हि तत्, अतो विकल्पप्राणितं पूर्वापरीभूतत्वं क्रमरूपता क्रियाया लक्षणं न वस्तु किंचित् स्पृशति, ते हि क्षणा न अन्योन्यस्वरूपाविष्टाः—इति कथम् 'एका' क्रिया ?, क्रमो हि भेदेन व्याप्तः अभिन्ने तदभावात्, भेदस्य विरुद्धम् ऐक्यम्—इति कथं 'क्रमिका एका च' इति स्यात् ? । अथ एकत्र आश्रयेऽवस्थानात् एका, तत्रापि तत्क्षणातिरिक्तो न कश्चित् आश्रयोऽनुभूयते, क्षणा एव हि प्रबन्धवृत्तयो भान्ति । किंच तथाभूतैर्भिन्नदेशकालाकारैः क्रियाक्षणैराविष्ट आश्रयः कथमेकः स्यात् ?, अत एव 'देवदत्तोऽयं, स

---

५६ अयमत्राशयः—अनेककालस्पृक्त्वं हि क्रमिकता, एकश्च तत्कालोऽतत्कालश्च—इति कथं स्यात् इति ।

एव ग्रामं प्राप्तः' इति सादृश्यात् भवन्ती प्रत्यभिज्ञा न ऐक्यं वास्तवं गमयितुमलम् ॥ ९ ॥

एवं ज्ञानं क्रियां च परीक्ष्य, यस्मिन् सति ते संबद्धे सर्वज्ञत्व-सर्वकर्तृतारूपैश्वर्यप्रसाधनाय प्रभवतः, तं संबन्धं ध्वंसयितुं तद्विषयं प्रमाणाभावं तावदाह[५७]

तत्र तत्र स्थिते तत्तद्भवतीत्येव दृश्यते।
नान्यन्नान्योऽस्ति[५८] संबन्धः कार्यकारणभावतः ॥ १० ॥

---

५७ एवं ज्ञानक्रिये परीक्ष्य तद्योगात् ऐश्वर्यम्—इत्यत्र हेतौ योगशब्दवाच्यं संबन्धांशं परीक्षितुं संबन्धे तावत् साधकं प्रमाणं नास्ति—इति तत्र तत्रेति कारिकया कथयति। प्रसङ्गाच्च क्रियायामपि वक्तव्यशेषं परीक्षते। तथाहि—यदि कश्चित् ब्रूयात्—तत्तद्देशकालस्वरूपभिन्नं वस्तु संतानवृत्त्या प्रवहत् क्रिया—इति यत् उक्तं तत् आसनगमनादौ अस्तु, यत्र अकर्मकत्वं प्राप्यकर्मभावो वा; यत्र च निर्वर्त्यं घटादि कर्म, तत्र क्रियाकारकभावस्य अभावे कुम्भकृत् मृदो दण्डादिभिः घटं करोति—इति बोधः, तथैव अर्थक्रियापर्यन्तव्यवहारसिद्धः कथं स्यात्, तद्भावश्च क्रियया विना कथमिति सोऽपि अनेन सूत्रेण प्रत्याख्यते ॥

५८ इह नान्यदिति सामान्योक्तिरपि क्रियायामेव पर्यवसाय्यते तेन क्रियैव नास्ति इत्यर्थः, दृष्टान्तत्वेन च सा संबन्धे योज्यते इतीव दृश्यते, नान्यत्प्रत्यक्षम् इति सौत्रस्य एवकारस्य व्याख्या। दृश्यते इति प्रत्यक्षप्रमाणावसायमात्रम् एतावान् हेतुः यत एतावदेव दृश्यते किं व्यर्थमेव

ततो नान्यदिति न क्रिया न तत्संबन्धः कश्चिदस्ति इति संपद्य दृष्टान्त-साध्यनिर्देशः, तथा च वृत्तौ पृथगेव व्याचष्टे क्रियावचनक्रियाकारकसंबन्धः कश्चिदिति तेनैव नान्यन्नान्योस्ति इत्यत्र स्थितयोरन्यशब्दयोर्न पुनरुक्तिर्मन्तव्या, नान्यदित्यत्र पूर्वस्य दृश्यते इत्यस्य हेतुत्वं वृत्तावुक्तं भिन्नस्य व्यतिरिक्तस्य भस्य संबन्धस्य क्रियाया इव अनुपलम्भात्–इत्यनेन । ननु तत्र तत्र इति सप्तम्याक्षिप्तो यः प्रातिपदिकार्थातिरिक्तः संबन्धः स तर्हि किम् इत्याशङ्क्य यत् सूत्रं नान्योऽस्तीत्यादि तस्य संक्षेपेण निरूपणं कार्यकारणेति, एवं सप्तम्याक्षिप्तो यः स कार्यकारणरूप एव संबन्धः इह प्रकृते क्रियाकारकसंबन्धे नास्ति । ननु किं तत्र कारणं किं वा कार्यं, नियतपूर्वं कारणं नियतपरं कार्यं इति चेत् तदेव किम्? इति उच्यते, । अग्न्यभावे यो न भूतो धूमः तस्य अभूतस्यापि तस्मिन् अर्थान्तरस्वभावे अग्नौ सति यतो धूमस्य सद्भावः ततोऽसौ प्रयोजकसत्ताकः पूर्वः–इति व्यवह्रियते, प्रयोज्यसत्ताकस्तु परः–इति स्वरूपमेव तयोः पूर्वत्वं परत्वं च, न तु अन्येन प्रकारेण परस्परापेक्षापारतन्त्र्यरूपाश्लेषादिना कार्यकारणयोः परत्वपूर्वत्वलक्षणः कश्चित् कालोऽस्ति । तदुक्तम्

> 'पश्यन्नेकमदृष्टस्य दर्शने तददर्शने ।
> अपश्यन् कार्यमन्वेति विनाप्याख्यातृभिर्जनः ॥
> दर्शनादर्शने मुक्त्वा कार्यबुद्धेरसंभवात् ।
> कार्यादिश्रुतिरप्यत्र लाघवार्थं निवेशिता ॥'

इति । एवं क्षणिकज्ञानत्वात् सकृत्प्रवृत्तप्रत्यक्षानुपलम्भप्रसिद्धं भावस्वरूपद्वयमेव कार्यकारणभावः सार्वत्रिकः–इति सिद्धम् । पश्यन्नेकमित्यत्र अयमर्थः—एकं वह्निं कारणं पश्यन् धूमं कार्यं न पश्यति ज्ञानस्य क्षणिकत्वात् पुनरदृष्टस्य कार्यस्य धूमस्य दर्शने सति तस्य कारणस्य अदर्शनं, तददर्शने सति कारणमपश्यन् जनः कार्यमन्वेति उपदेष्टारं विनैव व्यवहाराय, एवं कार्यकारणभावमात्रं जानाति ।

अथ वा अयमर्थः—एकस्यैव कारणस्य पूर्वमदृष्टस्य दर्शने सति तदेव एकं कारणं पश्यन् पुनः कार्यदर्शने सति तददर्शनं कारणैकादर्शने तदेव एकं कारणमपश्यन् एकं कार्यं पश्यन् तदेव एकं कार्यमन्वेति,

मृत्पिण्डे सति स्तूपकः, तत्र सति शिविको यावत् घटः—इत्येवं भावक्षणा एव उपलभ्यन्ते, न अधिकं किंचित् प्रत्यक्षेण अवभासते, नापि अनुमानेन—इति क्रियायामिव वाच्यम्। सर्वत्र आधाराधेयभावादौ अयमेव पन्थाः— पृथग्रूपकुण्डबदरक्षणानन्तरं निरन्तरात्मकविशिष्टकुण्डबदरोदयः—इति। अयमेव च भावो भावान्तरेण सह नियतपूर्वापरतया विकल्पेन व्यवह्रियमाणः कार्यकारणभावः—इति अभिधीयते। नच ज्ञानक्रियाभ्यां सह आत्मनः कार्यकारणभावः आत्मनस्तत्कार्यत्वाभावात्, ज्ञानस्य च स्वसामग्रीकार्यत्वात्, क्रियायाश्च अभावात्,—इति न ज्ञानक्रियासंबन्धो यतो ज्ञातृत्व-कर्तृत्वे स्याताम्॥ १०॥

एवं प्रमाणं पराकृत्य, संबन्धे बाधकं सामान्यविशेषमुखेन निरूपयति

---

एवं प्रत्यक्षानुपलम्भबलेनैव कार्यबुद्धिसंभवात् अत्र कार्यकारणभावे कार्यकारणश्रुतिर्व्यवहारलाघवार्थं निवेशिता, वस्तुतो भावद्वयमेव कार्यकारणश्रुतिरित्यर्थः।

द्विष्ठस्यानेकरूपत्वात्-[59]
सिद्धस्यान्यानपेक्षणात्[60] ।
पारतन्त्र्याद्ययोगाच्च
तेन कर्तापि कल्पितः ॥११॥

संबन्धस्तावत् परस्परप्राप्तिरूपो द्वयोः प्राप्तिभाजोरेकस्तिष्ठति,—इति सामान्यलक्षणं । तच्च कथं, ? नहि एकत्र विश्रमिताशेषशरीरसारोऽन्यत्र विश्रमितुम् अलं, स्वरूपभेदप्रसङ्गात् । एतेन संयोगसमवायौ तन्मूलाश्च अन्येऽपि संबन्धा बाधविधुरां धुरम् अध्यारोपिता मन्तव्याः । योऽपि चेतनेषु तत्कल्पनया च अचेतनेषु पारतन्त्र्यात्मा संबन्धो व्यवह्रियते, तत्र सिद्धस्य न पारतन्त्र्यम् अस्ति सिद्धत्वादेव, असिद्धस्य न-तरां निःस्वरूपस्य

---

५९ पञ्चमीं नशब्दं च संगमयति पूर्वसूत्रेण संबन्धपदं, तद्यथा 'नान्योऽस्ति संबन्धः' द्विष्ठस्यानेकरूपत्वात् इत्यादिसंगतिः, तत्र सामान्यलक्षणद्वारं बाधकमुपन्यस्यति द्विष्ठस्येति, यत् किल द्वयोः स्वरूपसमाप्त्या युगपत् तिष्ठति तत् एकं न भवति वेश्मद्वयवर्ति घटद्वयमिव, एकत्वं हि अभिन्नरूपत्वं तद्विरुद्धेन च भिन्नरूपत्वेन व्याप्तं, द्वयोः युगपत्स्वरूपसर्वस्वेन अवस्थानात् ।

६० एवं सामान्येन द्विष्ठैकसंबन्धमात्रे बाधकमभिधाय तद्विशेषेऽप्यभिधित्सुराह सिद्धस्येति ।

**ताद्धर्म्यायोगात् । एवमपेक्षायामपि[61] वाच्यम् ।**
**द्वे च रूपे कथं श्लिष्यतो? द्वयोरेकत्वानुपपत्तेः[62];**

---

६१ इह, राज्ञ इत्युक्ते न प्रतीतिः निराकाङ्क्षा राजा इतिवत्, अपितु अन्यत् आकाङ्क्षति राजा, तत् सा आकाङ्क्षा क्वचित् संबन्धस्य वपुर्भवन्ती सार्वत्रिकत्वेन व्यवस्थाप्यते इति अपेक्षैव संबन्ध-इति व्यवह्रियेत तदेतदाशङ्क्याह अपेक्षायामिति, यथोक्तम् ।

'अपेक्षा पारतन्त्र्यं च न संबन्धो जडात्मनोः ।
असंभवात्\.......................... ॥'

इति । यत्रापि अजडेषु सा भवति, तत्रापि उक्तद्विष्ठसंबन्धलक्षणैकपदार्थरूपा नोपपन्ना; यत उपकारकरणात् संबन्धः कारणमेव स्यात्, अपेक्षितं च कार्यमेव, न च एतत् युक्तम् । यदुक्तम्

'अपेक्षा यदि संबन्धः सोऽसन् कथमपेक्षते ।'

इति । तस्मात् निःस्वभावस्य स्वभावः इति विरोधः ।

६२ यदपि राजा च पुरुषश्च-इति उदाहरणान्तराभिप्रायेण उच्यते परस्पररूपा प्राप्तिरेव अङ्गुल्योरिव संबन्धः इति, तत्र द्विरूपे कथं श्लेषः, अथ श्लेषः ऐक्यरूपात् कथं संबन्धता, तस्य द्विष्ठत्वात् । तदुक्तम्

'.......... द्वित्वे सति कथं भवेत् ।'

इति रूपश्लेषात्मा संबन्धः सूत्रे तावत् आदिशब्दोक्तः । आदिपदेन तन्त्रान्तरोक्तमपि सूचयति । यदाह तत्रभवान् भर्तृहरिः

'नाभिधानं स्वधर्मेण संबन्धस्यास्ति वाचकम् ।
अत्यन्तपरतन्त्रत्वाद्रूपं नास्योपदिश्यते ॥
उपकारात्स यत्रास्ति धर्मस्तत्रानुगम्यते ।
शक्तीनामपि सा शक्तिर्गुणानामप्यसौ गुणः ॥
तद्धर्मणोस्तु ताच्छब्द्यं संयोगसमवाययोः ।'

इत्यादि । एतच्च संबन्धस्तोत्रमात्रं न तु न्यायाभिधानम्,-इति न दूषितं ग्रन्थकृता । कार्यकारणभावश्च नात्र संगतः, तथाहि-आत्मा तावत् न कार्यः, ज्ञानमपि विषयेन्द्रियमनस्कारादेर्भवत् नात्मानं कारणीकुर्यात् ।

एकत्वे वा कः श्लेषः, ? तस्मात् ज्ञानसंबन्धात् 'ज्ञाता' इति यथा विकल्पकल्पितोऽर्थो न वस्तु तथा क्रियासंबन्धात् 'कर्ता' इत्यपि कल्पनाम[६३]मात्रम्—इति पूर्वपक्षः ॥ आदितः ॥ १६ ॥

इति श्रीमदाचार्याभिनवगुप्तविरचितायां प्रत्यभिज्ञासूत्रविमर्शिन्यां ज्ञानाधिकारे पूर्वपक्षविवृतिर्नाम द्वितीयमाह्निकम् ॥ २ ॥

---

'यस्मिन् सति भवत्येव यत्ततोऽन्यस्य कल्पने ।
तद्धेतुत्वेन सर्वत्र हेतूनामनवस्थितेः ॥'

इति न्यायात्; क्रिया च नाम न काचित्, न च कश्चित् तत्समाश्रयः । प्रकृत्या क्रिया प्रत्ययेन च कर्ता संबद्धौ वक्तव्यौ, न च अस्ति संबन्धः कश्चित् इत्यर्थः ॥

६३ अनुभवविकल्पनस्मरणादिज्ञानमालैव अस्ति, न तु ज्ञाता कश्चित्—इत्यर्थस्य प्राक् प्रसाधितत्वात्, एवं क्रियाया अभावात् कर्तापि कल्पितः—इति क्रियाकारकादीनां तावन्मात्रलक्षणस्य उपकल्पितत्वात्, कथमात्मा सर्वेश्वरः, के ज्ञानक्रिये, तदभावात् कथमैश्वर्यव्यवहारसिद्धिः—इति धर्मिहेत्वसिद्धिं समर्थयता सिद्धान्त्युक्तस्य ऐश्वर्यव्यवहारसिद्धौ स्वभावहेतोरभावं वदता बौद्धेन 'ज्ञानसंततिमात्रमेव आत्मा' इति प्रसाधितम् ॥

## अथ तृतीयमाह्निकम् ।

विना येन न किंचित्स्यात्समस्ता अपि दृष्टयः ।
अनस्तमितसंबोधस्वरूपं तं स्तुमः शिवम् ॥

एतस्मिन् पूर्वपक्षे[1] यदुक्तं स्मृतेः संस्कारमात्रादेव सिद्धिः—इति, तदेव दूषयितुं

'सत्यं.............................।'

इत्यादि

'.....ज्ञानस्मृत्यपोहनशक्तिमान् ॥'

इत्यन्तं श्लोकसप्तकम् । क्रियायां संबन्धे च

---

१ अथ अस्मिन् पूर्वपक्षे अधिकारद्वयेन सिद्धान्तो निरूप्यते यदुक्तं 'ननु स्वलक्षणाभासं' इत्यादिना पीठबन्धं विरचय्य 'संस्कारात् स्मृतिसिद्धौ स्यात् स्मर्ता द्रष्टेव कल्पितः' इति तत् ज्ञानविचारोऽयमधिकारः, क्रियासंबन्धविचारस्तु द्वितीयेऽधिकारे भविष्यति । ज्ञानशक्तियोगात् ज्ञाता ज्ञानाधिकारे, क्रियाशक्तियोगात् कर्ता क्रियाधिकारे दृढीक्रियते । वस्तुतो ज्ञानाधिकारप्रक्रमेण समस्तशास्त्रार्थोपक्षेपः । ज्ञानमुखेन कर्तृत्वसमर्थनात् शुद्धस्वातन्त्र्यरूपमेवैश्वर्यमिति दर्शितमादिसिद्धसूत्रे । तथाहि ज्ञानविषयं यत् यथारुचि संयोजनवियोजनलक्षणं स्वातन्त्र्यं प्रकाशविमर्शद्वयसारतया, तत्र प्रकाशभागमात्रं प्रधानीकृत्य ज्ञानाधिकारो विचार्यते, क्रियाधिकारस्तु विमर्शप्राधान्येन । नहि एकांशद्वारेण धर्मिणि पूर्ण एव प्रवेश इति । तेन कर्तृत्वं शुद्धस्वातन्त्र्यरूपं पूर्णमिह समर्थनीयम् । तत्र ज्ञानक्रियाविचार उपायमात्रम् ।

दूषणोद्धरणं द्वितीये क्रियाधिकारे भविष्यति । यत्तु परेण व्यतिरिक्तं ज्ञानं काणादसांख्यादिदृष्टौ निराकृतं तदभिमतमेव ग्रन्थकृतः—इति तत् दूषणान्तमेव । तत्र श्लोकद्वयेन ज्ञानस्य स्वसंवेदनरूपतया अनुभवस्य स्मृतौ अप्रकाश्यत्वं दर्शितं संस्कारजत्वेऽपि । ततः श्लोकद्वयेन स्मृतेः भ्रान्तित्वम् आशङ्कापूर्वकं पराकृत्य तृतीयेन प्रसङ्गात् सर्वाध्यवसायानामपि भ्रान्तित्वाशङ्का शमिता । ततः सत्यपि संस्कारे स्मृत्यनुपपत्तौ [२]व्यवहारोच्छेदः,—इति श्लोकेन उक्त्वा स्वपक्षे तदुपपत्तिः,—इति श्लोकेन उक्तम्—इति तात्पर्यम् । ग्रन्थार्थस्तु निरूप्यते

२ सत्यपि संस्कारे परदृशि स्मृतिरयुक्तेति व्यवहारलोप इति ।

पं० ४ घ० पु० दूषणान्तरमेवेति पाठः ।

पं० ५ ग० पु० द्वयेन प्रकाशस्येति पाठः ।

पं० ६ क० पु० अप्रकाशत्वमिति पाठः ।

पं० ८ क० ग० पु० पराकृतं ततस्तृतीयेति पाठः ।

पं० १२ क० ग० पु० उक्तं तात्पर्यमिति पाठः ।

सत्यं किंतु स्मृतिज्ञानं
पूर्वानुभवसंस्कृतेः।
जातमप्यात्मनिष्ठं त-
न्नाद्यानुभववेदकम् ॥ १ ॥

पूर्वपक्षमध्यात् मया तावत् बहु अङ्गी-कर्तव्यम्,—इति 'सत्यम्' इत्यनेन दर्शितम्, यत्तु न अङ्गीकर्तव्यं तत् दूष्यते,—इत्येतदुक्तं 'किंतु' इत्यनेन विशेषाभिधायिना। इह

३ तत्र पूर्वपक्षे सर्वात्मना शमयितव्ये नेति प्रयुज्यते, ईषदङ्गीकार्ये उच्यते इति, ईषन्निराकार्ये सत्यं किन्तु इति एषा प्रेक्षापूर्वकप्रयोग-शालिनां शैली। शीले भवा शैली समाधानपूर्विका प्रवृत्तिरिति कैय्यटः। इह च प्रेक्षापूर्वकप्रयोगशालित्वात् अत्रभवत आचार्यस्य तथैवो-पयोगः, इत्याह तदाशयज्ञः तावद्बह्वङ्गीकर्तव्यमिति। यच्च सांख्यकाणा-दादिदर्शनोक्तं व्यतिरिक्तं ज्ञानं नोपपद्यते—इति तदभीष्टमेव प्रयासं विना ग्रन्थकृतः, इत्याचार्यः पूर्वपक्षवादिनं प्रति सुहृद्भूत्वानुमोदते 'सत्य-मित्यादिना।

४ इह अनुभवमुखेन सुखहेतुतां निश्चित्य स्मरणात् उपादत्ते इति व्यवहारः। तत्र अनुभवसंस्कारात् स्मृतौ विषयप्रकाशः समर्थितः। न च तावता किंचित् अनुभवस्य अप्रकाशे तदित्येवं-रूपाभावात्, अनु-भवप्रकाशश्च न घटते संस्कारजतायामपि इति प्रकरणे तात्पर्यार्थः। तदाह सूत्रं,—स्मृतिज्ञानमिति। स्मृतिरूपं ज्ञानं पूर्वानुभवसंस्कारात् यद्यपि जातं, तथापि आत्मनि स्वरूपे निष्ठा विश्रान्तिः यस्य तादृशं, न तु आद्यस्यानुभवस्य ज्ञापकं तत् भवति। नहि तत् तेन सह आत्मानं मिश्रयति इत्यर्थः।

स्मृतौ विषयमात्रस्य प्रकाशो न समर्थनीयो वर्तते यः संस्कारादेव सिद्ध्येत्, किंतु अनुभवप्रकाशेन विना 'तत्' इत्येवं-रूपा कथं स्मृतिः स्यात्, कथं[5] च तया विना अभिलाषेण [पेन] व्यवहारः स्यात्?, अनुभवेन हि अस्य सुखसाधनता निश्चिता, तत उपादानम्; तत्र पूर्वानुभवजनितात् संस्कारात् एतावत् जातम्—यद्यपि तज्ज्ञानं विषयेण न जनितं, तथापि तद्विषयम्—इति । नच एतावता किंचित्, आत्मनिष्ठे स्वप्रकाशज्ञाने विषयस्येव अनुभवस्य प्राच्यस्य अप्रकाशनात् ॥ १ ॥

ननु[6] संस्कारजत्वादेव प्राच्यमनुभवमपि विषयीकुरुतां स्मृतिः—इत्याशङ्क्याह

---

५ अनुभवविषयत्वेन अवभासाभावात् स्मरणादभिलाषेण [पेन] या प्रवृत्तिरुपादानादिका सा न स्यात् । पूर्वानुभवस्य यो विषयः तेन यदि स्मृतिविषय एकतां नीयते तदासौ उपपद्यते । तथाहि कपित्थमवलोक्य सुखसाधनमिदम् इति स्मृत्वा उपादत्ते, सुखं च पूर्वानुभवैकलभ्यमस्यां स्मृतौ न किंचिदस्ति ॥

६ ननु मा भूत् परविषयस्य स्वीकारो, यस्तु संस्कारमहिमोपनतोऽध्यात्मसिद्धश्च मम अनुभवोऽभवत्—इति स्मृतावनुभवस्य अवभासः स किं नाङ्गीक्रियते—इत्याशङ्क्य तन्निराकरणहेतुतया इगिति सूत्रमित्यर्थः ॥

---

पं० ६ ख० पु० उपादानादिति पाठः ।

पं० १० ख० पु० स्वप्रकाशे ज्ञाने इति पाठः ।

दृक्स्वाभासैव नान्येन
वेद्या रूपदृशेव दृक् ।
रसे संस्कारजत्वं तु
तत्तुल्यत्वं न तद्गतिः ॥ २ ॥

'दृक्' ज्ञानं, तच्च जडात् विभिद्यते स्वप्रकाशैकरूपतया, जडो हि प्रकाशात् पृथग्भूतो वक्तव्यः, तेन दृक् 'स्वाभासा'

---

७ दृक् ज्ञानं सा स्वस्यैव आभासः स्वस्याभासनं नाम तस्यैवेति। न च अस्या अप्रकाशमानं रूपमस्ति—इति प्रकाशश्च अस्याः परप्रसादोपनतोऽपि भवेत् । सदा प्रकाशमानत्वेपि च नीलाद्याकारच्छायाकल्पं द्वितीयमपि अप्रकाशमानं रूपं स्यात्—इत्यवधारणद्वयमेतत् । तेन स्व एव अस्या आभास एव, स्वस्या आभास एवेति वा—इत्येवं वैयधिकरण्यसामानाधिकरण्याभ्यां यदीयः स्वभावः प्रकाशेन सर्वस्य नियम्यते सा जडाद्भिद्यते । तदत्र नियमोपलक्षितेन अनेन लक्षणेन अन्यवेद्यत्वं निराकृतम् । रसे रसविषया दृक् यथा नान्येन रूपादिज्ञानेन वेद्या, तद्वत् सर्वां दृक् नान्येन ज्ञानेन वेद्या । अनुभवश्च दृग्रूपः—इति न स्मृतिज्ञानेन वेद्यः । संस्कारेण तर्हि किं कृतम् इत्याह, विषयस्य जनकस्याभावात् निर्विषयतायां प्राप्तायां सविषयतारूपं तत्तुल्यत्वं तेन कृतम्, उपचारात् तु कार्यकारणयोरभेदेन निर्देशः । उपचारे प्रयोजकं कार्यान्तराभावेन तदेकप्रवणताधिगमः, न तु तदवगमरूपत्वं पूर्वानुभवाभासकत्वं, संस्कारजन्यं तत्तुल्यत्वमपि वस्तुचिन्तयोच्यते । तस्य तु गतिरवगमो नोपपद्यते, स्मृत्यनुभवयोः हि कः तृतीयः सादृश्यमध्यवस्येत् । तौ च अनन्योन्यदृशानौ न सादृश्यमधिगच्छतः—इति सूत्रार्थः ।

८ स्वाभासैवेति नियमश्चतुर्धा व्याख्यातः टीकाकृता । तथाहि स्वरूपस्यैव स प्रकाश इति व्याख्यातं, स्वात्मनः प्रकाश इति । अप्रकाशमा-

आभासः प्रकाशमानता सा स्वं रूपमव्यभिचारि यस्याः, स्वस्य च आभासनं रूपं यस्याः। सत्यपि बाह्ये तच्छरीरसंक्रान्तं न प्रकाशनं ज्ञानस्य रूपं भवितुमर्हति, परप्रकाशनात्मकनिजरूपप्रकाशनमेव हि स्वप्रकाशत्वं ज्ञानस्य भण्यते। ननु स्वाभासमेव सत् तत् अनुभवज्ञानं स्मरणे भासिष्यते, न—इत्याह 'नान्येन वेद्या'। परत्र यदि दृक् भासेत तर्हि न सा स्वाभासा, इदमेव हि स्वप्रकाशस्य लक्षणं—

---

नमस्या न रूपमिति व्याख्यातं, स्वात्मास्य प्रकाश इति। कदाचिदपि नास्याः प्रकाशः परप्रसादोपनत इति विवृतं, स्वात्मन एव प्रकाशते, न परस्येति। नीलाद्याकारान्तरमस्या न रूपमिति विवृतं, परोऽस्य न प्रकाश इति। परो हि यो नीलादिः सोऽस्य कथं प्रकाशात्मकरूपः स्यादित्यर्थः।

९ अन्यवेद्यतायां हि स्मृतिज्ञानस्य तावदनुभवज्ञानं पारम्पर्येण कारणमिति यदि विषय उच्यते, तत् रूपज्ञानस्यापि रसादिज्ञानं समनन्तरत्वेन परम्परया वावश्यं कारणमिति रूपज्ञानेनापि अशेषाणि रसगन्धादिज्ञानानि विषयीक्रियेरन्। एकज्ञातृसमवेतपदेन बौद्धमते कारणत्वेन विशिष्टं, काणादमते तु एकार्थसमवायेन विशिष्टं ज्ञानत्वमविशिष्टं सूचितं। तेन एकसमवायिज्ञानत्वविशेषादिति मन्तव्यं, न तु ज्ञानत्वाविशेषमात्रात्। एवं हि निर्मलमभिधीयमाने सति वासुकिज्ञानाद्यपि अस्मदादिज्ञानस्य विषयो भवेदिति सर्वः सर्वज्ञः स्यादित्यादिः भूयान्विप्लवः।

---

पं० ४ ख० पु० ज्ञानस्य स्वं रूपमिति पाठः।

पं ५ क० घ० पु० स्वपरप्रकाशत्वमिति पाठः।

स्वयं हि यदि प्रकाशेत तदा परेण सह असंबन्धात् संबन्धप्राणा कथं 'परत्र' इति सप्तमी संगच्छताम्; तथा च रूपज्ञानेन 'रसे दृक्' रसविषयं ज्ञानं न वेद्यते, एवं हि चक्षुषैव रसः फलतो गृहीत एव स्यात्। ननु यदि न आभाति स्मरणेऽनुभवः किं तर्हि संस्कारेण कृतं स्यात्, रूपज्ञानं न रसज्ञानजात् संस्कारात् जातं, तत् कथम् अयं प्रसङ्गः, तस्मात् संस्कार एव भवत्संभावितदोषभङ्गाय प्रभवेत्; नैतत्, यतो हि असौ तत्संस्कारसंस्कृतात् समन्तरप्रत्ययात् उत्थितः स्मृतिबोधः, तेन तत्सदृशो भवतु शाखासंनिवेश इव पूर्वसंनिवेशतुल्यः, नतु यो यत्संस्कारात् जातः स तस्य वेदनस्वभावो भवति–इति युक्तम्। सदृ-

---

१० अन्योन्यवेदनेऽन्योन्यविषयवेदनमपि स्यात्। तथाङ्गीकारादिन्द्रियनियमो हीयेत। स हि त्रिविधः प्रसिद्धः। इन्द्रियबलाद् ज्ञानस्य कार्यस्य नियमः, चक्षुर्जनितं हि ज्ञानं रूपस्यैव प्रकाश इति। इन्द्रियस्य च नियमो योग्यतात्मा येन नयनं रूपज्ञानमेव जनयति नान्यदिति। इन्द्रियाणां च नियम इयत्ता षड् इन्द्रियाणीत्यादिः।

---

पं० ४ ग० घ० पु० विषयज्ञानमिति पाठः।

शत्वस्यापि गतिरवगमः कथम्?, नहि अनुभवज्ञानं सादृश्यं गमयति, नापि स्मृतिज्ञानं, परस्परम् असंवेदने द्वयनिष्ठसादृश्याध्यवसायायोगात्, अन्यस्य च तदुभयवेदनरूपस्य अभावात्,—इति संस्कारात् परं सविषयतामात्रं स्मृतेः सिद्धं, नतु अनुभवविषयत्वं, नापि अस्य विषयस्य पूर्वानुभवविषयीकृतत्वम्—इति निश्चय एषः ॥ २ ॥

ननु यदि स्मृतिज्ञाने अनुभवस्य सत्यतः प्रकाशः स्यात्, तन्मुखेन च तद्विषयस्य, तदा भवेत् भवदुक्तेरवकाशः, यावता स्मृतिर्विकल्परूपत्वात् केवलमप्रकाशमानमेव अनुभवं

---

११ यत् वस्तु स्थितं प्ररूढं भवति तदवश्यं संस्कारमाधत्ते । यत्र च संस्कार आधीयते तत्र साहश्यमित्युभयं भूर्जसंनिवेशशरगमनादौ दृष्टम् । इह च पूर्वज्ञानं स्थितमभूत्, तदवश्यं संस्कारसादृश्याभ्यां भाव्यमिति कल्प्यते, न तु सादृश्यं ज्ञातुं शक्यं । द्वयवेदी हि क्वापि अक्रमेणैव संनिवेशद्वयं गोगवययोरिव क्वचित् क्रमेण भूर्जं इव परापररूपं पश्यन् तृतीयः तत्सादृश्यमवेयात् । नतु इह तृतीयोऽस्ति । स्थिरमात्मानमभ्युपयतापि वैशेषिकेण दुःसमर्थमेकविषयत्वं । स्मृत्यनुभवयोर्हि न ग्राहकं तृतीयं ज्ञानमस्ति, यत् तयोः सादृश्यमवगच्छत् एकविषयतामध्यवस्येदुपचरेद्वा ।

---

पं० ६ ग० पु० मात्रस्मृतेरिति पाठः । क० पु० विषयित्वमिति पाठः ।

तद्विषयं च अध्यवस्यति, तत् इयं भ्रान्तिस्वभावा, तत्र कोऽयं निर्बन्धः,? तदेतत् दर्शयति शङ्क्यमानत्वेन

अथातद्विषयत्वेऽपि[12]
स्मृतेस्तदवसायतः ।
दृष्टालम्बनता भ्रान्त्या[13]
........................ ॥

न तद्दर्शनं नापि तद्विषयः स्मृतेर्विषयः, तथापि तु उभयम् अध्यवसीयते, भ्रमरूपतया स्मृतेः ॥

---

१२ न तावनुभवतद्विषयौ विषयो यस्याः, असोऽसन् वा आत्माकारो वा विषयो यस्याः, स च अर्थोऽनुभवश्च विषयो न यस्या इति वा विग्रहः ।

१३ ननु यदि स्मृत्यनुभवयोरेकविषयत्वं पारमार्थिकं भवेत् तत्समर्थनायां प्रयस्येतापि, न तु तथा । तथाहि यस्तावत् अतीतः पिता स्मरणे भाति स तदा नष्टः कथं स्मरणे यायात् । यथा स निर्दग्धः पिता न हसति न कण्डूयति तथा भात्यपि न–इति निश्चयः । न च अस्य वर्तमानातीतकालद्वययोगः पितुर्विरोधात्, अभ्युपगमे च सर्वतो व्यावृत्तं रजतं कथमन्यत्रापि अनेकं स्यात् । भ्रमश्च सः, नच असावस्फुटः स्मर्तुः पित्राभासो देशकालस्वरूपानियतः तद्विपरीतेन आनुभविकेनाभासेन एकतामुपगन्तुमुत्सहेत । तेन अनिर्भासमान एव तस्मिन् विषये अभिमानरूपात् तदध्यवसायात् तदवभासिकेति स्मृतिर्दृष्टविषया उच्यते भ्रमवशादिति कारिकापादत्रयार्थः ।

एतत् निराकरोति

तदेतदसमञ्जसम्[14] ॥ ३ ॥

अत्र कारिकया उपपत्तिम् आह

स्मृतितैव कथं ताव-[15]
द्भ्रान्तेश्चार्थस्थितिः कथम् ।
पूर्वानुभवसंस्कारा-
पेक्षा च किमितीष्यते ॥ ४॥

अनुभूतस्य अनुभवप्रकाशितस्य विषयस्य

---

१४ स्मृतिरसदेव असत्ख्यातिपक्षे आलम्बते, वासनोपकल्पितं वा ज्ञानाकारम् आत्माख्यातिपक्षे आभासयति, न तु प्राच्यमनुभवं तद्विषयं वा, उभयस्यापि स्मृतिकाले नास्तित्वात् । तत् केवलमभिमानसारत्वेन अध्यवस्यति तदनुभवकालावलम्बनेन अध्यवसायस्य स्वरूपं दर्शयति सोऽनुभूत इति । स इत्यनुभवकालस्पर्शः अनुभूत इति अनुभवस्य अर्थस्य च अध्यवसायः, असतोऽप्यात्मनो निर्भासमानस्य तेनानुभूतेन अध्यवसीयमानेन अभेदानध्यवसायमयात् अभेदाध्यवसायात् भ्रमात् अनुभूतालम्बनत्वं स्मृतेः न विवेकिनः प्रतियन्ति ।

१५ कथम् इति पदं सर्वतोमुखं पूर्वोक्तमेतन्निराकरोति समस्तोक्तवस्तुदूषणद्वारेण, तथाहि—अन्यत्र किंचिन्निराक्रियते, यथा श्रोत्रग्राह्यो वर्णात्मा नित्यः शब्दः समयापेक्षी वाचक इत्यत्र नित्यत्वमेव निराक्रियते नान्यत्, तदंशदूषणेन तु वाक्यार्थोऽयं दूषितो भवेत् । इह तु स्मृतिः संस्कारजा भ्रान्त्या पूर्वानुभूतार्थव्यवस्थापिकेति प्रतिपदार्थं तद्द्वारेण च वाक्यार्थः—इति सर्वमेतत् निराक्रियते । यः स्वरूपविशेष इह विचारचित्रे भित्तित्वेन अवलम्ब्यते स एव नोपपद्यते इति तावच्छब्दार्थः ।

अप्रमोषो[१६]ऽनपहारः तथैव प्रकाशनं यत् एतत् स्मृतेः आत्मीयं रूपं तथा-प्रकाशनाभावे विघटेततमाम् । किंच भ्रान्तौ असद्वा आत्माकारो वा प्रख्याति, नतु तया अर्थः स्वीक्रियते तस्य अप्रकाशनात्,—इति तया अर्थो न व्यवस्थापित एव । प्रकाशनात्मा हि व्यवस्थापना, ततश्च स्मरणादभिलापेन कथम् अर्थविषयो व्यवहारः ?; नच तदप्रकाशने संस्कारजत्वेन किंचित् कृत्यं, तद्धि सादृश्यं लब्धुम् अवलम्ब्यते; नच अनुभवेन विषयप्रकाशनात्मना स्मृत्यभिधानाया भ्रान्तेः किंचिदपि सादृश्यम् अस्ति, सर्वथा विषयमस्पृशन्त्याः ॥ ४ ॥

ननु योऽनुभवो यश्च तद्विषयः स यतः तया अध्यवसीयते, ततः अंशात् सादृश्यम्

---

१६ अनुभूतस्य विषयस्य असंप्रमोषः कंचित् कालं मध्ये मुषितस्येव न पूर्णः प्रमोषोऽपहारः पुनः प्रकाशनेन लाभादिति स्मृतेः मुख्यं रूपं, येन ज्ञानान्तरेभ्योऽस्या विशेषः, तदेव पूर्वसूत्रार्थेन उन्मूल्यते अनुभवो न प्रकाशते तद्विषयोऽपि नैव प्रकाशते अपि तु सम्यक् प्रकर्षेण मुषित इवासौ जातः इति ।

---

पं० ७ ख० ग० पु० अभिलाषेणेति पाठः ।

अनुभवेन स्मृतेः, तत्सिद्धये च संस्कारपरिग्रहः । 'अध्यवसीयते' इति किम् उच्यते ? 'प्रकाश्यते' इति चेत् न भ्रान्तित्वं; 'न प्रकाश्यते' इति चेत् पुनरपि विषयो न स्पृष्ट एव अनया,—इति सादृश्यमपि शब्दगड्डुमात्रम्; तदेतत् दर्शयितुमाह

> भ्रान्तित्वे चावसायस्य
> न जडाद्विषयस्थितिः[१८] ।

इह स्मृतेः अन्यस्य वा भ्रान्तिबोधस्य

---

१७ स्मृतिज्ञानं प्रतिभासमानरूपे स्वसंवेदनमध्यवसीयमाने पुनः पूर्वानुभूतार्थो विकल्पः इति स स्वसंवेदनं सोऽस्य न भ्रान्तः, नापि अनुभूतार्थव्यवस्थाहेतुः तस्याभिन्नत्वात् विकल्पेऽध्यवसायस्तु स्यात् अर्थव्यवस्थापनं यावता भ्रान्तिरसौ, भ्रान्तस्यापि अवसायस्य विषयव्यवस्था न युक्ता—इत्याह भ्रान्तित्वे चेति । तथा भ्रान्तस्यापि अध्यवसायस्य जडत्वात् विषयव्यवस्थापकत्वं न युज्यते, व्यवस्थापनं हि वस्तुतो नः संवेदनमात्मनि तद्वाचकशब्दोदीरणे च श्रोतृषु तथाभूतार्थाकारे संवेदनोत्पादनार्थम् । तथा च आर्यधर्मकीर्त्तिः

> 'संविन्निष्ठा हि विषयव्यवस्थितयः ताः कथमचेतनोऽर्थो व्यवस्थापयेत् ।'

इति ।

१८ प्रतिप्रमातृ व्यवस्थितत्वं तावन्निष्पते तस्य भावस्वरूपत्वे भेदो न स्यात् प्रमात्रा व्यवस्थापितोऽर्थः सर्वान्प्रमातॄन्प्रति व्यवस्थितः स्यात् न चैवं तदा तथाभूतवस्तुसंवेदनरूपत्वलाभः प्रमातुर्व्यवस्थापनम् अतो जडोऽध्यवसायस्तथा स्यात् तदाह न जडाद्विषयस्थितिः इति ।

स्वसंवेदनांशे[19] प्रकाशमाने न भ्रान्तिता, तत्र वैपरीत्याभावात्; यस्तु तत्र अध्यवसीयते स्वाकारः स विपरीततया[20] अस्वाकारत्वेन अर्थतया,—इति तत्र अंशे भ्रान्तिता। स च अंशोऽर्थलक्षणो न स्मृत्या अन्यया वा भ्रान्त्या स्पृश्यते, तत्र असौ तूष्णीका,—इति बलादेव तत्र अंशे जडत्वम् अस्या आयातं घटज्ञानस्येव पटे। नच जडेन विषयस्य किंचित् कृत्यम्, ततश्च अर्थविषयो व्यवहारो विलुप्येत।

ततोऽजाड्ये[21] निजोल्लेख-
निष्ठान्नार्थस्थितिस्ततः ॥ ५ ॥

अथ तु तम् अवसायरूपं स्वसंवेदनांशं स्वाकारं वा अवलम्ब्य अजडत्वम् अस्याः, एवमपि 'अजाड्ये निजं' स्वसंवेदनम् 'उल्ले-

---

१९ इदमिति निर्विकल्पांशे।

२० नहि शुक्तौ रजतज्ञानेन सत्यरजतस्य शुक्तेर्वा व्यवस्था काचित्।

२१ ननु केनैवमुक्तं—जडोऽध्यवसायः संवित्स्वभावो ह्यसौ ज्ञानाव्यतिरेकात् इत्याह तत इत्यादि। निजं च उल्लेखश्च इति द्वन्द्वः। निष्ठादिति ल्यब्लोपे पञ्चमी। ततः स्मृत्यध्यवसायत इति।

स्वश्च' स्वाकारः—इति इयति एषा परिनिष्ठितो[22] स्मृतिः,—इति विषयस्य नामापि ग्रहीतुम् अशक्नुवतः 'ततः' स्मृत्यध्यवसायात् कथं विषयस्य व्यवस्थापनं व्यवहार्यत्वसंपादनसामर्थ्यम्? ॥ ५ ॥

संस्कारे सत्यपि स्मृतिः न कथंचन घटते, ततश्च परस्परसङ्गतिहीनानि सकलानि ज्ञानानि,—इति यदुक्तं श्लोकपञ्चकेन तत् इदानीं प्रकृते योजयति

एवमन्योन्यभिन्नाना-
मपरस्परवेदिनाम्।
ज्ञानानामनुसंधान-[23]
जन्मा नश्येज्जनस्थितिः ॥ ६॥

'जनस्य' लोकस्य या काँचन[24] 'स्थितिः' व्यवहारः सा सर्वज्ञानानां यत् 'अनुसंधानं'

---

२२ परिनिष्ठिता नियता।

२३ ज्ञानानामिति अनुसन्धानापेक्षयात्र षष्ठी।

२४ काचन आन्तरबाह्यरूपा।

---

पं० १४ घ० पु० काचन व्यवहारस्थितिरिति पाठः।

एकविषयभावोपपन्नस्मृतिताप्राप्तिरूपं, तत्र आयत्ता । तथा हि—स्मरणनिबन्धनः सर्वो व्यवहारः । प्रथमम[25]पि हि प्रत्यक्षज्ञानम् 'अहम्'[26] इति पूर्वापररूपानुसंधानेन स्मरणानुप्राणितेन विना न घटते, प्रमातरि[27] विश्रान्त्यभावात् अप्रत्यक्षत्वप्रसङ्गात्[28] । एवं सुखादौ मन्तव्यम् । हानादानप्रेरणाभ्युपगमादयस्तु[29] व्यवहाराः स्मरणमया एव । 'एवं ज्ञानानां' यत् 'अनु-

---

२५ प्रथमम् अनुभवकाले ।

२६ अहमिति, अहमिदं जानामि—इत्यहन्तापर्यवसितं पूर्वापरस्वात्म-रूपपरामर्शविश्रान्तं हि अहमिति स्वरूपम् । यस्य नीलज्ञानमभूत् तस्यैव पीतज्ञानम् इति ।

२७ प्रमातरि नित्यबोधरूपे ।

२८ स चायमनुसन्ध्येकरसतया प्रमाता व्यवहरंस्तदभावे मूर्छितप्रायी-भवेदिति भावः ।

२९ हानादानेति, परज्ञानविषयस्वीकाराभावाच्च अर्थिनामर्थक्रिया-लाभः प्रवृत्तिपूर्वको न स्यात् अर्थिताया एवोदयाभावात्, सा हि प्रवृ-त्तिविषयस्य प्रार्थनीयस्यार्थविशेषस्य निश्चये सति भवति, प्रार्थनीयश्च इत्थमर्थो भवति, यदि पूर्वं स सुखसाधनत्वेन दृष्ट इति निश्चयः, एवं च विषयसंमेलनात्मा निश्चयः प्रार्थनाकारणं तच्चास्ति-इति कारणानुप-पत्त्या प्रार्थनाया अभावे तथैव उत्तरोत्तरकार्याणामभाव इति प्रार्थनापि अवसायप्रवृत्तिहानादानसंव्यवहारादिर्लोकयात्रा उत्सीदेत्, क्रमोपजातस्य संवित्प्रबन्धस्य विचित्रं कृत्वा संयोजनवियोजनादि बहुप्रकारेण वैचि-त्र्येण यत्कस्मिंश्चिद्विषये मेलनं, यस्त्वयाद्य विषयो दृश्यते स पूर्वमपि मया इत्थमवलोकित इत्येवंरूपा हि हानादानादिप्रवृत्तयः ।

संधानं' ततो जायमाना 'जनस्थितिः' 'एवम्' इति पराभ्[30]युपगमे सति '[31]नश्येत्' नश्यति– इति संभाव्यते । [32]कुतः ?–इति चेत्, विशेषणद्वारेण हेतुमाह 'अन्योन्यं' तावत् 'भि[33]न्नानि' ज्ञानानि–अन्यत् [34]अनुभवज्ञानं, अन्यत् इदानीन्तनं ज्ञानं विकल्पाभिमतं, अन्यत् स्मरणसंमतं ज्ञानं । तत् एतानि स्वविषयप्रकाशमात्ररूपाणि परविषये जडान्धानेल[35]मूककल्पानि, न[36]च अन्योन्यस्य प्रकाशरूपाणि । एवं न [37]स्वरूपतो न वेद्यतो वा एकीभावरूपम् अनुसंधानम् अस्ति । अन्योन्यं च विषय-

---

३० बौद्धमताङ्गीकारे ।

३१ नश्येदिति, संभावनेऽलमिति चेत् सिद्धाप्रयोग इति । अयमर्थः संभावनायां गम्यमानायां प्रैष्यर्थे लिङ्विभक्तिः चेत् सिद्धस्याप्रयोगः । अपि शिरसा गिरिं भिन्द्यात्, अत्र सिद्धस्य भेदस्य असंभव एव, तथा चात्र नश्येदिति, नाशस्य सिद्धफलरूपस्य असंभव एव ।

३२ कुत इत्यादिना परप्रतीत्यै पञ्चावयवं वाक्यमुत्थापयति ।

३३ एकप्रमातृविश्रान्तिं विना इति भावः ।

३४ शुद्धज्ञानमित्यर्थः ।

३५ अनेलमूकस्तु वक्तुं श्रोतुमशिक्षिते इति कोशः ।

३६ न चेति, तथा च सति स्वमतहानिरिति च-शब्देन द्योतितम् ।

३७ स्मृतिर्न स्वरूपतोऽनुभवं विषयीकरोति न वेद्यतोऽनुभूतं विषयीकरोति इति ।

विषयिभावो नास्ति। नच[38] तुर्य ज्ञातेय[39]निबन्धनम् अनुसंन्धाना[40]धायि संभाव्यते[41],—इति ध्वंसेरन् व्यवहाराः। नच, 'ध्वंसन्ताम्' इति भवदभीष्टशापमात्रात् ते ध्वंसन्ते प्रकाशन्ते[42] यतः तत एतत्[43] आपद्यते, एतदेव समर्थयि[44]तुम् उद्यन्तव्यम्—इति ॥ ६ ॥

तच्च अस्मदभिमतप्रकारेण विना विधेरपि अशक्यसमर्थनम्—इति दर्शयति

न चेदन्तःकृतानन्त-
विश्वरूपो महेश्वरः।
स्यादेकश्चिद्वपुर्ज्ञान-
स्मृत्यपोहनशक्तिमान् ॥ ७ ॥

---

३८ च-शब्दोऽत्यन्तासंभावनायाम् इति।

३९ परस्परभिन्नानामपि यदेकसंश्लेषणं तेन संबन्धोऽन्योन्यमपि संबन्धो ज्ञातेयम्।

४० अनुभवविकल्पस्मरणानामिति शेषः।

४१ विश्रम्भास्पदीक्रियते इत्यर्थः।

४२ भवदनभिमतमपि बलादायाति—इति भावः।

४३ एतत्—वक्ष्यमाणम्।

४४ परैरशक्ये कर्मण्यध्यवसायः समर्थना, तदेतदाह तच्चेत्यादिना।

---

पं० ७ क० घ० पु० एतच्चास्मदिति पाठः।

'संवित् तावत् प्रकाशते' इति तावत् न केचित् अपह्नुवते । सा तु संवित् यदि स्वात्ममात्रविश्रान्ता अर्थस्य सा कथं प्रकाशः?, स हि अर्थधर्म एव तथा स्यात्; ततश्च अर्थप्रकाशः तावति[४५]एव पर्यवसितः,—इति गलितो ग्राह्यग्राहकभावः । अतोऽर्थप्रकाशरूपां संविदम् इच्छता[४६] बलादेव अर्थोऽपि तद्रूपान्तर्गत[४७] एव अङ्गीकर्तव्यः; स च अर्थप्रकाशो यदि अन्यश्च अन्यश्च, तत् न स्मरणम् उपपन्नम्,—इति अत एक एव असौ,—इति एकत्वात् सर्वो वेद्यराशिः तेन क्रोडीकृतः[४८],—इत्येतदपि अनिच्छता अङ्गीकार्यम् । एवमपि सततमेव उन्मग्नेन निमग्नेन वा विश्वात्मना प्रकाशेत[४९], तथास्वभावत्वात् । न चैवम्[५०], अतः स्वरूपान्त-

---

४५ अर्थात्मन्येव इत्यर्थः ।

४६ बौद्धेनेति शेषः ।

४७ तद्रूपान्तर्गतः संविद्रूपान्तर्गत इत्यर्थः ।

४८ क्रोडीकृतः अन्तःकृतः इत्यर्थः ।

४९ अयमाशयः, यद्यसावेकः सर्वैर्भावमण्डलैर्निर्भरश्चिद्वपुस्तर्हि तानि सदैव उन्मग्नानि सदैव वा निमग्नानि निर्भासेरन्, कादाचित्कं तु वैचित्र्यमेषां कथमिति ।

५० दृश्यते, इति शेषः ।

त्रुडितम् अर्थराशिम् [51]अपरमपि [52]भिन्नाकारम् आत्मनि परिगृह्य, कंचिदेव[53] अर्थं स्वरूपात् [54]उन्मग्नम् आभासयति,–इति [55]आपतितम्। सैषा [56]ज्ञानशक्तिः। [57]उन्मग्नाभाससंभिन्नं च चित्स्वरूपं बहिर्मुखत्वात् [58]तच्छायानुरागात् नवं

---

५१ अयमाशयः,

'इच्छाया एव यस्येयत्फलं लोकत्रयात्मकम्।'

इत्यागमिकोक्त्या अपरिगणितसर्वभावनिर्भरो भगवान् स्वातन्त्र्यात् भावराशिमध्यात् कंचिद्भावं प्रकाशस्वरूपात् पृथक्करोति, पृथक्कृतं च प्रकाशयति, न च पृथक्कृतस्य प्रकाशना उपपन्ना इति न महाप्रकाशात् पृथक्करोति–इत्युक्तम् अपरमित्यभिन्नमपीत्यर्थः, परं व्यतिरिक्तं ततोऽन्यदपरमिति।

५२ प्रकाशत्वाच्छून्यमेव चित्तत्वमित्याशयेन पृथग्भूतम्।

५३ कंचिदेवेति, तथाविधं च भिन्नाकारमपरमार्थप्रकाशरूपमपि आरोपितप्रकाशं मायाप्रमातारं निर्मिमीते, तथा च संकोचेन अवभासनमेव च भगवतः स्वात्मनि तन्निर्माणमुच्यते सैषा ज्ञानशक्तिः। अत्र च विवेकसर्वस्वा एव प्रमाणम्।

५४ उन्मग्नं पृथग्भूतमित्यर्थः।

५५ आपतितं स्फुटमनुक्तमपि अर्थादायातम् इत्यर्थः।

५६ एवं च मायाप्रमाता शरीराद्यवच्छिन्नसंकुचितप्रकाशस्वभावो भवन् स्वापेक्षया पृथग्भूतं भावमवभासयति, तन्नवनवतद्वीयच्छायोपरक्तमस्य बहिर्मुखं रूपं नवं नवं ज्ञानमुच्यते, तत्र च यदैश्वरं स्वातन्त्र्यं सा ज्ञानशक्तिरिति।

५७ उन्मग्नाभाससंभिन्नं शरीराद्यवच्छिन्नसंकुचितप्रकाशस्वरूपमित्यर्थः।

५८ तच्छायानुरागात् स्वापेक्षया पृथग्भूतभावावभासेन, उन्मग्नाभासात्मकवेद्यच्छायोपरागात् इति।

नैवं[59] ज्ञानमुक्तम् । एवमपि[60] नवनवाभासाः प्रतिक्षणम् उदयव्ययभाजः,—इति सैव व्यवहार-[61]निवहहानिः । तेन क्वचित् आभासे गृहीतपूर्वे यत् संवेदनं बहिर्मुखम् अभूत्, तस्य यत् अन्तर्मुखं चित्स्वरूपत्वं तत् कालान्तरेऽपि अवस्थास्नु स्वात्मगतं तद्विषय[62]विशेषे बहिर्मुखत्वं परामृशति,[63]—इति एषा स्मृतिशक्तिः[64] । यच्च तत् नवं भासयति स्मरति वा तत् वस्तुतः संविदा विश्वमय्या तादात्म्यवृत्ति,[65]—इति विश्वमयं पूर्णमेव,—इति नैवं[66] न किंचित् आभासितं स्मृतं वा स्यात् । इदमपि[67] प्रवाहपति-

---

५९ नवं नवं बहिर्मुखरूपमित्यर्थः ।

६० ज्ञानशक्तिसमर्थने ।

६१ तेषां नवनवाभासानां प्रतिक्षणम् उदयलयग्रस्तत्वेन कथं व्यवहारोपयोग इत्यर्थः ।

६२ पित्रादौ विशिष्टविषये इति ।

६३ स्वात्मगतां तामेव विशिष्टविषयां बहिर्मुखतां परामृशति ।

६४ मायाप्रमातरि तदेतत् स्मरतीत्युच्यते, तत्र यत्तथाविधं प्रमात्रादिनिर्माणसामर्थ्यं तद्भगवतः स्मृतिशक्तिरिति भावः ।

६५ तादात्म्यवृत्ति अभेदसंविन्मयमित्यर्थः ।

६६ यच्च भानं स्मरणं वा पुनस्तदपि परमेश्वरसृष्टत्वात् पारमार्थिकमेव इत्यप्यर्थादायातम् ।

६७ इदमपि वक्ष्यमाणम् ।

तम् ऊरीकार्यम्—यत् किल तत् आभास्यते[६८] तत् संविदो विच्छिद्यते, संविच्च ततः, संविच्च संविदन्तरात्, संवेद्यं च संवेद्यान्तरात्; नच विच्छेदनं वस्तुतः[६९] संभवति,—इति विच्छेदनस्य अवभासमात्रम् उच्यते। नच तत्[७०] इयता अपारमार्थिकम्, निर्मीयमाणस्य सर्वस्य अयमेव परमार्थो यतः। एष एव परितश्छेदनात्[७१] परिच्छेद उच्यते, तदवभासनसामर्थ्यम् अपोहनशक्तिः[७२]। अनेन शक्तित्रयेण विश्वे व्यवहाराः। तच्च भगवत[७३] एव शक्तित्रयं—यत्

---

६८ आभास्यते चिद्रूपेण कर्त्रा इति शेषः।

६९ तथा चोक्तं भगवता पतञ्जलिना "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति।

७० तत् विच्छेदनमित्यर्थः।

७१ परितश्छेदनादिति, देशकालविशेषावच्छेदशून्यत्वेन विचित्रेच्छाप्रबोधितावभासभेदवासनामात्रोपपादितविकल्परूपविज्ञाना अपोहनशक्तिः, पूर्वावभासितवस्तुनः पूर्वावभासितत्वेन वर्तमानकाले प्रख्यापनशक्तिः स्मृतिशक्तिरित्यनयोर्भेदः।

७२ तथा च यया भगवतः स्वातन्त्र्यशक्त्या मायीयप्रमातुर्विकल्परूपं विज्ञानं सा अपोहनशक्तिरिति फलितार्थः।

७३ महेश्वरपदस्यार्थमाह तच्च भगवत एवेति, अयं भावः यद्यपि पशुप्रमातुरपि तथाभूतं ज्ञानं ततश्च सोऽपीश्वर एव, तथापि न तस्य तत्र स्वेच्छा प्रभवति अप्रतिहतसंकल्पत्वाभावात् तेन यस्यैव अप्रतिघात इच्छायाः स महेश्वर एव तथाभूत इति।

तथाभूतानुभवितृ-स्मर्तृ-विकल्पयितृस्वभावचैत्रमैत्राद्यवभासनम् । स एव[74] हि तेन तेन वपुषा जानाति, स्मरति विकल्पयति च । यथोक्तम् आचार्येणैव

'यद्यप्यर्थस्थितिः प्राणपुर्यष्टकनियन्त्रिते ।
जीवे निरुद्धा तत्रापि परमात्मनि[75] सा स्थिता ॥'

इत्यादि । एतासां च ज्ञानादिशक्तीनाम् असंख्यप्रकारो वैचित्र्यविकल्पः,—इति तत्सामर्थ्यं स्वातन्त्र्यम्[76], अपराधीनं पूर्णं महदैश्वर्यं तन्निर्मितब्रह्मविष्णुरुद्राद्यैश्वर्यापेक्षया उच्यते ।

---

७४ अयं भावः

'न वह्नेर्दाहिका शक्तिर्व्यतिरिक्ता विभाव्यते ।
केवलं ज्ञानसत्तायाः प्रारम्भोऽयं प्रवेशने ॥'

इत्यागमोक्त्या यथाग्निर्दाहकः पाचकः प्रकाशक इति तत्र बहुत्वपरामर्शप्रधानतायां शक्तिव्यवहारः, तदेकपरामर्शप्रधानत्वे तद्व्यवहार इति ।

७५ 'न सा जीवकला काचित्सन्तानद्वयवर्तिनी ।
व्याप्त्री शिवकला यस्यामधिष्ठात्री न विद्यते ॥'

इति-न्यायेन परमात्मन्येव सा अर्थस्थितिर्नियन्त्रिता इति ।

७६ अत्र महेश्वर-शक्तिपदाभ्यामेव अपराधीनं ज्ञानादीनां स्वातन्त्र्यमभिदधद्भ्यां स्पष्टं यथाग्निः शक्तः सन् सन्दहति इतिवत् तत्र इच्छाशक्तिर्गृहीतैव । तथा चोक्तं भगवता गीतासु

'मत्तः स्मृतिर्ज्ञानमपोहनं च ।'

इति । अत्र च मत्त इति मत्सामर्थ्यादेतच्च ममेति प्रदर्शितम् । अयं भावः यद्बलात् तद्भवति तन्मम स्वातन्त्र्यमिति ।

तदेव 'चिद्वपुः' इत्येवं कृत्वा इयदायातम् 'विश्वरूपः' इति । तत एव च परिनिष्ठितैकरूपजडभाववैलक्षण्यात् ज्ञानादिशक्तियुक्ततामाहैश्वर्यम् उपसंप्राप्तः । एतदनुपगमे न किंचित् इदं भासेत,—इति प्रसङ्गः । भासते तु; तस्मात् एतत् अवश्यम् अङ्गीकर्तव्यम्,—इति प्रसङ्गविपर्ययः । नश्येज्जनस्थितिः, यद्येवं न स्यात्,—इति प्राक्तनेन श्लोकेन सह प्रसङ्गः 'चेत्' इत्यनेन तद्विपर्ययः[77] सूचितः ॥ ७ ॥ आदितः ॥ २३ ॥

इति श्रीमदाचार्याभिनवगुप्तविरचितायां ईश्वरप्रत्यभिज्ञासूत्रविमर्शिन्यां ज्ञानाधिकारे परदर्शनानुपपत्तिर्नाम तृतीयमाह्निकम् ॥ ३ ॥

---

७७ तद्विपर्ययः प्रसङ्गविपर्ययः इत्यर्थः ।

## अथ चतुर्थमाह्निकम् ।

पदार्थरत्ननिकरं[1] निजहृद्गञ्ज[2]पुञ्जितम् ।
ग्रथ्नन्तं स्मृतिसूत्रान्तः संतत्यै[3]व स्तुमः[4] शिवम् ॥ १ ॥

एवं ज्ञानपूर्विका स्मृतिः, तदुभयानुग्रा[5]हिणी अपोहनशक्तिः,—इति तावत् वस्तुसंभवक्रमेण प्रदर्शितम् । उपक्रमानुसारेण स्मृतिरेव सूचितप्रसङ्गविपर्ययसमर्थनदृशा विवेच्या ।

'स[6]त्यं किंतु स्मृतिज्ञानम्………… ।'

इति हि उपक्रान्तम् । तत्र संस्कारमात्रात्

१ चिदानन्दसारसर्वाभाससमूहम् ।

२ तत्तःसुवर्णरत्नादिनिवेशस्थानं गञ्जः, अनेन न बहिर्भावेनैव स्मृतिस्वरूपं तत्तु परप्रतीत्यै दर्शितम् ।

३ संतत्या क्रमेणेत्यर्थः ।

४ स्मृतिस्वरूपसमर्थनेनान्यदर्शनाधस्पदीकारेण स्वदर्शनोत्कर्षतया विमृशाम इति यावत् ।

५ अन्तरनुप्राणिका ।

६ तत्र पूर्वपक्षे 'अथानुभवविध्वंसे स्मृतिः' इति, तथा सिद्धान्ते 'सत्यं किंतु' इति 'न चेत्' इत्यनेन आत्मेश्वरसिद्धौ सातिशयमभिज्ञानम्, अत एवाविष्टमहेश्वरभावेन भगवतापि गीतासु

'मत्तः स्मृतिर्ज्ञानमपोहनं च'

इति स्मृतिरेव पूर्वमुपात्ता ।

पं० ५ ख० पु० अनुसारेण तु इति पाठः ।

पं० क० पु० संस्कारमात्रात्मा नामेति पाठः ।

तावत् मा नाम उदपादि स्मृतिः, इदं तु वक्तव्यम्—तथाभूतभवदभ्युपगतभगवत्प्र[७]भावोऽपि कथम् एनां कुर्या[८]त्?,—इति शङ्कां शमयितुं स्मृति[९]तत्त्वनिरूपणाय

'स हि पूर्वानुभूतार्थोपलब्धा……… ।'

इत्यादि

'………अर्थो भातः प्रमातरि ।'

इत्यन्तं श्लोकाष्टकम् । तत्र श्लोकेन स्वपक्षे स्मृतिरुपपन्ना,—इति कथितम् । द्वितीयेन स्मृतेः पूर्वानुभवविषयीकृतस्वलक्षणप्रकाशनसामर्थ्यमुक्तम् । तृतीयेन अनुभवेन तद्विषयेण च एकीभावपर्यन्त आवेशः स्मरणस्य उक्तः । तुर्येण अनुभवस्य न विषयतया स्मृत्या प्र[११]का-

---

७ प्रभावो हि असंभाविनीमपि अर्थक्रियां संभावयति, तत्र च भगवच्छब्द एव तत्प्रयोजकः ।

८ कुर्यात् संनह्येत् इत्यर्थः ।

९ स्मृतिशक्तेस्तत्त्वं परदर्शने व्यामोहवशादनुपपन्नमपि चाप्रच्युतप्राच्यस्वरूपमिति, तत्त्वस्य पारमार्थिकस्वरूपस्येत्यर्थः ।

१० मा स्म परदर्शने स्मृतिरुपपादि भवद्दर्शनेऽपि तु कथं सेति, तत्र एकेन उपपत्तिरुक्ता ।

११ विषयरूपेण पृथक् भातीत्यर्थः ।

---

पं० १० पूर्वानुभूतार्थेति पाठान्तरम् ।

शनम्,—इति निरूपितम् । पञ्चमेन योगिज्ञानमपि अनुभवं पृथग्भावेन न विषयीकरोति,—इति वदता[12] तुर्यश्लोकार्थ एव उपोद्बलितः[13] । षष्ठेनाशङ्क्यमानम् अनुभवस्य स्मृत्या पृथग्विषयीकरणं[14] काल्पनिकम्,—इत्यवास्तवीकृतम्[15] । सप्तमेन स्मृतिप्रसङ्गात् विकल्पेऽपि पूर्वानुभवेन ऐक्यात्मावेशो दर्शितः । अष्टमेन स्मर्तव्यस्य, स्मृतेः स्मर्तुश्च एकचित्तत्त्व[16]विश्रान्तिः उक्ता; प्रसङ्गाच्च दृश्यस्य, दर्शनस्य द्रष्टुश्च,—इति तात्पर्यार्थः । अथ क्रमेण श्लोकार्थ उच्यते ।

स[17] हि पूर्वानुभूतार्थो-
पलब्धा परतोऽपि सन् ।

---

१२ वदता इति आचार्येण, तथा पञ्चमेनेति गौणी तृतीया, अथ वा स्वतन्त्रतृतीयैवास्तु तथा हि ग्रन्थकृदभिन्न एव तद्विमर्शपरिस्पन्दस्वभाव एव हि श्लोक इति ।

१३ दृढीकृतः ।

१४ इदंतया भेदेन ज्ञानम् ।

१५ काल्पनिकत्वान्न वास्तवीकृतमित्यर्थः, इति शब्दोऽत्र हेतौ ।

१६ पारमार्थिकमहाप्रकाशप्रमातरि विश्रान्तिः ।

१७ स्मृत्यादीनामिदानीं ज्ञानप्रकरणेनानेन स्वरूपं निरूपयिष्यन्नशेष-

---

पं० ५ ग० पु० इति न वास्तवीकृतमिति पाठः ।

विमृशंन्स इति स्वैरी
स्मरतीत्यपदिश्यते ॥ १ ॥

'पूर्वमनुभूतस्य अर्थस्य' य 'उपलब्धा' अन्तर्मुखो बोधः स तावत् अद्यापि 'परतः'

---

कालानुगतस्वतन्त्रावबोधलक्षणात्मतत्त्वस्वभावेश्वरशक्तिरूपतां प्रतिपिपादयिषुः स्मृतेरेव तावत्सुस्पष्टमीश्वरात्मसिद्धिहेतुतया प्रथमं संभवमाह स हि इत्यादि। प्रत्यगात्मतादशायां तथानेककालतोपचाराच्चर्यमाणः परतोऽपि पूर्वानुभवकालादन्यस्मिन्नपि स्मरणवर्तमानकाले संस्कारप्रबोधधामनि पूर्वानुभूतार्थोपलब्धैव यतो भवति न तु तदस्य पूर्वार्थोपलब्धृत्वं विच्छिद्यते ततो भावनाद्धेतोस्तथैव पूर्वापरोभयकालावलम्बनौचित्यात् आगतेन स इत्यनेन विमर्शनेन तमर्थं विमृशति। अनन्तभावानुभवितृत्वेऽपि तमेव कस्मादिति न वाच्यं यतः स स्वैरी स्वतन्त्रः सदृशादृष्टप्रणिधानाद्यपि हि तस्यैव स्वातन्त्र्यान्नियतिविजृम्भा, स इत्यस्य विमर्शस्य पूर्वापरौ कालौ परस्परगलितावपि चिद्रूपे चानिमग्नावपि सन्तौ परस्परं चिद्रूपे च निमग्नौ तं चार्थं चिद्रूपे स्फुरन्तमपि अधिकमिव अबाह्यमपि बाह्यमिव परामृशतः, परमेश्वरस्वातन्त्र्यमेव जीवितमित्यपि स्वैरिपदम्, स्मरणशक्तिरेव हि परमं स्वातन्त्र्यम्। यदाह दिवाकरवत्सः 'ध्यानादिभावमिति'। यस्मात् स स्वैरी महेश्वर एवंभूतः सन् उच्यमान-वक्ष्यमाणन्यायात् स्मरति इत्येतद्व्यवहारभाजनम् इत्यन्वयोऽयमुपपन्नः तस्मात् न चेदिति पूर्वसूत्रोक्तः प्रसङ्गरूपत्वेन व्यतिरेको युक्तः, अन्यथा हि आत्माभावप्रयुक्तोऽयं तेषां स्मृत्यादीनामभाव इति कथं भवेत्, न हि भवति घटाभावादङ्कुराभाव इति, तस्माद्युक्तः प्रसङ्गरूपतया अयं व्यतिरेकः इति। हि-शब्देन समस्तस्य स्मरणप्रकरणार्थस्य हेतुतां द्योतयन् पूर्वप्रकरणेन सह एतत्प्रकरणं सङ्गमितं करोति—इति सूत्रार्थः।

१८ स इति विमर्शं कुर्वाणः।

१९ वर्तमानकाले। परतोऽपि पूर्वानुभवकालादन्यस्मिन्नपि स्मरणवर्तमानकाले।

स्मृतिकालेऽपि अस्त्येव, संविन्मात्रस्वरूपस्य कालकृतसंकोचरूपविशेषात्मकविच्छेदायोगात् । अनुभवस्य[20] च अन्तः अर्थोऽपि अपृथग्भावेन अवस्थितः,—इत्येतदपि अयत्नसिद्धम् । इदं तु चिन्त्यम्—अकालकलिते[21] संवेदने तदन्तर्वर्तिनि च विश्वत्र भावजाते यदि तावत् चिन्मयतापरामर्शः, तत् 'अहम्' इति एतावतैव पूर्णेन विमर्शेन भाव्यम्; अथ इदन्तया पृथग्भावावभासनेन, तथापि तत्र द्वयी[22] गतिः। 'अहम्' इत्यंशे यदि विश्राम्यति इदन्ता, तदा 'अहमिदम्' इति सदाशिवदशया भाव्यम्; अथ न[23] रोहति, तत् 'इदम्' इत्येव आभास-

२० यदि हि तदविभागेन पूर्वानुभूतवस्तुसंभवो न भवेत् कथं स्मरणम् इति सर्वाकारतालक्षणं स्वातन्त्र्यमस्याः कथितम् । तदेतदुक्तं भट्टदिवाकरेण

'सर्वेऽनुभूता यदि नान्तरर्था-
स्त्वदात्मसात्कारसुरक्षिताः स्युः ।
विज्ञातवस्त्वप्रतिमोपरूपा
काचित्स्मृतिर्नाम न संभवेत्तत् ॥'

इति ।

२१ कालविच्छेदशून्ये ।

२२ प्रकारद्वयम् ।

२३ इदंता न विश्राम्यति ।

पं० १२ ख० पु० आभासेनेति पाठः ।

नेन भवितव्यम्; अपूर्वता[24]भासनाच्च तत् अनुभवनमेव स्यात् न स्मरणम्,–इत्याशङ्क्याह 'स्वैरी' इ[25]ति। 'स्वम्' आत्मीयम् उपकरणम् ईरयति कर्तव्येषु अवश्यं तच्छीलश्च; '[26]स्वं' च आत्मानम् ईरयति न पुनः स्वकर्तव्ये प्रेरकमपेक्षते,–इति 'स्वैरी' स्वतन्त्रः। तेन स्वतन्त्रत्वात् 'स' इत्येवं विमृशति। 'स' इ[27]ति विमर्शनस्य च इयद्रूपम्–यत् सर्वथा अ[28]काल-कलितस्वरूपपरा[29]मर्शनमेव न, नापि अत्य[30]न्त-भेदपरामर्शनमेव; अपि तु यो भावः पूर्व-मनुभवकाले तद्दे[31]शकालप्रमात्रन्तरसाचिव्येन

---

२४ अपूर्वत्वेनाभासनात्।

२५ स इत्यस्य विमर्शस्य पूर्वापरौ कालौ परस्परगलितावपि चिद्रूपे चानिमग्नावपि सन्तौ परस्परं चिद्रूपे च निमग्नौ तं चार्थं चिद्रूपे स्फुरन्तमभ्यधिकमिवाबाह्यमपि बाह्यमिव परामृशतः, परमेश्वरस्वातन्त्र्यमेव जीवितमित्यपि स्वैरिपदेन द्योतितम्।

२६ स्वशब्द आत्मात्मीयवाची इति गणपाठवृत्तौ।

२७ ततोऽपि किम्? इत्यत आह स इति।

२८ कालेन असंकुचितम्।

२९ अहमिति।

३० इदन्तया।

३१ तच्छब्देनानुभव उच्यते।

---

पं० ४ क० पु० स्वकर्तव्येषु इति पाठः।

पृथक्कृतो न च अहन्तायामेव विलीनीकृतः, स तादृगेव तमसेव आच्छाद्य अवस्थापितः संस्कारशब्दवाच्यः, तस्य तमाच्छादकम् अपहस्तयति; तत्र अपहस्तिते स पूर्ववत् पृथक्कृत इवावभाति । ननु च इदन्तया अवभासेत पूर्ववदेव, नैवम् । [३२]तदानीन्तनावभासनपृथक्कृतशरीरादिसंबन्धमनवधूयैव हि [३३]तत्प्रकाशः; ततश्च इदानीन्तनावभासनकालपरामर्शोऽपि न निमीलति,–इति [३४]एतत्परामर्शभित्तिप्राधान्येन पूर्वकालपरामर्शः,–इति विरुद्धपूर्वापरपरामर्शस्वभाव एव 'स' इति परामर्श उच्यते । एवं च स एव परमेश्वरः 'स्मरति' । एतदेव हि तस्य स्मरणम्—यत् [३५]एवंप्रकारपरामर्शोचितकालकलादिस्पर्शसहिष्णुमाया[३६]प्रमा-

---

३२ अनुभवकालिकं च तत् ।

३३ तस्य स्मर्यमाणस्य प्रकाशः ।

३४ स्मरणकालिकं परामर्शमवधीकृत्य ।

३५ विरुद्धपूर्वापरेति ।

३६ मितप्रमातृ ।

---

पं० ५ ख० पु० एवाभाति इति पाठः ।

पं० ६ ख० पु० भासेतेति पाठः । मैवमिति च पाठः ।

पं० ८ ग० पु० इदानीन्तनकालपरामर्श इति पाठः ।

तृभावपरिग्रहः,–इति मायाविद्याद्वयार्द्वयम[37][38]-यम्। तत एव सकलसिद्धिवितरणचतुरचि-न्तामणिप्रख्यम् आगमिकाः स्मरणमेव मन्त्रा[39]-दिप्राणितं मन्यन्ते। तथा च

'ध्यानादिभावं स्मृतिरेव[40] लब्ध्वा
चिन्तामणिस्त्वद्विभवं[41] व्यनक्ति।'

इति। अलं[42] तावत् अनेन। तृन्नन्तसमासेन[43] यत्नतो[44]ऽनुभवस्यार्थमुखेन कालस्पर्शम्, अर्थ-

---

३७ माया भेदप्रथा, विद्या शुद्धविद्या।

३८ मायाविद्यारूपं च तद्द्वयं तस्य यदद्वयं तन्मयं स्मरणम्।

३९ शुद्धविद्यापरामर्शप्राणितम्।

४० यैव बहिः पूर्वानुभूतार्थपरामर्शमयी सैवान्तारूपा विमर्शशक्ति-स्वभावा स्मृतिरित्युक्ता।

४१ विभवं स्वातन्त्र्याख्यं, नहि निर्विमर्शः प्रकाशस्वरूपः कामपि प्रगुणां सिद्धिं दातुं शक्त इति भावः।

४२ अलं तावदिति पराक्षेपपूर्वं हि परमतनिरासेन स्वमतस्थापना एवेहोपयोगिनी तच्च तावद्बहिर्भावतयैव सिद्ध्यति इति कृतमनेन सूक्ष्म-विवेकेनेति।

४३ पूर्वानुभूतार्थोपलब्धा इत्यत्र न लोकाव्ययेति सूत्रेण षष्ठीनिषेधे सति द्वितीयाश्रितातीतेति सूत्रे द्वितीयेति योगविभागाद्यत्नतः तृन्नन्त-समासः। भर्तृीश्वराचार्यस्तु वचनवार्तिके शेषषष्ठीसमासस्य न निषेध इति न्यरूपयत्–इति।

४४ तृन्नन्तेति,–'तृजकाभ्यां कर्तरि' इति सूत्रेण हि समासः अत्र प्रतिषिद्धः इति परस्य प्रमादकथितमेतत् इति व्यामोहं निवारयितुमाह यत्नत इति समासस्त्वत्र वक्तव्यवस्तुश्रद्धया कृतः समासे हि वृत्तिपदार्थः

विश्रान्तितां[45], द्वयोरपि प्रमातरि निरूढिं[46] भेदाभेदाभ्यां दर्शयति, वृत्तौ[47] एकार्थीभावात् तस्य च भेदाभेदमयत्वम्–इति वक्ष्यामः ॥ १ ॥

एतदेव स्मृतितत्त्वमुपपादयितुं श्लोकान्तराणि। तत्र यदि कश्चिद्ब्रूयात् – इह स्मृतिर्विकल्पः, न च अनेनार्थः प्रकाश्यते, अर्थासंस्पर्शिनो[48] हि विकल्पाः, अनुभवेन[49] च येन सोऽर्थः प्रकाशतां नीतः स इदानीं कीर्तिमात्रमूर्तिर्जातः[50], न च सोऽपि स्मृत्या प्रकाश्यते–ज्ञानस्य ज्ञानान्तरेणासंवेद्यत्वात् असत्त्वाच्च–इति अर्थस्य प्रकाशनाभावात् 'इदं स्म-

पांसुरिवोदके मिश्रीभवंस्तत्कालुष्यरूपणां तत्र नावभासयति, न चात्यन्तमलाक्षणिकोऽयं शब्दः येनापशब्दत्वादवाचकत्वे कापुष्कलत्वकथा वक्तव्यस्य, अत्रोच्यते सूत्रकारज्ञापकादेतत्सिध्यति किमिदं ज्ञापकं नाम ज्ञापकस्य सामान्यापेक्षित्वात्–तत्प्रयोजको हेतुश्चेति (पा० व्या० १ अ० ४ पा० ५४ सू० )।

४५ अर्थौन्मुख्यम्, द्वयोरिति अनुभवार्थयोः।

४६ निरूढिं–विश्रान्तिम्।

४७ वृत्तौ–समासे।

४८ स्वलक्षणात्मनोऽननुगामित्वेन अजनकत्वेन तत्र अनवभासात्।

४९ अनुभवेन अर्थसंस्पर्शित्वमाशङ्क्याह–अनुभवेनेति।

५० नष्ट इत्यर्थः।

पं० ५ क० पु० स्मृतिविकल्पे इति पाठः।

रामि' इति ज्ञानं भ्रान्तिमात्रमेव—इति पुनरपि आपतितम्—इति, तदा तं प्रति उच्यते

भासयेच्च[५१] स्वकालेऽर्थात्पूर्वाभासितमामृशन्।
स्वलक्षणं घटाभासमात्रेणाथाखिलात्मना[५२]॥ २॥

---

५१ ननु च निर्विषयास्तावद्विकल्पाः स्वलक्षणात्मनोऽननुगामित्वेन अजनकत्वेन च तत्र अनवभासात्, सामान्यादेश्च अवास्तवत्वात्, ग्राह्याकारस्य च ज्ञानैकविश्रान्तस्य ग्राहकाकारवदविकल्प्यत्वात्, विकल्पविशेष एव च स्मृतिरिति, सापि निर्विषयैव, एकविषयतया च एकं संवेदनतत्त्वमुपपादयिषितमत्र, अनुभवस्मृत्योरेकं स्वसंवेदनरूपम् एकविषयतोपलम्भात्, भिन्नसंवेदनरूपतायां हि पृथक् स्वप्रकाशमात्ररूपत्वमेकविषयतोपलम्भस्य विरुद्धम् इति स्वभावविरुद्धोपलब्ध्या भिन्नसंवेद्यरूपत्वात् विपक्षाद्व्यावृत्त एव स्वसंवेदनरूपत्वेन व्याप्यते इति व्याप्तिसिद्धौ स्वभावहेतुः, स चायं निर्विषयत्वेऽत्यन्तासिद्ध इत्याशङ्क्य सूत्रम् भासयेदिति।

५२ अत्रायं तात्पर्यार्थः—स हीति पूर्वसूत्रात् योज्यम्। स महेश्वरो भगवांश्चिदात्मा पूर्वाभासितमर्थं तावत् स्मृतौ परामृशति विकल्पयतीति उपगम्यम्, तथा उपगमे च तस्य अर्थस्य पूर्वदेशकालाभ्यामवच्छेदात् देशकालसंकोचसारत्वाच्च स्वलक्षणात्मनः स्वलक्षणरूपं तमर्थं परामृशतीति आयातम्, परामर्शनं च प्रकाशनान्तरीयकम्, अप्रकाशमानतायां हि किं परामृष्टं स्यात्—अप्रकाशितं विमृष्टं चेति हि अन्धपदम् परामर्शश्च प्रकाशस्य स्वभाव इति स्वभाविनोऽसंभवे कस्य स्वभावो भवेत्, परामर्शनेन हेतुना उपलक्षणेन वा तस्य स्वलक्षणस्यावश्यंभाविनी भासना, अर्थात् सामर्थ्यात् परामर्शनान्यथानुपपत्त्या घटाभास एव एकाकी वा कौ-

---

पं० ३ क० पु० स्वकालेऽर्थान् इति पाठः।

इह स्मृतिकाले तावत् अर्थो[53]ऽध्यवसीयते, अन्यथा[54] सुप्तमूर्च्छितकल्पतापत्तेः । एवं च यावत् अध्यवसायोऽर्थस्य तावत् 'अर्थात्' इति सामर्थ्यात् इयत्[55] अभ्युपगन्तव्यम्[56]—यत् सोऽर्थः प्रकाशते, अप्रकाशमानेऽध्यवसातव्येऽध्यवसायोऽन्धप्रायः[57] स्यात् । प्रकाशनं च न तदानी[58]-

---

हित्यौन्नत्याद्यनेकाभासयोगित्वेन वा बहुप्रकारः समस्तपूर्वाभाससंभिन्नो यावमृश्यते, सर्वश्चासौ देशकालाभाससंभेदात् स्वलक्षणीभूतः । अथेति विकल्पं द्योतयति । ननु यदि सोऽर्थः प्रकाशते तदनुभवात् को भेदः, क एवमाह प्रकाशत इति । प्रकाशते किलासौ, स हि प्राच्यः कालोऽस्यावभासांशे वेद्यस्वीकारिणि स्वालक्षण्यहेतुः इदानीन्तनश्च स्मर्तृदेहप्राणादिगतो वर्तमानो विमर्शभागे, तदेतदुभयकालस्पर्शनं विमर्शस्य स इति, तेन भगवत इवाहमिति, सदाशिवस्य वाहमिदमिति, अनुभवितरि वा इदमिति न स्मर्तुः स्मरणपरामर्शप्रसङ्गः वेद्यस्योन्मेषात् पृथक्त्वात् प्राक्कालत्वाच्च यदाह 'स्वकाल' इति, पूर्वाभासितं च स्वकालत्यागेन तद्देशत्यागेन च घटाभासमात्रतया परामृशत्संकोचाभासवान् सामान्यात्मकमर्थं प्रकाशयत्येव स्मृतिव्यतिरिक्तं विकल्पमात्रमित्यपि अथशब्दः, तस्मात् वैलक्षण्येन वा सामान्यलक्षणेन वा विषयवत्त्वैव स्मृतिविकल्पादाविति निर्विषयत्वासिद्धौ स हेतुः स्थित एव एकविषयत्वोपलम्भात् इति ।

५३ अर्थः—स्वलक्षणम् ।

५४ अन्यथा—अर्थानध्यवसाये । सुप्तमूर्च्छितेति, सुप्तस्य मूर्च्छितस्य च यथा अर्थानध्यवसायः तथा स्यात् ।

५५ इयत्—वक्ष्यमाणम् ।

५६ अङ्गीकार्यम् सर्वैरिति शेषः ।

५७ अन्धकल्पः ।

५८ अनुभवकालस्य ।

न्तनकालस्य त्यागेन, नापि स्वीकारेण इदम् इत्ये-
वावभासेन[५९]प्रसङ्गात्। तस्मात्[६०] अतीतानुभवकालः
पूर्वानुभूतभावस्वालक्षण्याक्षेपकत्वेनापेक्षणीयो
वेद्यभागे प्रकाशात्मकावभासाभिनिवेशितया,
स्मर्तृदेहप्राणाद्यवभासकालश्चावलम्बनीयो वे-
दकभागे विमर्शांशाभिनिवेशित्वेन । आभास-
मात्रं हि भावस्य स्वरूपं, प्रत्याभासं प्रमाणस्य[६१]
व्यापारात् । तदेव[६२] आभासान्तरव्यामिश्रणया
दीपसहस्रप्रभासंमूर्च्छनवत् स्फुटीभवति ।
आभासान्तरव्यामिश्रणाभावेऽपि तु कालाभा-
ससंभेदेनैव स्वालक्षण्यं[६३] तस्य आभासस्य क-
रोति—कालशक्तेरेव भेदकत्वात् इति वक्ष्यते ।

---

५९ उभयत्रापि ।

६० तस्मात्—कारणात् ।

६१ प्रमाणस्य—प्रत्यक्षादेः, व्यापारात्—प्रमारूपात् ।

६२ तदेव—भावस्वरूपम्, यथोक्तं मध्यप्रत्यभिज्ञायां—अर्थितावशात् स्मृतावुपजायमानायां घटाद्याभासस्यैव काञ्चनाद्याभाससंभिन्नस्यापि यथोपयोगं पूर्वदेशकालाद्याभासाद्यवच्छेदोपरागात् स्वलक्षणरूपस्य स्मरणाद्सावववभासो भवति इति, स्वलक्षणे तु तत्रावभासोन्मेष एव कथित इति न कश्चिद्विरोध इति ।

६३ अत्र अधुना इति गृहीतो य एवाप्याभासः स व्यापकत्वनित्यत्वात्मसामान्यलक्षणतिरस्कारात्संकुचितः स्वलक्षणमुच्यते ।

एवं तावत् स्वलक्षणीभावः प्राक्तनदेहाभाससा-[६४] चिव्योद्युदितकालाभासयोजनया[६५] घटाभासस्य इति। तावत्येव[६६] वा स्मृतिः आभासान्तरैरपि व्यामिश्रा अतिस्फुटा। अत्यन्तस्फुटीभा-[६७] वेऽपि तदानीन्तनकालता न त्रुट्यति अन्य-साधारण्येन अनवभासनात्। तथावभासे[६८] तु योगिनस्तन्निर्माणमेव। ब्रह्मभाषितादौ तु

६४ प्राक्तनदेहेति प्रकाशते इति त्वनुभवे, यद्यपि प्रकाशे कालयोगो नास्ति तथापि वेद्यदेहादौ निषिक्तोऽसौ प्रकाशस्तदनुकारी मायापदे निर्भासते इत्यतीतवर्तमानदेहादिसहभूतोऽसौ स्मर्यमाणवस्तुगतो विमर्शमयोऽपि प्रकाशो देहप्रमातृमानिनामस्फुटत्वेनाभिमानगोचरत्वमेति, स्फुटत्वेन तु वर्तमानदेहोपाधिविश्रान्तो वर्तमानो विमर्शो द्वितीय इति।

६५ साचिव्यं–सहभावः।

६६ तावत्येव–घटाभासमात्रे।

६७ अत्यन्तस्फुटीभावेत्यनेन अखिलात्मना इति व्याख्यातम्। यथोक्तमष्टसहस्र्याम्–कदाचित्पुनरत्यन्तैकरसाधानोद्युक्तस्य निरवशेषविशेषणावभाससामानाधिकरण्यापत्तिविशदीकृतः स्मर्यमाणोऽर्थः साक्षात्कारमय एव स्फुटं पुरः स्फुरति, तथा च प्रत्यक्षीभावेऽपि पूर्वदृष्टतयैव प्रत्यक्षीभावादनुभूतविषयासंप्रमोषः सुतराम् इति स्मृतिभेदमध्यगणनायां न क्षतिः। अत्यन्तेति साक्षात्कारसमये यावद्भिराभासैः पूर्वोक्तः प्रत्यभासिष्ट तावद्भिरेव स्मर्यते, यथा अधुनैवाग्र इव इममहं पश्याम्येवेति अत्र वर्तमानदेशकालयोस्तद्देशकालतयाऽस्फुरितयोस्तद्देशकालीभूतयोरेव सोऽर्थः स्फुरति इति।

६८ तथेति–अन्यसाधारण्येन, अत्र वर्तमानप्रमातृस्वरूपैकीभावाभावात् पूर्वदृष्ट एव सविमर्शा सती इदानींतनविमर्शभूमिपतिता स इति विमर्श उच्यते।

पं० १ ग० पु० देहाद्याभासेति पाठः।

नवैमेव[69] अवभासनम् इति। तत्र तु आगमादि-मानान्तरानुभूतब्रह्मादिस्वरूपस्मरणपरम्परा अ-भ्युपायः। 'भासयेत्' इति विधिरूपेण नियोगेन नियमो[70] लक्ष्यते, न भासयति इत्येतत् न, अपि तु भासयत्येव इति। 'स्वकाले' इति स्मरणकाले। 'आमृशन्' इति वेदकभागनिवेशी वर्तमानकाल उक्तः। 'पूर्वावभासितं स्वलक्ष-णम्, इति वेद्यांशस्पर्शी भूतकालो घटाभास-स्यापि केवलस्य स्वालक्षण्यापत्तिहेतुर्दर्शितः। इयदेव स्मृतेः अव्यभिचारि वपुः, अर्थितातिशयात् तु स्फुटत्वम् इति 'अथ' शब्दो द्योत-यति। तदेवाह 'अखिलात्मना' इति सर्वा-भासमिश्रेण वपुषा इत्यर्थः[71] ॥ २ ॥

---

६९ नवमेवेति–तदानीन्तनत्वेन ये प्रमातारः सर्वज्ञाः, यदि वा संसा-रिणः, अनुमानागमादिप्रमाणान्तरायाततद्विषयप्रकाशा अपूर्वत्वेन पश्यन्ति विमृशन्ति तेषां यो ज्ञानाभासः तेन सह तत्रांशे भगवदिच्छया स एकीभवति। स्मरणे तु पूर्वप्रमातॄणां यो ज्ञानाभासस्तस्य स्मर्तुः पूर्वा-नुभवेन सह मिलितोऽभूत् स एव इदानीमुन्मिषति इति विशेषः।

७० नियोगेन–आज्ञया, नियमः–अवश्यंभावः। मर्यादाज्ञानमेव हि आज्ञानम्, स्वयं मर्यादां जानन्परस्य तत्प्रत्ययमुत्थापयन् आज्ञापयति इत्युच्यते, अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यत्र हि स्वर्गकामस्यायं नियमः जुहोत्येवेति, अन्यथा हि स स्वर्गकामो न परमार्थत इति भासयेदिति लिङर्थः।

७१ यतः परामर्शस्यान्यपदप्रख्यता न भवतीत्यर्थः।

ननु एवं स्वलक्षणस्य प्रकाशने भेदेन बहिस्तदवभासेत । एतदेव हि बहिरवभासनम्–यत् स्वलक्षणप्रकाशनम् इति शङ्काशमनाय निरूपयति

न[72] च युक्तं स्मृते[73]र्भेदे स्मर्यमाणस्य भासनम् ।

७२ ननु परामर्शस्यान्धपदप्रख्यता माभूदिति स्मरणेऽपि अर्थस्य प्रकाश उपगम्यते, ततश्चानुभूयमान इव स्मर्यमाणोऽपि बहिरयमिति कथं न व्यवहार्यः तद्व्यवहारकारणं हि तस्यार्थस्य प्रकाशनं, तच्चाविकलमस्तीत्याशङ्क्याह 'न च युक्तम्' इति स्मर्यमाणस्यार्थस्य यत् प्रकाशनं तदिदानीन्तनं न भवति अपि तु प्राच्यमेव तत्, तदपि च प्राच्यं प्रकाशनं स्मृतिलक्षणे संवेदनेऽधुनातनं विमर्शरूपं प्रधानीकृत्य निर्भासमाने संभेदेनैव न तु भेदेनाभाति, ततश्च स्मरणे स्वात्मांशे सविमर्शः प्रकाशः कालानवच्छिन्न एव, अर्थांशे तु प्रकाशः प्राच्य एव तन्नान्तरीयकविमर्शसहितः, पुनर्विमर्शस्तु इदानीन्तनः । एवं तत् स्मर्यमाणस्यानुभवप्रकाशनद्वारेण भासनं भवति अन्यथा स्वातन्त्र्येणानुभूयमानतोचितं तद्भासनं भवेत् न स्मर्यमाणतोचितं, तेन यथानुभवज्ञाने प्रकाशादपृथग्भूतमपि मायाशक्त्या मायाप्रमातुः पृथग्भूतमिव प्रकाश्यते वस्तु न तथा स्मृतिज्ञाने, अपि तु तत्र प्राच्य एवासौ पृथग्भावप्रकाशाभिमानोऽनुवर्तते, तेन पृथक् प्रकाशः कस्मान्न भवति स्मृतौ–इति न चोदनीयम्, एतद्दोषपरिहारनान्तरीयकतया च प्रसङ्गतः प्रकृतमपि सिध्यति अधिकरणसिद्धान्ततया इत्याह तेनेति । यदुक्तम् 'स्मृतावनुभवप्रकाशनम् अनुवेदकतया वर्तते, अनुभवप्रकाशाभेदेन च अर्थो वर्तते' इति, ततो हेतोरिदमपि सिद्धं भवति, शरीरप्राणाद्या-

पं० १ ख० पु० भेदेनैव इति पाठः ।

**तेनैक्यं[74] भिन्नकालानां**
**संविदां वेदितैष सः ॥ ३ ॥**

स्मरणज्ञानात् भिन्नत्वेन बहीरूपतया यदि सोऽर्थो भासेत 'स्मर्यमाणस्य' च यत् 'भासनं' तदेव न स्यात् स्मर्यमाणमेव तत् न स्यात्, अनुभूयमानमेव तत् भवेत् इति यावत्। ननु चैवं कथं स्वलक्षणस्य प्रकाशनम्? उक्तमेतत्—न इदानीं प्रकाशनम् अपि तु पूर्वकाले एव, तदा चासौ बहिरवभासत एव। ननु चेदानीं

---

भासानां स्फुटत्वेन अस्फुटत्वेन संभावितस्फुटत्वेन च वर्तमानातीत-भविष्यद्रूपतया तदुपाधिसंकोचयोगेन संविदोऽपि वर्तमानादिभेदेन उपचरितकालभेदाया अपि परमार्थत ऐक्यमेव इति। सत्यपि च सर्वत ऐक्ये यावत्येव निजस्वातन्त्र्यमहिम्ना स प्रमाता परामृशति ऐक्यम्, तावत्येव तद्भाति स्मरणानुभवयोरिव, एतदेव हि संवेदनाधिकं संवेदितृत्वम्-यत् संवित्सु संयोजने वियोजने च स्वाच्छन्द्यमिति, यदेवमैक्यम् अनुसंधानरूपं स्वातन्त्र्यं तदेव अपरवैलक्षण्यप्रदम् आत्मन इति, स एवात्मा एक आत्मा इति वक्तव्ये भावप्रत्ययेन तद्धर्मप्राधान्यं दर्शितम्, यथा 'चैतन्यमात्मा' इति श्रीशिवसूत्रेषु। तथा ह्यार्यः

'धर्मान्तरप्रतिक्षेपाप्रतिक्षेपौ तयोर्द्वयोः।
संकेतभेदस्य फलं ज्ञातृवाञ्छानुरोधिनः॥'

इति। स इति छन्नाकारस्येव, एष इति स्फुटं स्वरूपमुक्तम् इति सूत्रार्थः।

७३ स्मृतेरिति पञ्चमी विभक्तिः।

७४ तेन—हेतुना।

तर्हि किम्?–विमर्शनम् इति ब्रूमः । ननु प्रकाशनविमर्शनयोः भिन्नकालत्वम् आपतितम् ततः किम् उभयमपि न किंचित् स्यात् अन्योन्यजीवितत्वात् अस्य?, मैवम्, यस्य हि संवेदनान्येव भिन्नानि तत्त्वम् तस्य[75] इदम् अप्रतिसमाधेयमेव[76], अस्मद्दर्शने तु भिन्नकाला अपि संविदः[77] तत्कालात्यागेनैव एकताभासनेन स्वतन्त्रः प्रमाता यावदन्तर्मुखतया तावत्यंशे[78] विमृशति तावत् प्रकाशस्य तात्कालिकबहिर्भावावभासो, विमर्शस्य इदानीन्तनान्तर्मुखा स्थितिरेव, एतदेव वेदनाधिकं वेदितृत्वं–वेदनेषु संयोजनवियोजनयोः यथारुचि करणं स्वातन्त्र्यम्, कर्तृत्वं च एतदेव उच्यते घटमहमन्वभूवम्[79] इति वा, स घटः इति वा

७५ तस्य–बौद्धस्य ।

७६ अशक्यसमर्थनम् ।

७७ संविद इति कर्मप्रयोगः ।

७८ अंशे–अर्थे । विमृशति–संविद इत्यन्वयः ।

७९ घटमहमन्वभूवम् इत्यत्र पूर्वानुभवस्य स्मर्तृबोधैक्येन प्रतिपादनम् स घट इत्यत्रापि अर्थ एव पृथग्भूतो भाति, अनुभवस्तु तदानी-

पं० ११ ख० पु० स्थितिरिति इति पाठः ।

पं० १२ ख० पु० संवेदनेषु इति पाठः ।

'ऐक्यम्'[80] अनुसंधानम् अनुसंधातुरभिन्नम् इति दर्शयितुं यदेव ऐक्यं 'स[81] एव वेदिता' इति सामानाधिकरण्येन दर्शितम्। 'एष[82] स' इति आच्छादितस्येव प्रमातृतत्त्वस्य स्फुटावभासनं कृतम् इदम् इति विस्मयगर्भया उक्त्या प्रत्यभिज्ञानमेव सूचितम्। यदाह ग्रन्थकार एव

'इत्थं स्वसंवित्तिमपह्नुवानै-
र्यैस्तैर्वदद्भिः[83] कलुषीकृतं यत्।
प्रमातृतत्त्वं स्फुटयुक्तिभिस्ता-
न्मूकान्विधाय प्रकटीकृतं तत्॥'

इति ॥ ३ ॥

ननु च प्राच्य एव अनुभवो यदि स्मर्यमाणस्य बहिरवभासनरूपः प्रकाशः तर्हि इयत् उच्यताम्—सोऽनुभव इदानीं स्मरणेन विषयी-

---

मर्थोपसर्जनभावेन सृज्यमानोऽपि तदुत्तीर्ण इव इदंतापरामर्शसंस्पर्शाक्षमः अहंमात्रविश्रान्तिसतत्त्वः, तस्य तु यः स इति स्फुट इति च परामर्शः तदनुभाव्यधर्मोपचारेण व्यवहारमात्रमिति भावः।

८० संधानरूपं स्वातन्त्र्यमित्यर्थः।

८१ वेदिता आत्मा इत्यर्थः।

८२ स इति च्छन्नाकारः, एष इति स्फुटमुक्तस्वरूपः।

८३ भौतिकप्रायमसंगतम्।

क्रियते—इति, ऐक्येन तु अलौकिकेन कोऽर्थः इति व्यामोहं विहन्तुमाह

नैव ह्यनुभवो भाति
स्मृतौ पूर्वो[८४]ऽर्थवत्पृथक् ।
प्रागन्वभूवमहमि-
त्यात्मारोहणभासनात् ॥ ४ ॥

वैधर्म्यसाधर्म्याभ्यां दृष्टान्तैः[८५] 'प्राक्' इति अनुभवकाले यथा स 'पूर्वो' घटादिः अर्थः 'पृथक्' इति इदन्तया भाति स नैवं स्मरणकाले स्मृतिज्ञानात् पृथक्त्वेन इदं पूर्वमनुभवनम् इति 'भाति' । यथा[८६] च स्मृतिकाले तस्मात् स्मृतिज्ञानात् सोऽर्थः 'प्राक्' इति पूर्वस्वभावो न भेदेन आभाति, स्मृतिकाले बहिरवभासाभावात् । एवं[८७] तत एव हेतोः[८८] 'पू-

८४ अनुभूतार्थवत् ।

८५ अन्वयव्याप्तिकः साधर्म्यदृष्टान्तः, तद्विपरीतो वैधर्म्यदृष्टान्तः । तत्र वैधर्म्यदृष्टान्तमाह प्रागिति ।

८६ साधर्म्यदृष्टान्तमाह—यथा चेति ।

८७ एवं—स्थिते सति ।

८८ हेतोः—बहिरवभासाभावरूपात् ।

पं० ४ क० पु० पूर्वार्थवदिति पाठः ।

वोंऽपि अनुभवो' न भेदेन आभाति, कथं तर्हि उभयं[89] भाति!—अन्वभूवम् इत्येवम्। एतत् किमुच्यते?—इति चेत्, 'अहम्'—इत्येवं स्वभावो य 'आत्मा' पूर्वापरं[90]संविदन्तर्मुखस्वभावः तत्र यत् 'आरोहणं' विश्रमः तेन हेतुना पूर्वसंविद्रूपतायाः स्वप्रकाशाया 'भासनात्' तल्लीनस्यापि घटस्य स्वप्रकाशदेशीयत्वेन[91] अवभासनम्। 'आत्मनि च आरोहणं' विश्रमणा[92] अनुभवस्य अर्थस्य च। प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः—इति न्यायात् संख्याक्षिप्ते[93] तद्वति वा कर्तृभूतेऽस्मदर्थे प्रत्ययार्थेऽनुभवो ब्रुडितः तद्द्वारेण[94] अर्थोऽपि च, न तु स्वातन्त्र्येणैव असौ, तदर्थमेव कर्म न निर्दिष्टम्। घटादिः पुनः अनुभवकाले न अस्मदर्थमारोहति, 'हि'

---

८९ उभयम्—अर्थानुभवलक्षणम्।

९० अर्थानुभवस्मृती।

९१ स्वप्रकाशकल्पतया।

९२ अत्र न्यासग्रन्थो युग्म (पा० व्या० ३ अ० ३ पा० १९ सू०)।

९३ संख्याक्षिप्त इति युक्त्यन्तरमेतत्, तद्वति—संख्यावति।

९४ तद्द्वारेण—अनुभवद्वारा।

---

पं० १ क० ग० पु० तत्कथं भाति ह्युभयमिति पाठः।

यस्मात् नैव भाति पूर्वोऽनुभवः पृथक् अपरार्धोक्तात् हेतोः, तस्मात् संविदामैक्यम् इति पूर्वेण संबन्धः । लुङा भूतकालस्य द्योतितत्वात्, 'प्राक्' इति भिन्नक्रमः, उत्तमपुरुषेण अस्मदर्थस्य 'अहम्' इत्यर्थोऽपि[95], आरोहणम् इति रुहिरपि णिजन्तोऽपि ॥ ४ ॥

ननु क एवमाह—अनुभवः पृथक् न भाति?—इति, घटवत्[96] न भाति—इति चेत् किं[97] ततः? घटोऽपि हि न अनुभवभङ्ग्या भाति—इति, किं न भाति? स्वभावेन भाति—इति तु उभयत्रापि[98] समानम् । तथाहि—अतीतानागतसूक्ष्मादि[99] यथा योगिज्ञाने विषयीभवति इति अभ्युपगतम्, तथा परचित्तमपि[99]

'प्रत्ययस्य[100] परचित्तज्ञानम् ।' (योगद० ३ पा० १९ सू०)

---

९५ भिन्नक्रम इत्यन्वयः ।

९६ अर्थवत् पृथगनुभवः ।

९७ स्मृतौ न भाति इति ।

९८ अनुभवे अर्थे च ।

९९ परचित्तमपि योगिज्ञाने विषयीभवति इति संबन्धः । भूतभाविपरमाण्वादि ।

१०० प्रत्ययस्य परचित्तज्ञानमिति, प्रत्ययस्य संयमात् प्रत्ययस्य

---

पं० ख० पु० यथा इति पदं नास्ति ।

इत्यादौ। तत्र ज्ञानवृत्तिपरिणतमेव सत्त्वं[101] चित्तशब्देनोक्तम्, अन्यथा प्रत्ययस्य संयमे[102]-विषयीकार्यत्वं किमुच्यते, आलम्बनयोगश्च कथं शङ्क्येत,–'न च सालम्बनमिति[103]–' तस्मात् परकीयमनुभवनामिव निजमपि विषयीक्रियताम् इत्याशङ्क्य दृष्टान्ते[104] एवासिद्धः इति, 'भान्ति' इत्यन्तेन अभ्युपगमेन वा सिद्धत्वेऽपि प्रकृतेऽर्थे विषमः इति शेषेण[105] दर्शयति

योगिनामपि[106] भासन्ते
न दृशो दर्शनान्तरे[107]।

---

साक्षात्करणं, ततश्च परचित्तज्ञानमुत्पद्यते योगिन इति। 'न च सालम्बनं तस्याविषयीभूतत्वात्' रक्तं प्रत्ययं जानाति अमुष्मिन्नालम्बने रक्तम् इति न जानाति, परप्रत्ययमात्रं तु योगिचित्तस्य आलम्बनीभूतमिति पातञ्जलभाष्ये।

१०१ सत्त्वम्–अन्तःकरणम्।

१०२ संयमः–प्रणिधानम्।

१०३ सालम्बनं–सविषयम्।

१०४ दृष्टान्तः–योगिप्रत्ययरूपः।

१०५ मेयपद इत्यादिना।

१०६ अपिशब्देन दृष्टान्तत्वेन यत्संभावितं परेण तदस्य न घटत इत्याह।

१०७ दर्शनान्तरे–विषये। अत्र योगिनामपि इति दृष्टान्तवाक्यं

---

पं० ४ ख० पु० कथं शक्येतेति पाठः।

स्वसंविदेकमानास्ता
भान्ति मेयपदेऽपि वा ॥ ५॥

'योगिनां' यत् एतत् 'दर्शनान्तरं' भावनाद्युद्भवः[108] परचित्तविषयो ज्ञानविशेषः, तत्र 'दृशः' इति उपलब्धयो[109] न भान्ति[110]। तथाहि – सौगतानां तावत् स्वप्रकाशैकरूपं ज्ञानं, तत् चेत् ज्ञानान्तरेण वेद्यं, तर्हि यत् अस्य निजं वपुः अनन्यवेद्यतया प्रकाशनं नाम, न तत्प्रकाशितं स्यात्। सांख्यानामपि पुरुषच्छायैव उपलब्धिः[111], पुरुषश्च असंवेद्यपर्वा इति कथं वेद्यः स्यात्। वैशेषिकाणामपि[112]

परंतु स्वभावेन भाति इत्यत्रैव समर्थनमेतत्, तथाहि ग्राह्यग्राहकयोरनुभवबलाद्भेदोऽङ्गीकर्तव्यः, ततश्च ज्ञानस्य ज्ञानान्तरवेद्यत्वं, तेन च अनुभवस्मरणयोरपि वेद्यवेदकता, तया च एकविषयत्वेन विषयमेलनम् तेन व्यवहारसिद्धिः इति कथमेकप्रमातृसमर्थनमित्यत्राह 'दृशो दर्शनान्तरे न भान्ति' इति। अत्र भान्ति इति काकाक्षिवद्योज्यम्।

१०८ भूतार्थभावनाप्रकर्षपर्यन्तजः।

१०९ परकीयाः।

११० भान्ति इत्यत्र वेद्यतया इति योज्यम्।

१११ उपलब्धिः, ज्ञानं, बुद्धिः इति भिन्ना एव संमन्यन्ते तैरिति।

११२ काणादानाम्।

पं० ६ ग० पु० स्वप्रकाशं ज्ञानमिति पाठः।

आत्मनि अभेदेन समवायि संवेदनं परगतं मनसा कथं गृह्येत अन्तःशरीरवृत्तिना, तच्छरीरान्तरऽनुप्रवेशे[113] तु तस्यैव अहम् इति शरीरीकरणात् अहन्तावभासितत्वात् आत्मनो भेदो विगलेत्, नित्यानुमेयत्वं[114] तु न आत्मन उपपद्यते, ज्ञानस्य च ज्ञानान्तरवेद्यत्वेऽनवस्थादि उक्तम्। तस्मात् योगिनः परचित्तवेदनावसरे इयान्[115] प्रकाशः—एतद्देह[116]प्रकाशसहचारी घटसुखादिप्रकाशः—इति। तत्र घटसुखादिः इदन्तया भाति[117], तद्गतस्तु[118] प्रकाशोऽहम्—इत्येव स्वप्रकाशतया प्रकाशते। प्रमा-

---

११३ जैमिनीयवत्।

११४ योगिन इयत् परज्ञानवेदनं – यत् परदेहादिसहभावी नीलमधुरसुखरागाद्यवभासमयः प्रकाश इति, तत्र च नीलादि पृथग्भावेन वेद्यमेव, प्रकाशांशस्तु अहमित्येव प्रकाशते, प्रमात्रीकृतदेहाद्यवभाससंस्कारात्तु तन्निष्ठामिदन्तां प्रकाशभागेऽभिमन्यते, दृढस्वपरविभागसंस्कारभ्रंशे तु सर्वमात्मतया पश्यन् स्वसृष्टमेव स्वपरविभागं पश्यति इति तदपेक्षयापि न ज्ञानं ज्ञानान्तरेण वेद्यम्, योगिज्ञाने वा अविचारिताpातशङ्कितप्रतिभानबलादेव वेद्यतास्तु परज्ञानस्य, न त्वेवं स्मृतौ इति भावः।

११५ वक्ष्यमाणः।

११६ एतदिति–परार्थः।

११७ पृथग्भावेन वेद्यमेव।

११८ घटसुखादिप्रकाशः।

त्रीकृतपरदेहप्राणादिसमवभाससंस्कारात् तु तन्निष्ठाम्[119] इदन्तां प्रकाशभागेऽपि मन्यमान इदं परज्ञानम् इति अभिमन्यते अविगलितस्वपरविभागो योगी। प्राप्तप्रकर्षस्तु[120] सर्वम् आत्मत्वेन पश्यन् स्वस्पष्टमेव स्वपरविभागं पश्यति इति ज्ञानस्य न योगिज्ञानेन प्रकाश्यता, भवतु[121] वा तथापि प्रकृते न एतत् समम्। तथाहि—अयमनुभवति इति परनिष्ठ एव असौ अनुभवे योगिनः प्रकाशो, न तु अहमनुभवामि इति आत्मारोहेण, इह तु अन्वभूवम् इति अहमंशविश्रान्तिः अनालीढेदंभावैव अनुभवस्य इति युक्तमुक्तम्—यस्मात् अनुभवः पृथक् न भाति तस्मात् ऐक्यं भिन्नकालानां संविदां वेदिता इति ॥ ५ ॥

---

११९ परदेहाद्यवभाससंस्कारनिष्ठाम् ।

१२० दृढतरस्वपरविभागसंस्कारभ्रंशेन ।

१२१ भवतु वेत्यादि, ग्राह्यभूमिगतत्वेन अवभासनाभ्युपगमेऽपि वा तस्य परबोधस्य स्मृत्यनुभववृत्तान्तवैलक्षण्यमेव परबोधविषययोगिविज्ञानोत्पत्तेः, न तु एतन्निदर्शनेऽनुभवस्मृत्योर्ग्राह्यग्राहकभाव इति मेयपदेऽपि वेत्यस्य वाक्यस्य तात्पर्यम् ।

---

पं० ५ ख० ग० पु० स्वमृष्टमिति पाठः ।

यदि [१२२]अहं-भावविश्रान्तिवशात् अनुभवः स्मृतौ पृथक् न भाति इति उच्यते, तदा परामर्शान्तरं[१२३] साक्षादेव इदन्तया अनुभवं परामृशत्, यदि वा इदं-भावोचितं[१२४]घटादिविश्रान्तताम् अनुभवस्य प्रथयत् उपलब्धम्, इति तदनुसारेणापि किं न व्यवह्रियते इति पराभिप्रायं प्रतिक्षिपति

> स्मर्यते यद्दृगासीन्मे
> सैवमित्यपि भेदतः।
> तद्व्याकरणमेवास्या
> मया दृष्टमिति स्मृतेः[१२५] ॥ ६ ॥

लोकस्य तावत् एवं न संवेदनं[१२६], स हि न

---

१२२ अहमित्यात्मारोहेण भासनात्।

१२३ सा दृक् आसीत् इति इदन्तया अनुभवं परामृशदिति, घटे हि स्मर्यमाणे वेद्यदशाधिशायिनि अनुभवो ग्राहकेणैव मिलति इत्यत्राविवाद एव तस्मिन्नेव तु स्मर्यमाणे वेद्यीकृते किं वाच्यमिति।

१२४ उचितमिति—अनुभूयमानम्।

१२५ अत्रायं भावः—घटे ममानुभवोऽभूत् इत्यपि कथने घट एव वेद्यः यथाह तत्रभवान्

> 'घटज्ञानमिति ज्ञानं घटज्ञानविलक्षणम्।
> घट इत्यपि यज्ज्ञानं विषयोपनिपाति तत् ॥'

इति।

१२६ सा दृक् सोऽनुभवः मम आसीत् इति यत्स्मर्यते इत्यन्वयः।

पृथग्भूतां दृशं कांचित् मन्यते–'सा दृक् मे आसीत्' इत्येवम्, अपि तु यत् स्मर्यते एवं-भूतमपि यत् स्मरणं कस्यचित् विवेचकंम-न्यस्य, तत् स्मृतेर्व्याकरणम्, पदस्येव प्रकृति-प्रत्ययार्थनिरूपणं काल्पनिकं विभज्य आक-रणं परत्र प्रतिपादनमात्रम् । सोऽपि यदि मूलप्रतीतिं[127] विमृशति पूर्वोक्तक्रमेण[128], तदा अनुभवं पृथग्भूतं न वेद, यत एव तत् राहोः शिरः इतिवत् कल्पितं[129] भेदं मन्यते, अन्यथा स घटः इतिवत् 'सा दृक्' इत्यत्रापि प्राक्तनं दृगन्तरम् अपेक्षणीयं स्यात् । तत् इत्यनेन हि घटस्य[130] वा दृशो[131] वा पूर्वानुभव-विषयापत्तिः उच्यते, अन्यथा दृक् इत्येव स्यात् । ततश्च दृक् मया दृगन्तरेण अनु-

१२७ अहमित्यात्मारोहेण ।

१२८ अन्वभूवमहमिति ।

१२९ काल्पनिकम् ।

१३० स घट इत्यत्र ।

१३१ सा दृक् इत्यत्र ।

पं० १३ ग० पु० विषयतापत्तिरिति पाठः ।

भूता इति आपतेत्। तत्रापि तथात्वे[132]ऽनवस्था। ननु स्मृतेः मौलिकं[133] किंरूपम्? उच्यते—मया दृष्टम् इति। ननु अत्र दयितावदननलिनादिविश्रान्तं दर्शनम् उक्तम् न तु आत्मारूढं—कर्मणि निष्ठोत्पत्तेः। स एष स्ववाचमेव न चेतयति। कर्तुः क्रियया हि आप्यं कर्म इति दृशिक्रियायाः कर्तृनिष्ठतैव। तथा च कर्तृस्थामेव दृशिक्रियामाहुः[134]—'दर्शयते[135]

---

१३२ दृगन्तरेण अनुभूतत्वे।

१३३ मौलिकं पारमार्थिकं, मूलात्—अविसंवादिस्थानादागतमिति तात्त्विकमित्यर्थः।

१३४ द्विधा हि धातवः—कर्मस्थभावाः, कर्तृस्थभावाश्च, तथाहि येषां भावः कर्मणा अनुभूयते ते कर्मस्थभावाः, येषां कर्त्रा अनुभूयते ते कर्तृस्थभावाः। तत्र विभागः—

'कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया।
आसासिभावः कर्तृस्थः कर्तृस्था च दृशेः क्रिया॥'

इति। तद्यथा—तण्डुलान्पचति, अत्र च भाव्यमानो विक्लित्त्याख्यः क्रियात्मको धात्वर्थः कर्मस्थः इति दिक्। तथा आस्यते भवता इत्यत्र उपवेशनात्मा धात्वर्थः कर्तृस्थः, तदुक्तं हरिणा।

'गतिबोधाशनत्यागशब्देच्छाप्राप्तिवाचिनाम्।
द्वेषार्थाकर्मकाणां च भावः कर्त्रानुभूयते॥'

इति। यद्यपि शब्दानुशासने अपरिस्पन्दसाधनसाध्यत्वसंपरिस्पन्दसाधनसाध्यत्वाभ्यां भावक्रिययोर्भेदः तथापि सूक्ष्मेक्षिकया अत्रापि क्रियात्वमस्त्येव इति 'दृशिक्रियाम्' इत्युक्तम्।

१३५ दर्शयते इति—उपदिष्टा विधयः कर्मस्थभावकानां कर्तृस्थ-

भृत्यान् राजा इत्यादौ। जैमिनीयैरपि ज्ञान-रूपा दृशिः भावनात्मिका प्रमातृविश्रान्तैव[136] उक्ता, केवलं[137] प्रकटता विषयधर्मो, दृष्टता नाम अन्या, संवित् वा स्वतन्त्रा इति अन्यत्[138] एतत्। प्रमातृविश्रान्तत्वमेव कथयितुं मया इत्यु-क्तम्। तेन अन्वभूवमहम्, मयानुभूतम् इति शब्दवैचित्र्यमात्रमिदम्, न तु अर्थभेदः। अन्ये तु भिन्नक्रमत्वेन योजयन्ति—दृक् आसीत् सा मे इत्येवं, मया दृष्टम्—इति च यत् स्मरणं, 'तत् व्याकरणमस्याः' इति अनन्तरोक्तान्वभूवम् इति उचितपरामर्शायाः स्मृतेः इति, अपिः चार्थे ॥ ६ ॥

ननु दृष्टमपि निर्विकल्पेन यावत् न परा-मृष्टं विमर्शविशेषविश्रान्त्या तावत्[139] न स्मर्यते

---

क्रियाणां वा भवन्ति कर्तृस्थभावकश्च अयम्, एवं तर्हि सिद्धे सति यदनाध्यान इति प्रतिषेधं शास्ति तत् ज्ञापयत्याचार्यः भवत्येवंजातीय-कानामात्मनेपदम् इति, किमेतस्य ज्ञापकस्य प्रयोजनम् पश्यन्ति भृत्या राजानम् दर्शयते भृत्यान् राजा इत्यत्रात्मनेपदं सिद्धं भवति इति।

१३६ आत्मवर्तिनी एव।

१३७ स्वपक्षस्य विशेषमाह केवलमिति।

१३८ अन्यदिति—भवान्तरम्।

१३९ दृष्टमपि—वस्तु।

मार्गेदृष्टमिव तृणपर्णादि विशेषरूपेण, तदिदमेव विचारणीयं,—समनन्तरभाविविकल्पकाले तद्दर्शनम्[140] इदन्तया अत्रभातपूर्वं वा न वा इति तदेतत् आशङ्क्याह

या[141] च पश्याम्यहमिमं
घटोऽयमिति वाऽवसा ।
मन्यते[142] समवेतं सा-
प्यवसातरि दर्शनम्[143] ॥ ७ ॥

---

१४० निर्विकल्पनमनुभवनम् ।

१४१ अनुभवानन्तरभाव्यध्यवसायरूपम् अनुजीवति स्मृतिः अविकल्पिते स्मरणासंभवात्, ततस्तदध्यवसायमुखप्रेक्षिण्या स्मृत्या तदगोचरीकृतं न स्पृश्यते खपुष्पमिव, न चाध्यवसायेन प्रत्यक्षानन्तर भाविना अनुभवांशो वेद्यत्वेनाध्यवसितो ग्राहकभागे अस्मदर्थे सामानाधिकरण्येन विश्रान्तेः इति दर्शयति 'या च' इत्यादि । इदमत्र पुनः संक्षेपेण तात्पर्यम्—प्रत्यक्षपृष्ठपातिनापि परामर्शेन दर्शनस्याहंकारास्पदस्यैव परामर्श इति ।

१४२ मन्यते—साक्षात्कुरुते । अपि—शब्देन सूत्रे इदमाह यादृक् दर्शनस्य वपुस्तदेव निरूप्यं स्वसंवेदने विकल्पांशविचारस्तु अत्र क उपयुज्यते भवतु वा तथापि विकल्पनमपि न इदन्तोदन्तमाविष्करोतीति ।

१४३ अयमत्र सूत्रार्थः—या अवसा अध्यवसायः पश्यामि इत्येवं जायते सा तावद्दर्शनमवसातरि ग्राहकांशे प्रत्यवमृशन्ती तदनुभवसंस्कारान्मन्यते तथैव साक्षात्कुरुते यत्रापि स्वशब्दपरामृष्टं दर्शनं न भाति तत्रापि अयमिति तावत् प्रत्यक्षतः परामृश्यते सा च न भावनीयं रूपम् अपि तु दर्शनमेव, तच्च न भावधर्मत्वेन अध्यवसीयते इदमर्थेन

इह दर्शनं यादृशं निजेन वपुषा तादृशे-नैव तेन भातव्यं सर्वदा, तच्च[१४४] स्वकालेऽनन्य-प्रकाशम् अहम् इत्येतावता रूपेण उचितप्र-काशम्, तद्विकल्पांशविचारः तावत् न कुत्र-चित्[१४५] अङ्गम्, भवतु वा, किं तु अवसायोऽपि[१४६] एवंभूतः इति अपि-शब्देन सूचयति[१४७]। तत्र समनन्तरभाविना विकल्पेन वस्तु परामृश्य-मानम् अनुभवपरामर्शमुखेन वा परामृश्यते अहमिमं पश्यामि इति वर्तमानतया, इमम् इत्यनेन च प्रत्यक्षव्यापारत्वं प्रत्यक्षायमाण-त्वेन दर्शितम् । एवमेव[१४८] वा परामृश्यते—

---

संभेदाभावात्, तस्मान् न वेद्योऽनुभवोऽध्यवसाये वेद्यता व्यापकेदन्ता-विरुद्धास्मदर्थसंभेदोपलब्धेः न स्मृत्यानुभवो वेद्यत्वेन भास्यते, तथा-नध्यवसायात् अस्मदर्थसंभेदाध्यवसायाद्वा इति स्मृतिनिर्भासनायाः कारणस्यानुपलब्धिः, कारणाविरुद्धस्य वा इति । अध्यवसायविशेषश्च स्मृतिः न च कश्चिदप्यध्यवसायः अनुभवमिदन्तया विषयीकरोति ततः सापि कथमित्थं कुर्वीत कुर्वती वा अध्यवसायरूपतां जह्यादिति सूत्रतात्पर्यम् ।

१४४ तच्च-दर्शनं, स्वकाले—निर्विकल्पकाले ।

१४५ निर्विकल्पे सविकल्पे वा ।

१४६ द्वितीयः प्रत्ययः ।

१४७ नेदन्तोक्तमपि आविष्करोति इति भावः ।

१४८ अहं पश्यामि इति हि अस्मच्छब्दप्रयोगं विनापि इति ।

---

पं० ५ ग० पु० किं त्वध्यवसायोऽपिति पाठः ।

घटोऽयम्[149] इति । अत्र अयं-शब्देन प्रत्यक्षायमाणत्वमुक्तम् । तत्र[150] अन्त्ये विकल्पे दर्शनस्य पृथक् परामर्श एव नास्ति इति का तत्र इदन्ताशङ्का । ततश्च पारिशेष्यात् अहन्तया तस्य अत्रास्ति परामर्शः, तदभावे विकल्पस्य निमीलिताक्षेऽपि भावात् स्वयमर्थास्पर्शे स्फुटतमविषयपर्यवसितः कथमध्यवसायो भवेत् । आद्ये[151] तु दर्शनं परामृष्टमपि अस्मदर्थान्तर्भूतम् अहंभावास्पदम् अवसातरि विश्रान्तं स्वप्रकाशमेव परामृष्टम् इति विकल्पोऽपि न बोधान्तरबोध्यतां बोधयति बोधस्य । अवसायः अवसा, समवेतम् इति अपृथग्भावमाह । अवसातरि इति स्वतन्त्रेऽन्तर्मुखे बोधात्मनि अहन्तास्पदे इत्यर्थः ।

---

१४९ ननु घटोऽयमित्यध्यवसाये न अस्मदो नापि दृशः प्रयोगः तत् कुत्र विश्रान्तं किं परामृश्यते ? सत्यम् नैतयोरस्ति प्रयोगः, तेन विनापि तदुभयार्थपरामर्शोऽस्ति अयमिति, नात्र अयं शब्दो घटरूपतापरामर्शविश्रान्तिमात्रेण कृती भवति अपि तु तदीययोग्यदेशस्थत्वपरामर्शमुखेन तत्प्रत्यक्षतापरामर्शे विश्राम्यति इति ।

१५० पूर्वत्र तु अहं पश्यामि इति वर्तमानकालोऽपि अत्र तत्परामर्शान्तर्भावमाह तत्रान्त्ये इत्यादिना । अन्त्ये विकल्पे–घटोऽयमित्यत्र ।

१५१ अहं पश्यामि इत्यत्र ।

दर्शनम् इति निर्विकल्पकमनुभवनम् । उपलक्षणं चैतत् – विकल्पस्मृत्यादेरपि, ज्ञानस्य ज्ञानान्तरेण परामर्शे हि अयमेव न्यायः । विकल्पयाम्यहं, स्मराम्यहम्, विकल्पितं मया, स्मृतं मया इति अहन्तारूढ्यैव विकल्पादेः अवभासात् । अत एव आत्मनोऽमी विकल्पाद्याः शक्तिविशेषाः तद्विश्रान्तशरीरत्वात् इति दर्शितम्, ज्ञानस्मृत्यपोहनक्तिमान्, इत्यत्र ॥ ७ ॥

एवमियतः प्रमेयस्य यत्फलं तदुपसंहर्तुमाह[१५२]

तन्मयी[१५३] दृश्यते दृष्टो-

---

१५२ तेन अपूर्वमत्र न परामर्शनीयमिति भावः । चिद्वपुरेव ज्ञानादिशक्तिमान् स्मरणानुभवयोश्च एकमेव संविद्रूपत्वं तत्वम् ततश्चार्थादियदायातम्–यन्मायीयौ ग्राह्यग्राहकौ शुद्धसंविन्मयावेवावभासेते इति । प्रमेयस्य–विचार्यस्य ।

१५३ यदुक्तं पूर्वत्र ।

‘तेनैक्यं भिन्नकालानां संविदां वेदितैष सः ।’

इति तत्समर्थनप्रकारं विप्रतिपत्तिनिरासार्थमाह ‘तन्मया’ इति, विप्रतिपत्तिश्च बहुधा अवसातुः अहं नीलः क्षुधितः सुखी इति शरीरप्राणबुद्धिरूपस्य असंविद्रूपत्वादत्यन्तभेदाच्चेति, तत्रायं हेतुः समर्थकः । अयं भावः — आमर्शनेनोपलक्षितः संविस्स्वभावः यतः प्रमाता उपपद्यते कल्पितग्राहकस्तु भवन्नपि तत्रैव ग्राह्यवन्निर्भासते, तदिति – तस्मात् हेतोः संविदेकतानता न न समर्थिता, ग्राह्यग्राहकताभिन्नावित्यनेन भावप्रत्यय-

ऽयं स इत्यामृशत्यपि[१५४] ।
ग्राह्यग्राहकताभिन्ना-
वर्थौ भातः प्रमातरि[१५५] ॥ ८ ॥

'तत्' इति तस्मादर्थे पूर्वोक्तस्य प्रमेयस्य हेतुभावेन उपजीवनम् इह सूचयति । यत एवमुक्तम्—अनुभवस्य अर्थस्येव स्मरणात् न भेदेन अवभासः, स्मृतिशक्तिश्च परमेश्वरस्यैव, तत इदमत्र परिनिष्ठितं तत्त्वम् इति । इह स्मृतिः अनुभवं क्रोडीकरोति[१५६] इत्युक्तम्[१५७] ।

---

प्रकृतेर्द्वन्द्वस्य इतरेतरयोगो दर्शितः सहविवक्षात्रैव युक्ता द्वयोरपि ग्राह्यत्वा-द्ग्राहकत्वाच्चेति । तन्मयेति यदेतत्पूर्वमुक्तं तस्माद्धेतोरयमत्र तात्पर्यार्थः,—यत् विशुद्धसंविद्रूपे प्रमातरि ग्राह्यग्राहकरूपतया परस्परापेक्षया भिन्नौ वेद्यावर्थौ भासेते इति, कीदृशी? मया दृश्यते मया दृष्ट इत्यनुभवस्मर-णामर्शनोपलक्षिते अयमिति स इति च दर्शनभागानादरणेन अनुभूय-मानस्मर्यमाणार्थभागप्रधानेन आमर्शनेन उपलक्ष्यते, अपिश्चार्थे अपि-शब्दो भिन्नक्रमः, भिन्नावपि एकत्र आभासेते इति ।

१५४ आमृशति—अनुभवति, स्मरति चेति ।

१५५ न भ्रान्तिरूपा इत्यर्थः ।

१५६ अन्तः करोति इत्यर्थः ।

१५७ इह अभिसंधाने द्रष्टृभागबहुमाने च दृश्यप्राधान्येन परामृश्यते, स्मरणे प्रत्यक्षाध्यवसाये च आदरणमेव पुरःसरपूर्वादिशब्दैर्दर्शितम्, अ-नादरणं तु परित्यागादिशब्दैः । तथाहि अनभिसंधौ दृश्यभागबहुमाने च

---

पं० ७ ग० पु० आभास इति पाठः ।

अनुभवैश्च[१५८] द्विधा,–परामर्शभेदात् कदाचित्[१५८] स्वात्मपरामर्शपूर्वकम् अनुभाव्यम् आमृशति यत्र अस्य अभिसंधिप्रधानता 'मया दृश्यते' इति, कदाचित् अनुभवनीयमेव प्रधानतया परामृशति यत्र अनभिसंधेरेव सहसा वस्तूपनिपातः, अर्थक्रियां प्रति आग्रहविशेषो वा 'अयम्' इति, तत्रापि[१५९] च प्रकाशपरामर्शोऽस्त्येव, अन्यथा प्रकाशायोगात् । एवमुभयधानुभवे प्रत्येकं स्मृतिरपि द्वयपरामर्शमयी[१६०] उदेति इति चत्वारः स्मरणभेदाः, द्वौ अनुभवभेदौ[१६१] अनुसंधानरूपं प्रत्यभिज्ञानमपि एत-

---

दृग्भागो नाद्रियते अपि तु अर्थभाग एव इति चतुर्धानुभवे षोडशधा च स्मृतौ उभयस्पृशि च प्रत्यभिज्ञाने चतुःषष्टिधा पूर्वापरभागभेदप्राधान्येन च द्विगुणीभूते वर्तमाने हेयोपादेयादिभेदेन पुनरपि भिन्ने स्वतन्त्रविकल्पे च उत्प्रेक्षादिलक्षणे सर्वस्मिन्नेवमत्र संवेदने ग्राहको ग्राह्यश्च परस्परापेक्षया भिन्नप्रथौ परस्परापेक्षया च ग्राह्यग्राहकतां गतौ युगलसृष्टियोगेन भिन्नौ प्रकाशेते, क ? परामर्शनस्वतन्त्रकर्तृस्वभावे संविद्रूपे विशुद्धप्रमातरीति ।

१५८ द्रष्टृभागबहुमाने ।

१५९ तत्र हि न दृशो नापि अस्मदः इत्यत्राप्रकाशशङ्का ।

१६० दृष्ट इति स इति च उभयपरामर्शमयी ।

१६१ मया दृश्यते घटोऽयमिति वा ।

दुर्भेयमेलनात्मकम्[१६२] अत्रैवान्तर्भूतम् । तच्च[१६३] एतद्भेदात् अष्टधा, पूर्वापरविश्रान्तिकृतात् प्रत्येकं द्विधाभेदाच्च षोडशधा । तदेते द्वाविंशतिः संवेदनभेदाः । तेषु च ग्राह्यं तावत् प्रकाशात् अबहिर्भूतम् अन्यथा प्रकाशनायोगात्, बहिर्भूतं च तत्[१६४] अन्यथार्थत्वासंभवात्, न च तत एव, तदैव, तदेव पृथग्भूतं अत्र पृथग्भूतं च भवति इति नूनमन्यः कल्पितप्रकाशात्मा कश्चित् अत्र अर्थोऽस्ति, यतोऽयम् अर्थराशिः पृथग्भवन् अन्योन्यमपि पृथक्ताम् अधिगच्छेत्, अन्यथा प्रकाशाभिन्नानां परस्परमपि कथङ्कारं पृथग्भावो भवेत् । सोऽयं[१६५] वेद्यैकदेश एव, विच्छिन्न एव अनुज्झितवेद्यभाव एव, अहम् इति विच्छेदशून्योचितेन

---

१६२ स्मरणानुभवयोर्मेलनात्मकम् । अत्रैवेति—चतुर्ष्वेव विकल्पेषु ।

१६३ तच्चेति—अनुसंधानम् । स्मृतानुभूतमेलनात्मकेन प्रत्यभिज्ञानेन अष्टत्वम् ।

१६४ तदिति—ग्राह्यम्, तत एव—प्रकाशात्, तदैवेति—प्रकाशे सति, तदेव—प्रकाशमानम् ।

१६५ स इति—युक्तिबलानीतोयम् इति वक्ष्यमाणनयेनोक्तस्वरूप इति ।

---

पं० १४ ख० पु० विच्छेदशून्यप्रकाशोचितेनेति पाठः ।

परामर्शेन परामृश्यमानो मायाप्रमाता इति वक्ष्यते,–'देहे बुद्धौ,········'। (१।६।४) इत्यत्र। स च ग्राहकः इति उच्यते। एवं सममेव स्वात्मनि विमलमकुरस्थानीये यत् युगलकं स्वस्मात् प्रकाशरूपात् अव्यतिरिक्तम् अवभासयति परमेश्वरः तदेव एतत् भगवतो ज्ञानकर्तृत्वं, स्मरणकर्तृत्वं, ज्ञानशक्तिस्मृतिशक्तिरूपम् उच्यते इति तात्पर्यार्थः।

अक्षरार्थस्तु–मया दृश्यते इति, अयम् इति च यत् आमृशति प्रमाता प्रकाशरूपो येन[१६६] अनुभवति इति उच्यते, तत आमर्शनात् एतत् लक्ष्यते[१६७], ग्राह्यरूपेण ग्राहकरूपेण योजितौ घटादिदेहादिस्वभावौ अर्थौ वेद्यौ प्रमातरि विशुद्धप्रकाशरूपे भातः प्रकाशेते। एवं दृष्टः इति स इति च यत् परामृशति प्रकाशरूपः प्रमाता, यतोऽसौ स्मरति इति

---

१६६ येन–आमर्शनेन।

१६७ लक्ष्यते–लक्षणया बोध्यते।

---

पं० १४ ख० पु० स्वप्रकाशेते इति पाठः।

व्यपदेश्यः, ततोऽपि एतदेव लक्ष्यते[168]। अनुभवरूपोपजीवित्वं पूर्वोक्तं द्रढयितुं[169] प्रसङ्गात् अत्र ज्ञानशक्तेरपि उन्मीलनं कृतम्। लक्षणे शत्रादेशः[170]। अपि-शब्दश्चार्थे। अर्थ-शब्दो विच्छिन्नवेद्यवाची। ग्राहको मायीयः कल्पितः प्रमाता अशुद्धप्रकाशस्वभाव इति। आदितः श्लो० ॥ ३१ ॥

श्रीमदाचार्याभिनवगुप्तविरचितायामीश्वरप्रत्यभिज्ञासूत्रविमर्शिन्यां प्रथमे ज्ञानाधिकारे स्मृतिशक्तिनिरूपणं नाम चतुर्थमाह्निकम् ॥ ४ ॥

---

१६८ अत्रापि ग्राह्यरूपेण इत्यादि पुनरपि आवर्तनीयम्।

१६९ अत्रायं भावः – स्मृतिप्रकरणात्तस्या एव पूर्वं प्राधान्येनाभिधाने युक्ते यत् 'अत्र दृश्यते इति पूर्वमनुभवपरामर्श एव' उक्तं तत्तस्या एव समर्थनार्थमिति।

१७० आमृशति इत्यत्र लक्षणहेत्वोः क्रियायाः इति सूत्रेण।

---

पं० १ क० पु० व्यपदेश इति पाठः।

पं० २ क० पु० उपजीवितत्वमिति पाठः।

## अथ प्रथमे ज्ञानाधिकारे ज्ञानशक्तिनिरूपणाख्यं पञ्चममाह्निकं प्रारभ्यते ।

---

महागुहान्तर्निर्मग्नभावजातप्रकाशकः ।
ज्ञानशक्तिप्रदीपेन यः सदा तं स्तुमः शिवम् ॥

एवं तावत् स्मृतिशक्तेः स्वरूपं प्रतिपादितम्, अधुना तदुपजीवनीयज्ञानशक्तिपरामर्शनिर्णयं वितत्य, 'वर्तमानावभासानाम्' इत्यादिकया, 'सक्रमं प्रतिभासते' इत्यन्तया श्लोकैकविंशत्या निरूपयति[1]। तत्राद्येन श्लोकेन वस्तुनि[2] प्रतिज्ञां करोति, एवंभूता ज्ञानशक्तिः इति, ततः श्लोकद्वयेन प्रकाश एवार्थानां स्वरूपम् इत्याह । ततो द्वयेन प्रकाशबाह्यानामर्थानां सद्भावं विज्ञानवादोपगतवासनादूषणेन दृढीकृतम् आशङ्क्य, तृतीयेन तदनभ्यु-

---

१ इत्याह्निकसंगतिः, अवान्तरसंगतीरप्याह तत्र इत्यादिना ।

२ ज्ञानशक्तिविमर्शरूपे । पक्षवचनरूपा हि प्रतिज्ञा इति तदर्थहेत्वादिनिरूपकाणि चोत्तरपद्यानि ।

---

पं० १ क० पु० भावसार्थेति पाठः ।

पं० ३ क० पु० एवमियता तावदिति पाठः ।

पगमेऽपि तावत् न किञ्चित् उपरुध्यत इति दर्शयति। अथ श्लोकेन स्वदर्शनेऽर्थतत्त्वम् उपदर्शयन् बाह्यार्थसद्भावे प्रत्यक्षं निराकरोति[३] प्रमाणत्वेन। ततो द्वयेन अनुमेयतामपि[४] बाह्यस्य निरस्यति। अनन्तरं श्लोकेन चिदात्मनि अर्थानाम् अवश्यं सद्भावः परामर्शात्मना इति प्रकटयति। ततोऽपि प्रकाशस्य प्रमातृरूपस्य प्रत्यवमर्श एव[५] जीवितम्, इति श्लोकचतुष्टयेन अनुभवागमन्यायस्वरूपनिरूपणाभिः अभिधत्ते। अनन्तरं ज्ञानपरामर्श एव ज्ञेयं शुद्धं प्रमातृरूपतानुज्झितं च प्रथयति इति तस्यैव प्रधानत्वे न्यायं श्लोकत्रयेणाह। प्रकाशैकरूपत्वे च ज्ञानज्ञात्रादि भिन्नम् इति श्लोकेनाह। ततो ज्ञातरि इव विशुद्धे ज्ञानेऽपि अविकल्पकसविकल्पकरूपे विमर्श एव प्राणितम् इति श्लोकद्वयेनाह। ततो ज्ञातुर्ज्ञानस्य च पूर्वपक्षे दूषितं यत् भिन्नत्वं तत् उपसंहा-

---

३ प्रत्यक्षपातो यद्यपि बाह्यार्थसद्भावेऽस्ति तथापि प्रमाणतया न पततीत्यर्थः।

४ यत्र हि प्रत्यक्षमकिंचित्करं तत्रानुमानेन कृतमित्यपि-शब्दार्थः।

५ प्रत्यवमर्शेनैव प्रमातृत्वमित्यतस्तदेव जीवनं तस्य इति एव-कारार्थः।

रदिशाँ श्लोकेन समर्थयते, इति तात्पर्यम् आह्निकस्य । श्लोकार्थस्तु निरूप्यते ।

ननु स्मरणविकल्पादीनाम् अनुभव एव जीवितम्, तत्र यदि भेदेन आभासन्तेऽर्थाः, तत्ँ तेष्वपि तथैव अवभास उचितः, नो चेत् अन्यथा तदनुभव एव तावत् ज्ञानशक्तिरूपो विचारणीय इति आशयेनाह

वर्तमानावभासानां
भावानामवभासनम् ।
अन्तःस्थितवतामेव
घटते बहिरात्मना ॥ १ ॥

वर्तमानत्वेन स्फुटतया अवभासनम् इदमित्येवमाकारं येषां तेषाम्, यदेतत् बहिरात्मना — कल्पितमायीयशून्यादिशरीरान्तप्रमातृपृथग्भावेन हेतुना भिन्नानां, तँतो मायाप्र-

६ पार्यन्तिकफलतया, समर्थयते—उपोद्बलयतीत्यर्थः ।

७ तत्-तर्हि, तेषु—अनुभवस्मरणादिषु, तथैव-भेदेन ।

८ भेदेन नो चेदवभासः अभेदेनेति यावत्तदनुभवस्मरणादावपि चान्यथेत्यभेदेनैव परामर्श उचित इत्यर्थः ।

९ विशिष्टदेशकालाभासतया स्फुटमेव पृथग्भावेन ।

१० ततो—हेतोः ।

मातुः विच्छिन्नानाम् 'अवभासनम्'[11] तत् परमार्थप्रमातरि शुद्धचिन्मये 'अन्तःस्थितवतां' तेन सह ऐकात्म्यम् अनुज्झितवतामेव 'घटते' प्रमाणेन उपपद्यते, तेन अनुज्झितसंविदभेदस्य भावस्य कल्पितप्रमात्रपेक्षया भेदेन प्रकाशनं भगवतो ज्ञानशक्तिरित्युक्तं भवति ॥ १ ॥

प्रमाणेनोपपद्यते, इत्युक्तं तत् प्रमाणं दर्शयति

[12]प्रागिवार्थोऽप्रकाशः स्या-
त्प्रकाशात्मतया विना ।
न च प्रकाशो भिन्नः स्या-
दात्मार्थस्य प्रकाशता ॥ २ ॥

अर्थो नीलादिः, तस्य नीलादिरूपतैव यदि प्रकाशमानता न पुनरपरा[13] काचित् अर्थशरी-

---

११ अवच्छिन्नतया ।

१२ ज्ञानानुदये । प्रकाशाच्च भिन्नोऽर्थः प्रकाशमानो युक्तः, प्रकाशमानाच्चार्थाच्च भिन्नः प्रकाशो युक्त इत्युभयतोमुखमर्थप्रकाशयोर्भेदमपसारयति प्रागित्यनेन प्रथमार्धेन । अयं चार्थशरीरविश्रान्त एव प्रकाशोऽर्थवद्भिन्नस्वभावोऽस्तु इत्याशङ्क्याह न च इत्यादि, अर्थशरीरत्वे चार्थवदस्य भेदः प्राप्नोति न च स युक्तः अनुसंधानाभावप्रसंगात् ।

१३ यत एवं पूर्ववदप्रकाशता स्यात्तस्मात्प्रकाशमानता नाम नार्थस्य भिन्ना, आत्मा परमार्थरूपं न तु भिन्नः कश्चिदर्थः ।

रोत्तीर्णा प्रकाशात्मता तर्हि यथा[14] सर्वान् प्रति नीलमेव तत्संभावनया भण्यते, न कंचित् वा प्रति, वस्तुतो वा[15] स्वात्मन्येव तत् नीलं परस्य परनिष्ठतानुपपत्तेः, स्वात्मनि वा न नीलं न अनीलम् प्रकाशानुग्रहेण विना व्यवस्थानायोगात् । तथा[16] प्रकाशमानतापि अस्य सर्वान् प्रति न कंचित् वा प्रति अपि तु स्वात्मन्येव, स्वात्मन्यपि वा न स्यात् इति अन्धता जगतः । अथ इन्द्रियालोकादिक्षण[17]वर्गात् प्रकाशरूपोऽसौ नील[18]लक्षणो विशिष्ट[19] एव जातः, एवमपि स एव प्रसङ्गः, प्रकटतावा[20]-

---

१४ ज्ञानानुदये ।

१५ परमार्थसमीक्षया ।

१६ ज्ञानोदयेऽपि ।

१७ क्षणान्तरसहकृतादुपादानाद् घटक्षणात् ।

१८ प्रकाशमानघटरूपः ।

१९ ततश्चास्यैव प्रागवस्थातो विज्ञानोदयकाले विशेषो, न तु स्थिरपदार्थवादिनामिव बौद्धानां स एवासौ घट इति ।

२० प्रकटतावाद इति,–इत्थं तद्वादः–ज्ञानं नाम क्रिया, सा च फलानुमेया, फलं च प्रकटनाख्यं विषयधर्मः, सैव च वेद्यता इति कौमारिलाः प्रोचुः, तदेतत्प्रतिक्षिपति –अयमेवेति, यथा हि संनिवेशत्वनीलत्वादयो धर्मा यथा सर्वान्प्रत्यविशिष्टास्तथा वेद्यताख्यो धर्मो भवेत् इत्यन्ताद्यभावः प्रसज्येत् सर्वे च सर्वज्ञाः स्युरिति ।

देऽपि अयमेव दोषः, सर्वथा अर्थशरीरविश्रान्तः चेत् प्रकाशो मम अवभासते इति प्रमातृलग्नतया प्रकाशस्थितिः दुरुपपादा। प्रमाता हि तदानीम् इन्द्रियार्थमयोऽर्थरूपस्य प्रकाशस्य कारणं भवेत्[21], बीजमिव अङ्कुरस्य। न च अङ्कुरो बीजापेक्षोऽङ्कुरात्मा[22], ततो यदि न प्रकाशात्मा स[23] भवेत् 'प्रागिव' ज्ञानोदयात् पूर्वं यथा सोऽप्रकाशः, तथा ज्ञानोदयेऽपि स्यात्। ननु[24] ज्ञानम् अर्थप्रकाशरूपमेव, तत् कथं

---

२१ ननु यदीयमेवेन्द्रियादि तथाभूतघटता विशेषप्रकाशमानतोदये कारणतां प्रतिपद्यते तमेव प्रमातारं प्रति तथा व्यवह्रियेत इति सिद्धोऽयं नियमः, कारणेन च तावत्कार्यस्य संबन्धो दृष्टो बीजस्याङ्कुरः कुलालस्य घट इति, तद्वदेव च चैत्रस्य घटः प्रकाशमान इति भविष्यति। एतावता च तत्कृता प्रकाशमानता घटस्य इति सिद्धम्, स च यथा बीजकृता अङ्कुरता कुलालकृता च घटता, न तु सा अङ्कुरता घटता च स्वार्थक्रियाकालव्यवह्रियमाणतां कारणकलां भित्तित्वेनोपादाय व्यवह्रियते कारणनिर्भासानपेक्षयैवाङ्कुरादिस्वरूपव्यवहारात्, प्रकाशमानता तु ममेति चैत्रस्य इति च भित्तिभूतं प्रमातारमवलम्ब्य नियमेन व्यवह्रियते इति।

२२ लब्धस्वरूपः।

२३ अर्थः।

२४ ननु प्रदीपस्येव ज्ञानस्यार्थप्रकाशात्वमेव रूपं चेत्तत्कस्य चोद्यम् अर्थप्रकाशात्मके ज्ञाने सत्यपि नार्थः प्रकाशत इति पूर्वपक्षं संकलय्याह ननु इत्यादि, यथोक्तं तैः

'ज्ञानस्यार्थप्रकाशत्वं ननु रूपं प्रदीपवत्।'

इति। तत्र ज्ञानस्यार्थप्रकाशत्वमेव रूपम् इति त्रिधा विकल्पयति यावता

ज्ञानस्य उदयानुदययोः अर्थस्य तुल्यता स्यात्। स्यात् एतत् यदि उपपद्येत, यावता[25] अर्थात् भिन्नं यत् ज्ञानं प्रकाशरूपं, तत् अर्थस्य[26] संबन्धितया कथं स्यात्। यदि[27] तावत् अर्थः प्रकाशते, इत्येवंभूतं ज्ञानस्य स्वरूपं तत् अर्थज्ञानयोः अभेद एवायातः – अर्थस्वभावस्य ज्ञानत्वेन उक्तत्वात्, अर्थस्वभावत्वे[28] च प्रकाशस्य अर्थात्मतायाम् उक्तं[29] दूषणम्। अथ[30] अर्थं प्रकाशयति इति ज्ञानस्य स्वरूपम्, तर्हि

---

इत्यादिना, तत्रायं विकल्पार्थः किमर्थश्चासौ प्रकाशश्च इति सामानाधिकरण्यम्, अथ वा अर्थश्च प्रकाशश्च इति समुच्चयः, आहोस्वित् अर्थस्य प्रकाश इति संबन्धमात्रं तत्सर्वं क्रमेण दलयति संबन्धितया इत्यादिना।

२५ अर्थस्य प्रकाशकं ज्ञानमिति पक्षं तावदाह यावता इति, यावच्छब्दोऽत्र हेतौ।

२६ तत्र तावदर्थस्य प्रकाशकं ज्ञानं कर्तृषष्ठ्या दोषोद्भावनं विधत्ते अर्थस्य संबन्धितया इत्यादिना, अयं यदि नामार्थस्य प्रकाशनक्रियायां कर्तृत्वं तत्कथं ज्ञानस्यैवमतिशयः अन्यस्यातिशये अन्यस्यातिशयतारतम्यम् इति हि भौतिककथितं परस्पररूपाग्रहस्वरूपोऽत्र दुर्लङ्घ्यो दोषश्च प्रसज्येत्।

२७ प्रथमः पक्षः।

२८ द्वितीयः पक्षः।

२९ पूर्वमेव।

३० अर्थस्य प्रकाशकं ज्ञानम् इति तृतीयस्यैव पक्षस्य पुनरपि कर्मषष्ठ्या विकल्पयति अथ इत्यादिना, अयं भावः—ज्ञानमर्थं प्रकाशयति इति सिद्धस्तावत् प्रेषणाध्येषणादिविलक्षणस्तत्समर्थाचरणलक्षणः प्रयोज्यप्रयो-

प्रकाशमानमर्थं करोति ज्ञानम् इति आपतिते पुनरपि स एव दोषः । कृतप्रतानश्च अयं प्रकृत्यर्थ[31]ण्यर्थविवेको मयैव भेदवादविदारणे इति तत एव अन्वेष्यः। तस्मात् भिन्नः प्रकाशोऽर्थस्य संबन्धी भवति इति संभावनैव[32] नास्ति । अतश्च इदम् उपपत्त्या आयातम्—अर्थस्य स्वरूपं प्रकाशमानत्वं प्रकाशाभिन्नत्वम् इति। प्रकाशश्च यदि घटेऽन्यः पटेऽन्यः तदा अनुसंधानस्य अयोगः—द्वयोः प्रकाशयोः स्वात्ममात्रपर्यवसानात् इति वितत्य उपपादितं 'नश्येत् जनस्थितिः' इत्यत्र। तस्मात् एक एव प्रकाशः। एतदेव आवृत्त्या दर्शितं 'न च[33] प्रकाशो भिन्नः स्यात्' इति ॥ २ ॥

---

जकव्यापारभावः, तच्च एतदयुक्तम् इत्याह तर्हि इत्यादिना, इदमत्र तात्पर्यम्—प्रयोजकव्यापारस्य प्रयोज्यव्यापारनिष्ठत्वात् प्रकाशमान एवार्थो ज्ञानेन प्रकाशते इति, तच्च न युक्तं स्वयं प्रकाशमानस्यार्थस्य प्रयोजकव्यापारानपेक्षणे ज्ञानोपयोगवैयर्थ्यात् इति।

३१ प्रकाशते इत्यत्र प्रकृत्यर्थः, प्रकाशयति इति ण्यर्थः।

३२ शङ्कापि।

३३ न च प्रकाशः प्रकाशाद्भिन्नः, न च प्रकाशोऽर्थात् इति।

व्यतिरिक्तस्य[34] ज्ञानस्य अर्थप्रकाशरूपताम्
अभ्युपगम्यापि[35] बाधकान्तरमाह

भिन्ने[36] प्रकाशे चाभिन्ने
संकरो विषयस्य तत्[37] ।
प्रकाशात्मा प्रकाश्योऽर्थो
नाप्रकाशश्च[38] सिध्यति[39] ॥ ३ ॥

---

३४ अर्थाद्भिन्नस्य ।

३५ आदौ तावदर्थस्य प्रकाशमानता न व्यतिरिक्तं ज्ञानम् इति पारमार्थिकमेव इत्यपिशब्देन सूचितम् बाधकान्तरकथनार्थमभ्युपगम्येति बोध्यं तच्च विषयसांकर्यलक्षणम् ।

३६ एवं तावद्व्यतिरिक्तं ज्ञानम् अर्थस्य प्रकाशमानता इत्यसंगतोऽयमर्थः, भवतु वा–व्यतिरेके तु अभ्युपगम्यमाने विषयाणां च स्वरूपसांकर्यप्रसंगः इति दर्शयति सूत्रेण, भिन्ने प्रकाशे इति, भिन्ने स्वात्ममात्रपर्यवसाने, अभिन्ने नीलाद्याकारशून्ये ।

३७ यत एवं प्रकाशेऽर्थाद्भिन्ने संकरः प्रसज्येत् न चासौ तथा, तस्मात् ।

३८ चकारोऽत्र पूर्वसूचनाय,जडस्य स्वात्मनि न काचित् सिद्धिरित्यर्थः ।

३९ अयं भावः–भिन्न इति अर्थात् प्रकाश इति बोधमात्रपरमार्थे, अभिन्न इति स्वात्मनि, भिन्नेऽपि सर्वपदार्थानुप्रवेशात्प्रकाश इत्येतावन्मात्रतात्त्विकमभिन्नमेव तत्त्वमवशिष्यत इति भिन्नेऽपि विषयसंकरः, अत एव चाभिन्नेऽपि संपन्ने स एव दोषः, ततश्च विषयव्यवस्थापि न सिध्येत्, सा चावश्यं समर्थनीया, तदेतत्समर्थयति–प्रकाश्योऽर्थ इति, अयमाशयः–न भावस्य प्रकाश्यता नाम धर्मः अपि तु अर्थः प्रकाशते

यदि अर्थात्[४०] अन्य एव ज्ञानात्मा प्रकाशः अत एव भिन्नोऽर्थतः, तर्हि स्वात्मनि तस्य प्रकाशमात्ररूपत्वात् अभेद एव। तथाहि नीलस्य प्रकाशः, पीतस्य प्रकाशः इति यो नीलांशः पीतांशश्च, स तावत् ज्ञानस्य स्वरूपम्

---

स्वं वपुरेवास्य प्रकाशः तदेवाह प्रकाशात्मा इति, ननु चात्र दोषबाहुल्यादलं विषयसंकीर्णतापादकेन प्रबोधेन इत्यत आह नाप्रकाश इति इति सुबोधमञ्जरीकारः।

४० अर्थात् भिन्नः सन् बोधमात्ररूपो यः प्रकाशः सोऽर्थानां न कश्चिद्भिन्नत्वेन परस्य परनिष्ठत्वायोगात्, तथा च सति प्रकाशबलेन यत् नीलादीनां तत्स्वरूपारूषणायाः सामर्थ्यं, ततो नीलः प्रकाशः पीतः प्रकाश इति अत्र सर्वपदार्थानुप्रवेशनात् प्रकाश इत्येतावन्मात्रमभिन्नं तत्त्वमवशिष्यते प्रकाशबलाच्च नीलपीतयोर्भेदोऽभ्युपगन्तव्यः, स च प्रकाश उभयत्रापि अभिन्नस्तुल्यः तदनुग्रहात् यदि नीलं तत्पीतं न कस्मात्, न वा नीलं नापि पीतं तदपि च न व्यवतिष्ठेत, अनेकान्तवादोऽपि न च प्रतिष्ठामधिगच्छेत् एकज्ञानज्ञेयस्फुटत्वादेः स्थूलादेश्च न व्यवस्था स्यात् इति बहुशाखासंकरः, तस्मात् प्रकाशस्य यदि न परनिष्ठता तथापि संकर इति चकारार्थः। तदिति यत एवं प्रकाशेऽर्थाद्भिन्ने संकरः प्रसज्यते न चासौ तथा तस्मादर्थात् प्रकाशमानादभिन्न एव प्रकाशः, भिन्नत्वे हि बाधकप्रमाणं विषययोगेन पाटवादिना स्मरणदिशा च विषयसंकीर्णतापत्तिः, तद्विरुद्धं च विषयासंकीर्णत्वमुपलभ्यते इति व्यापकविरुद्धोपलब्ध्या भिन्नत्वमर्थात् प्रकाशस्य प्रतिषिध्यते। ननु एवमर्थ एव नीलादिरस्तु किं ततो भिन्नस्वभावेन स्वरूपाभिन्नेन प्रकाशनाम्ना बोधेन विषयसंकीर्णतात्मकदोषापादकेन अङ्गीकृतेन, आह—नाप्रकाशश्च इति, चः पूर्वपक्षसूचनाय, एतदुक्तं भवति 'अप्रकाशस्य जडस्य स्वात्मनि न काचित्सिद्धिः'। उक्तं हि 'प्राङ्नीलं यदि स्वात्मन्यनीलं न वान्यत्किंचित् तत् किं दुष्येत्' तथा च अजडप्रमातृसिद्धिः एवमात्मनीत्यादि। तस्मात् प्रकाशरूपात् बोधादभिन्न एवार्थ इति सूत्रार्थः।

भेदवादत्यागापत्तेः । अथ विषयः[41], तदेवेदं विचार्यते — इह प्रकाशबलात् नीलपीतयोः भेदोऽभ्युपगन्तव्यः, येनैव[42] च प्रकाशेन नीलो नील एव इति उपगम्यते, तेनैव च प्रकाशेन पीतः पीत इति कथं[43] संगच्छताम्, नीलेन[44] जनितः, पीतेन जनितः, तेन वा सह एकसामग्रीक इत्यादि यत् उच्यते, तत् सिद्धे

---

४१ ज्ञानस्य ।

४२ प्रकाशस्यार्थाद्भिन्नत्वे त्रिविधं बाधकं,–१ विषययोगेन २ पाटवादिना ३ स्मरणदिशा चेति, तत्र द्वयोर्विषय एवान्तर्भावात्संकरो विषयस्य इत्युक्तम्, तत्र क्रमेण तदेव त्रिविधत्वं सूचयति,–येनैव इत्यादिना । तत्र नीलो नील इत्यर्थापौनरुक्त्यात् द्वितीयस्य नीलशब्दस्याभिधाबाधे प्रतीयमानार्थप्रतिश्रुतिरभ्युपगन्तव्या तच्च व्यवस्थायां पर्यवस्यति तच्च न संभवति इत्याह कथं संगच्छताम् इति ।

४३ तस्य साधारणत्वात् ।

४४ कौमारिलमतम् । ते हि प्राहुः–साकारताकृत एवायं नियमः, यदाहुः

'तत्रानुभवमात्रेण ज्ञानस्य सदृशात्मनः ।
भाव्यं तेनात्मना येन प्रतिकर्म विभज्यते ॥'

इति । तस्मान्नीलाकारोऽपृथग्भूतो बोधात् इति सिद्धे तदाकारतया विनापि तत्र तत्र नीले पीते वा नियत एव बोधस्यावस्थानरूपा व्यवस्था इति, तदेतत्संक्षिप्यावतारयति नीलेन जनित इति । अत्रावान्तरभेदसामग्रीवादिन आहुः – एतेनापि समानकाल एव विषयः स्यात् ततः प्रत्यासत्तिरेवैकसामग्र्यधीनात्मा नियमकारिणी तथाह्यर्थज्ञानक्षणलक्षणात्पर्यायेणान्योन्यमुपादानसहकारिभावेन वर्तमानादेकस्मात्सामग्रीरूपा-

नीलपीतयोर्भेदे[४५] स्यात्, स[४५] एव विचार्यः। अथ[४६] नीलाकारोऽसौ तत्[४७] यदि प्रतिबिम्बबलात् तद्द्वितीये[४८] बिम्बानवभासात् अयुक्तम्[४९]। अथ अभेदः, तर्हि त्यक्तो भेदवादः, तथा[५०] कारणतादिवादे शिखरस्थज्ञानं[५१] बहुतरनीलादिजन्यम् एकत्र पटु अन्यत्र मन्दम् इति कथं भेदः—प्रकाशशरीरस्य अभेदात्, तथा[५२]-भूते च अन्यतरदर्शनोद्बोधितेऽपि संस्कारे बलादेव[५३] अशेषस्मरणप्रसङ्ग इति भूयान्

---

त्परस्परोन्मुखरणरसिकोरभ्रयुगलवद्विषयिविषयभावावनुमेलनयोग्यौ स्वोपादानकारणपरम्पराप्रतिलब्धजनितचेतनस्वभावविषयसंबोधौ जाताविस्यर्थः।

४५ नीलपीतादिभेदः।

४६ सौत्रान्तिकमतं। असौ—प्रकाशः।

४७ तदिति सा नीलाकारता यदि प्रतिबिम्बबलाज्जायते।

४८ यस्मात्प्रतिबिम्बो जातः।

४९ इति विषयसंकीर्णता।

५० पाटवादिसंकीर्णतामाह। तदेतत् न्यायवादिमतम्। अत्र तेन वा सहैकसामग्रीक इति पूर्वमुक्तमपि साकारतावादप्रसङ्गान्मध्येऽन्यदप्युपपाद्य इदानीं तद्भागमवतारयति—तथा कारणता इत्यादि, तेन नैतदपूर्वमिति भ्रमितव्यम् यदि हि अपूर्वं स्यादत्रापि प्रश्नपूर्वमेव कथयेत् इति।

५१ शिखरस्थस्य यदुत्पद्यते ज्ञानम्।

५२ स्मृतिद्वारेणापि संकरमाह तथेति, तथाभूते—अभिन्ने इत्यर्थः।

५३ अयं भावः—नीले पीते चानुभवः समकालमेव तथापि नीलदर्शनेनैव संस्कारो दत्त इति पूर्वपक्षिमतम् अत्राह बलादेवेति, इदं तात्प-

संकरः । स्यात् एतत्, अर्थे[54] एवास्तु, किमनेन दोषोपपादकेन प्रकाशेन इति । अत्राह—अप्रकाशस्य प्रसिद्धिरेव न काचित्, स्वात्मनि हि नीलं यदि पीतं[55] न किंचित् वा, तत् किं दुष्येत्, अत एव ग्रन्थकृतैव अन्यत्र उक्तम्

'एवमात्मन्यसत्कल्पाः प्रकाशस्यैव सन्त्यमी ।
जडाः प्रकाश एवास्ति स्वात्मनः स्वपरात्मभिः[56] ॥'

इति, तत् यदि प्रकाशः तदा भवति अर्थः, प्रकाशश्च असौ[57] कथम् । यदि प्रकाशतैव घटस्य वपुः सैव पटस्य इत्यादि विश्ववपुः प्रकाशः सिद्धः[58] ॥ ३ ॥

एकस्यैव प्रकाशस्य एवंभूतक्रमाक्रमकार्यकारणभावादिविचित्रवैश्वरूप्यप्रदर्शनसामर्थ्यरूपम् ऐश्वर्यम्, इति तावत् पर्यवसाययित-[59]

---

र्यम्—तदा च प्राच्योऽनुभवो निर्विशेषः प्रबुद्धश्च नीलस्यैव न पीतस्येति नियमाभावात्पीतप्रकाशात्मापि भवेदिति पीतेऽपि सा स्मृतिः स्यात् इति ।

५४ नीलादिः । दोषो—विषयसंकीर्णतात्मा ।

५५ अनीलम् ।

५६ न च प्रकाशः प्रकाशान्निन्नः न च प्रकाशोऽर्थात् ।

५७ अर्थः ।

५८ तस्मात् प्रकाशरूपाद्बोधादभिन्न एवार्थं इति राद्धान्तः ।

५९ स्वयं स्वसंविदागमयुक्तिभिः निश्चयेऽपि परस्य युक्तिभिः हृदयंगमीकरणीयम् ।

व्यम्। तच्चैवं पर्यवस्यति, यदि प्रकाशस्य विचित्रभावे हेत्वन्तरम् अपाकर्तुम्[60] तत्र[61] प्रकाशस्य अविचित्रस्य क्रमेण विचित्रताकारणं प्रतिबिम्बात्मकं, तत्प्रतिबिम्बसजातीयं[62] यत् तदेव नीलादिरूपं बाह्यम्, तच्च यद्यपि अनुमेयं, तथापि इदं नीलमिति प्रत्यक्षेण[63] अध्यवसायात् अध्यवसायप्राणितत्वाच्च प्रमाणस्थितेः प्रत्यक्षव्यपदेश्यं भविष्यति। बाह्यार्थवादिकथितमिति[64] हेत्वन्तरम् अनुमीयमानं बाह्यरूपम् आशङ्क्यमानत्वेन प्रदर्शयति

तत्तदाकस्मिकाभासो[65]
बाह्यं चेदनुमापयेत्।
न ह्यभिन्नस्य बोधस्य
विचित्राभासहेतुता[66] ॥ ४ ॥

---

६० सौत्रान्तिकैरुपगतं हेत्वन्तरं चेद् दूष्यते इत्यर्थः।

६१ सौत्रान्तिकमतमेव तावद्दर्शयति।

६२ नीलादिजातीयम्।

६३ संवेदनरूपप्रकाशविच्छेदेन।

६४ तस्मादेकस्यैव बोधस्य क्रमिकानाभासात्प्रतिबिम्बकल्पनेनार्पयितुं चतुरस्तच्छायाधारी बाह्योऽर्थवर्गः कल्पनीयोऽनुमानेनेति।

६५ अज्ञातहेतूद्भवाभासः।

६६ भाविसूत्रार्थोपस्कृतस्यैतत्सूत्रार्थस्य चेदिति निपातो बाह्यार्थवा-

न वासनाप्रबोधोऽत्र
विचित्रो हेतुतामियात् ।
तस्यापि तत्प्रबोधस्य
वैचित्र्ये किं निबन्धनम्[६७] ॥५॥

इह बोधः तावत् अभिन्नः, प्रकाशमात्रमेव हि अस्य परमार्थः, प्रकाशाधिकं[६८] यदि नीलस्य रूपं, तर्हि तत् अप्रकाशरूपम् इति न प्रकाशेत । अथ तथा[६९] प्रकाशत्वमेव अस्य रूपम्, पीतप्रकाशः कथं स्यात्[७०] । अथापि क्रमिकनीलपीतादिप्रकाशरूपमेव तस्य[७१] रूपम्, नीलाद्याभासशून्योऽहमिति प्रकाशः स्वापाद्यवस्थासु[७२] न स्यात् । तस्मात् प्रकाशः प्रकाश एव, अणु-

---

दिना संभाव्यमानतामाह, वासनाप्रबोधादविचित्राद्विचित्रोऽयं तत्तदिति य उक्त आकस्मिको निर्भासमानबोधहेतुकत्वासंभवादज्ञानहेतुक आभासः स बाह्यमनुमापयति इति संभाव्यते । न ह्यविचित्राद्बोधात्क्रमिक आभासभेदो युक्तस्तत एकान्तेन बाह्य एव हेतुतयानुमीयत इति सूत्रार्थः ।

६७ तस्माद्बाह्य एवार्थो भिन्नाभासकारणमित्यर्थः ।

६८ भिन्नं विरुद्धमिति यावत् ।

६९ नीलरूपतया ।

७० नीलस्य पीताद्भेदात् ।

७१ बोधस्य ।

७२ आदिशब्देन मदमूर्छासमाधानकैवल्यादयो गृह्यन्ते ।

मात्रमपि न रूपान्तरम् अस्य अस्ति इति अभिन्नो बोधः, तस्य च अभिन्नस्य कदाचित् नीलाभासता कदाचित् पीताभासता इति ये विचित्राभासाः तत्र[७३] कारणत्वम्[७४] हि यस्मात् न उपपन्नम्—हेतौ अभिन्ने कार्यभेदस्य असंभवात्, तस्मात् स स विचित्रनीलपीतादिरूप आकस्मिकोऽज्ञातप्रत्यक्षसिद्धहेतुकः सन् बाह्यं[७५] विज्ञानगतप्रतिबिम्बात्मकस्वस्वभावसंपादकम्[७६] औचित्यवशात्[७७] निजरूपसदृशं क्रमो[७८]पनिपतद्रूपबहुतरभेदात्मकं ज्ञानात्[७९] सर्वथा

---

७३ विचित्राभासेषु।

७४ प्रकाशस्य।

७५ अप्रकाशमानं। बाह्यशब्दोऽत्रार्थक्रियाकारिणि वस्तुनि निरूढो, न तु प्रकाशबहिर्भूतमात्रमाह।

७६ दर्पणप्रतिबिम्बतया स्वभावान्तरतामनापन्नम्।

७७ तथाभूतनीलाद्याभासारोपकः प्रतिबिम्बारोपक इव सदृशः। विज्ञानान्तर्वर्ती नीलाद्याभासः सदृशमर्पकमपेक्षते प्रतिबिम्बत्वात् दर्पणप्रतिबिम्बवदिति प्रयोगः। औचित्येति बोधप्रतिबिम्बताप्रकर्षे ये प्राप्ता नीलाद्याभासास्तेषामर्पकेण सदृशेन तावद्भवितव्यं, दर्पणाभासानामिव ततश्च नीलाभाससदृश एव नीलः सिध्यत्यनुमानेन तस्यैव बाह्योऽर्थ इति संज्ञा।

७८ क्रमोपनिपतदिति यौगपद्येनाभासभेदस्यैकोऽपि हेतुः स्यादिति तत्तदिति। बहुतरेति यतो हि एते नीलाद्याकारा न नियतक्रमाः, न हि नीलाभासादनन्तरं पीताभासेनैवान्येन भवितव्यमिति नियमः।

७९ बोधविलक्षणत्वात्।

पृथग्भूतम्[८०] अनुमापयति इति संभावयते बाह्यार्थवादी। न च अस्य इदं संभावनामात्रम्, अपि तु निश्चयपर्यवसायि एव भवति। तथाहि विज्ञानवादिना यो हेतुः वैचित्र्ये वासनाप्रबोधलक्षण उक्तः स न उपपद्यते। 'स्मृतिजनकः[८१] संस्कारो वासना[८२]' इति तावत् प्रसिद्धम्, इह तु अनुभववैचित्र्ये हेतुः पर्येषणीयो वर्तते। अस्तु[८३] वा नीलाद्याभाससंपादनसामर्थ्यरूपा ज्ञानस्य योग्यतात्मिका शक्तिः वासना[८४], तस्याश्च स्वकार्य[८५]संपादनौन्मुख्यं प्रबोधः[८६], ततो बोधेषु आभासवैचित्र्यम् इति । तत्रापि[८७] तु ब्रूमः—यद्यपि आभासानां[८८] ज्ञानान्तर्वर्तिनाम् अपारमार्थिकं संवृति[८९]सत्त्वम् उच्येतापि,

---

८० अप्रकाशमानत्वात् ।

८१ न तु अपूर्वानुभवजनकः स्मृतेरनुभवमूलत्वात् ।

८२ व्यापिनीरूपा ।

८३ पक्षान्तरमाह 'अस्तु वा' इति ।

८४ व्यापिनीरूपा ।

८५ स्वकार्य—नीलाद्याभासात्मकं ।

८६ शक्तिरूपः ।

८७ तत्रापि इति सौत्रान्तिकोक्तिः ।

८८ आभासन्ते इति आभासाः ।

८९ संवृतिः—विकल्पबुद्धिः ।

तथापि यत् एषां कारणम् तत् वस्तुसदेव अङ्गीकार्यम्—अवस्तुनः सर्वसामर्थ्यविरहितालक्षणस्य कार्यसंपादनप्राणितसामर्थ्यात्मकस्वभावानुपपत्तेः । एवं-स्थिते[९०] या एता वासना आभासकारणत्वेन इष्यन्ते, तासां बोधात् यदि भिन्नं रूपम्, तच्च परमार्थसत्, तत् अयं शब्दान्तरप्रच्छन्नो बाह्यार्थवादप्रकार[९१] एव । अथ संवृतिश्चेत्[९२], तर्हि तेन[९३] रूपेण कारणतानुपपत्तिः, अथ येन रूपेण आसां[९४] पारमार्थिकता तेन कारणता । तत् तर्हि ज्ञानमात्रं, तच्च अभिन्नम्, इति नीलाद्याभासरूपस्य कार्यभेदस्य असिद्धिः[९५] । एवं वासनानाम् अविचित्रत्वे तत्प्रबोधो विचित्र इति को[९६] प्रत्याशा । भवन्तु वा वासना भिन्नाः, तथापि

---

९० कारणवस्तुसत्त्वे ।

९१ फलितं मम मनोरथकल्पतरुणा यत् अस्मन्मतं प्रविष्टोऽसि इत्यर्थः ।

९२ 'कारणमपि' इत्यत्रान्वेयम् ।

९३ तेन—संवृतिसत्त्वेन ।

९४ आसां—वासनानाम् ।

९५ ज्ञानात्मिकानां वासनानां कारणभूतानां भेदस्यासिद्धत्वात् ।

९६ नैव कापि इत्यर्थः ।

बोधमात्रातिरिक्तस्य देशकालभावादेः प्रबो[97]-धकाभिमतस्य विचित्रस्य कारणस्य अभावात् प्रबोधोऽविचित्र इति एक एव प्रबोधः[98] इति समम्[99] एव नीलादिवैचित्र्यं भासेत। अथ[100] स्वसंतानवर्तीनि बोधान्तराणि विचित्राणि प्रबोधकारणानि इति, तदसत्[101], सुख-दुःख-नील-पीतादि-पूर्वापरादिदेश-कालभेदस्य विज्ञानमात्ररूपत्वे विज्ञानस्य च प्रकाशमात्रपरमार्थतायां स्वरूपभेदासंभवे बोधवैलक्षण्य[102]अनुपपत्तेः। पर[103]प्रमातृरूपेषु बोधान्तरेषु संतानान्तरशब्दवाच्येष्वपि तुल्योऽयम्[104] अवैलक्षण्यप्र-

---

९७ प्रबोधकत्वेनाभिमतस्य इति योज्यम्।

९८ प्रबोधः—आभासरूपः।

९९ सममेव—युगपदेवेत्यर्थः।

१०० अथेति विज्ञानवादिमताशङ्का, अथ—यदि इत्यर्थः।

१०१ बाह्यार्थवादी प्राह— तदिति।

१०२ सर्वथा बोधव्यतिरिक्तस्वकारणाधीनविचित्रपदार्थान्तरानभ्युपगमात्सर्वेषामेव कारणानामेकबोधात्मन्येव पर्यवसानाद्वैचित्र्यमहेतुकमेव स्यात् इति तदेवं सिध्यति—यदि बोधरूपतातिरिक्तमनादिनिजनिजबाह्यकरणपरम्पराप्रभवं बाह्यमेव किंचित् वस्तु भवेत् इति बाह्यार्थवादिना स्वपक्षः प्रत्युज्जीवितः।

१०३ अत्रैव पक्षान्तरमाह—परेत्यादि।

१०४ बोधस्यैकरूप्यात्सर्वत्र।

कार[105]: । तत्रापि[106] परकीयाभिमतस्य कृशस्थूलादेः कायस्य, श्वासप्रश्वासादेः प्राणस्य, सुखदुःखादेः धीगुणस्य, अनुमात्रभिमत[107]संविन्मात्ररूपाभेदे परत्वं कस्य इति न विद्मः । बोधस्य तन्निष्ठस्य[108] इति चेत्, सोऽपि[109] प्रमाणेन यदि न सिद्धः तत् असन् एव, सिद्धोऽपि प्रमेयतया[110] चेत् तत् जड एव, तथापि[111] च कायादिवत् एव ज्ञानमात्रस्वभावः[112] – स्वसंविन्मात्ररूपत्वे[113] परं प्रति अस्य[114] असिद्धेः । ननु[115] व्याहारादिक्रिया स्वात्मनि[116] इच्छया व्याहरे-

---

१०५ अभेदरूपता इत्यर्थः ।

१०६ संतानान्तरेष्वपि तुल्यतामेव समर्थयति–तत्रापीति ।

१०७ अनुमातृत्वेनाभिमतेति योज्यम् ।

१०८ तन्निष्ठस्य–परनिष्ठस्येत्यर्थः ।

१०९ सोऽपि बोधः, प्रमाणेन–प्रत्यक्षादिना, तत्–तर्हि ।

११० प्रमेयतया–वेद्यतया ।

१११ तथापि–जडत्वेऽपि ।

११२ परनिष्ठो बोधः, सोऽपि जड इत्यर्थः ।

११३ स्वस्य ज्ञानमात्ररूपत्वे ।

११४ अस्य-परनिष्ठबोधस्यासिद्धिः ज्ञानानां परस्परमसंवेदनात् इति भावः ।

११५ अत्रैव सौगतः प्रमाणमाह ननु इति व्यवहारादिक्रिया–भाषितादि ।

११६ स्वात्मनि–स्वसंताने ।

यम् इत्येवंरूपया हेतुभावेन व्याप्ता दृष्टा तत् चैत्रकायेऽपि तया[117] तद्धेतुकया भाव्यम् । न च मत्संततिपतिता समीहा[118] अस्ति इति स्वसंवेदनेन[119] निश्चितम्, ततश्च परसमीहा[120] सिद्ध्यति, तदेव संतानान्तरम्[121] इति । अत्रोच्यते[122] – इह अनुमातुः व्याहाराभासो द्विधा भवति – व्याप्तिग्रहणकालेऽविच्छेदप्रा-[123]णोऽहं[124] व्याहरामि इत्येवंरूपः । अनुमाना-वसरे च 'व्याहरति अयम्' इति विच्छे-दजीवित[125] इति अन्यस्य व्याप्तिः गृहीता,

---

११७ तया – व्याहारादिक्रियया । तद्धेतुकया–इच्छाहेतुकया ।

११८ समीहा–परकीया इति बोध्यम् ।

११९ स्वसंवेदनेन– स्वानुभवेन, स्वानुभवसिद्धम् इति यावत् ।

१२० व्याहारेच्छा ।

१२१ परदेहचैतन्यम् ।

१२२ सौत्रान्तिकः प्रतिवक्ति–अत्रेति, इह–संतानान्तरानुमाने ।

१२३ परव्याहारो हि समीहापूर्वको भवितुमर्हति मम व्याहारवत् इति व्याप्तिः ।

१२४ इह व्याहरेयमहम् इति समीहा, ततो व्याहरामि इति समी-हितृत्वरूपस्वसंतानगतो व्याहाराभासः, तत्समकालमेव च समीहितृ-व्यतिरिक्ते अनुमातृप्रमातरि परसंतानरूपे व्याहरति इत्येवंभूतो व्याहारा-भासोऽनुमातृकर्तृकत्वाभावेन मैत्रकर्तृकत्वात् तत् मैत्रात्मकपरसंतान-समवायी द्वितीयः ।

१२५ अविच्छेदप्राणस्य अहमिति हि अस्मदर्थविश्रान्तित्वादविच्छेद-जीवितत्वम् ।

अन्यश्च[१२६] आभासः कथम् इदानीं हेतुः[१२७] स्यात्, व्याहरति इति आभासस्य च हेतुः[१२८] अविदित एव इति कथं ततो हेतोः समीहा अनुमीयेत, किं च 'व्याहरति अयम्' इति यः प्रमात्रन्तरेऽनुमातृसंमते[१२९] विच्छिन्नतया अवभासः सोऽनुमेयसंमतायाः परसमीहायाः[१३०] कथं कार्यः स्यात्[१३१] । तस्यां[१३२] हि व्याहरामीत्याभासः कार्यो योऽसौ अविच्छेदजीवितः[१३३] । न च अविच्छेदमयस्य[१३४] विच्छेदमयः कार्यम् इति युक्तम्[१३५]—तथाभूतकार्यकारणभावग्रहणोपायाभावनात्, नहि[१३६] स्वात्मनि योऽयम् अविच्छिन्नाभासः[१३७], स

१२६ अन्यः–विच्छेदप्राणः ।

१२७ परसमीहाया गमकः ।

१२८ समीहारूपः ।

१२९ अत्र 'अनुमातृत्वेन संमते' इति योज्यम् ।

१३० अविदितत्वात्तस्याः ।

१३१ स यदि वक्ति इति बोध्यम् ।

१३२ तस्याः–परसमीहायाः ।

१३३ स्वात्माविच्छेदप्राणः ।

१३४ व्याहरामि इत्येवं रूपाभासस्य, विच्छेदमयः–व्याहरत्ययमित्येवंरूपः ।

१३५ दूरत्वात् इति बोध्यम् ।

१३६ नहि इत्यस्य प्रमाणेन सिद्धम् इति वक्ष्यमाणेन संबन्धः ।

१३७ व्याहरामि इत्येवंरूपः ।

परत्र[138] विच्छिन्नं 'व्याहरति अयम्' इत्येवंरूपम् आभासं जनयति, इति केनचित् प्रमाणेन सिद्धम्,—परसिद्धिपूर्वकत्वात् अस्य अर्थस्य[139], परप्रमातृसिद्धेश्च । एवंभूतार्थसिद्ध्यधीनत्वेन इतरेतराश्रयात् । न च अवश्यम् अविच्छिन्नात् विच्छिन्नेन[140] भाव्यम् इति नियमोऽस्ति व्यभिचारात् । न च विच्छिन्नोऽपि आभास उत्पद्यताम्, इति तदनुसंधानात् तदुत्पत्तिः[141] नियता — तत्सद्भावेऽपि[142] अनुत्पत्तेः तदभावे[143] च उत्पत्तेः, विच्छिन्नः[144] आभासः परत्र उत्पद्यताम् इति या समीहा तया सह परत्र उत्पन्नस्य विच्छिन्नाभासस्य कार्यकारणभावग्रहणमेव परासिद्धौ[145] न युक्तम् इति व्याप्तेरेव असिद्धिः।

---

१३८ अनुमेये ।

१३९ अविच्छिन्नाभासो विच्छिन्नाभासं जनयति इत्येवंरूपस्य ।

१४० व्याहरामि इत्यस्मात्, व्याहरत्ययम् इत्यनेन ।

१४१ अविच्छिन्नाभासस्यानुसंधानाद्विच्छिन्नाभासोत्पत्तिः ।

१४२ अविच्छेदमयस्य सद्भावे ।

१४३ अविच्छेदमयाभावे ।

१४४ व्याहरत्ययमित्येवंरूपः, परत्र–प्रमातरि ।

१४५ परप्रमात्रसिद्धौ सत्यां ।

प्रमात्रन्तराणि[146] च यदि भिन्नानि तदा तन्निष्ठानाम्[147] अवभासानां भेद एव, 'ज्ञानादव्यतिरिक्तं[148] च' इति न्यायात् । ततश्च एकाभासनिष्ठत्वाभावात् एकाभासविश्रान्तः संभूय प्रमातृणां व्यवहारो[149] न स्यात्—इति अन्योन्यानुपरक्तं भूतग्रस्तप्रकृतिप्रायं[150] जगत् आपद्येत । अनुमीयमानमपि च बोधान्तरम् अनुमातृ[151]संमतात् बोधात् यदि भिन्नम्, तत्[152] अस्ति तावत् संभवः[153]—यत् प्रमेयं बोधात्[154] भिन्नम् अस्ति इति[155] । सहोपलम्भनियमादेः[156] अनैका-

१४६ प्रमातारः-जीवाः ।

१४७ अन्यप्रमातृस्थितानाम् । अवभासानां-चैतन्यानाम् ।

१४८ 'ज्ञानादव्यतिरिक्तं च कथमर्थान्तरं व्रजेत्' इत्याचार्यधर्मकीर्त्युक्तिः ।

१४९ शिबिकावाहनादिः ।

१५० मूर्छितप्रायम् ।

१५१ अनुमातृत्वेन संमतादित्यन्वेयम् ।

१५२ तत्-तर्हि ।

१५३ कर्तृकर्मणोस्तादात्म्यानुपपत्तेः ।

१५४ अनुमातुः संबन्धिनः ।

१५५ अस्मन्मते प्रविष्ट इति बोध्यम् ।

१५६ यथोक्तमन्यत्र,

'युगपद्वेदनाज्ज्ञानज्ञेययोरेकरूपता ।'

न्तिकत्वात्[157] नीलपीतादिनापि प्रमेयराशिना किम् अपकृतम्[158], येन[159] अस्य स्वरूपविश्रान्तिः न सह्यते, तस्मात् प्रमात्रन्तराणामपि असिद्धिरेव, सिद्धौ[160] वा सर्वप्रमात्रन्तर्गता आभासा[161] एकैकत्र[162] परत्र आभासवैचित्र्यहेतुं वासनोद्बोधवैचित्र्यं जनयेयुः[163]—नियमे हेत्वन्तराभावात् इति, तथापि[164] न नीलादिवैचित्र्यसिद्धिः । एवं वासनानां तदुद्बोधहेतूनां च विचित्राणाम् अनुपपत्तिरेव । ततश्च स्थितमे-

---

इति । ततश्च विषयज्ञानयोः सहोपलम्भनियमादभेदः नहि अनयोरेकस्यानुपलम्भे अन्यस्योपलम्भोऽस्ति न च एतत्स्वभावविवेके युक्तं प्रतिबन्धकारणाभावात् इति

'सहोपलम्भनियमादभेदो नीलतद्धियोः ।'

इति सिद्धम् । तथायुक्तं विज्ञानबाह्यस्य नीलादेः सत्त्वात् इति ।

१५७ अनियतत्वात् ।

१५८ भवतामिति शेषः ।

१५९ येन–अपकारेण, अस्य–प्रमेयराशेः, विश्रान्तिः–निष्ठा, न सह्यते–विज्ञानवादिना इति शेषः ।

१६० अभ्युपगम्यापि इत्यर्थः ।

१६१ आभासाः–ज्ञानानि ।

१६२ एकैकत्र–सर्वत्र ।

१६३ युगपत्सदासंनिहितत्वात्तेषाम् ।

१६४ एवं पक्षे कृतेऽपि ।

तत्, अभिन्नो बोधः[१६५] तस्य आकस्मिकाभास[१६६]भेदहेतुत्वानुपपत्तेः बाह्योऽर्थोऽनुमेयः संभाव्यते—इति यदि बाह्यार्थवादिना उच्यते, इति श्लोकद्वयार्थः। चेच्छब्दः श्लोकद्वयवाक्यार्थशङ्काद्योतकः ॥ ५ ॥

एवम् आशङ्क्यमानत्वेन परसंभावना[१६७] दृढा दर्शिता[१६८], अधुना तु एनां संभावनां शिथिलयितुं तावदाह[१६९]

स्यादेतद[१७०]वभासेषु[१७१]
तेष्वेवावसिते सति।

---

१६५ बोधः—चिन्मात्रम्।

१६६ आभासः—ज्ञानम्।

१६७ बाह्यार्थवादिनः।

१६८ चेदित्यनेन विज्ञाननयप्रतिषेधात्।

१६९ पश्चाच्च सिद्धान्तं कथयिष्यति ईश्वराद्वयवादी।

१७० व्यवहर्त्रपेक्षया तावद्भावव्यवस्था क्रियमाणा अवभासेष्वेव निरपाया पर्यवस्यति इत्यधिकतरादृष्टवस्तुपर्यालोचनम् इदं स्वच्छन्दचेष्टितम् यथाहि इन्द्रियविचारं विना न किंचिदुपपद्यते तथाहि केचित् इन्द्रियापवर्जनेनैव षड्धातुवादिनः अन्ये तद्द्वयवादिन इति, तथैव प्रतिभासातिरिक्तात्यन्तपरोक्षार्थान्वेषणम् अन्तरेणैव व्यवहारपरिसमाप्तिः इति अनङ्गं तद्विचारः, नापि विचारसिद्धमपि बाह्यस्यानुपपत्तेरित्याह 'स्यादेतदिति' एवं चाभासानामेवार्थत्वे प्रकाशः अर्थः अर्थोऽपि च प्रकाशः इति परस्परात्मकत्वमनयोर्भवति इत्यभिप्रेत्योक्तं श्रीगीतासु

व्यवहारे किमन्येन
बाह्येनानुपपत्तिना ॥ ६ ॥

'स्यादेतत्-इति पूर्वोक्तसंभावना[172]भ्युपगमे यदा व्याख्यायते तदा किं तु इति वाक्यशेषेण तच्छैथिल्यविषयं संभावनान्तरं[173] शेषश्लोकेन दर्श्यते इति व्याख्येयम् । यदि तु अध्याहारो[174] न सह्यते तदा स्यादेतदिति[175] इदमपि संभावनान्तरं स्यात्, यदनेन श्लोकेन उच्यते इति एकवाक्यतया[176] योज्यम्, अन[177]-

'यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।'
इति । तथा
'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।'
इति । तथा महागुरुभिः शिवदृष्टौ
'आत्मैव सर्वभूतेषु स्फुरन्निर्वृतचिद्विभुः ।
अनिरुद्धेच्छाप्रसरः प्रसरद्दृक्क्रियः शिवः ॥'
इति ।

१७१ सत्यपि बाह्येऽर्थे तत्समर्पितेषु निःसपत्नतया विजृम्भमाणेषु इत्येवकाराशयः । अवसिते-समाप्ते ।

१७२ संभाव्यते तत् यद्भवता उक्तम् ।

१७३ भवदुक्तसंभावनातोऽपि दृढतमसंभावनान्तरमस्तीत्यर्थः ।

१७४ बुद्धिसंनिहितस्य व्याख्यानावसरे समुच्चारणमध्याहारः ।

१७५ अधिकमिदं संभावनान्तरमिति ।

१७६ 'संभवत्येकवाक्यत्वे वाक्यभेदो न युज्यते' ।

१७७ अधुना पक्षद्वयेऽपि समानोऽर्थः ।

यापि कष्टकल्पनया बाह्यान् अर्थान् प्रसाधयता भवता तैः[178] न किंचित् कर्तव्यम्, आभासैरेव[179] तैः भवता अभ्युपगतैः व्यवहारसिद्धेः, न हि नित्यानुमेयेन[180] कश्चित् व्यवहार इति किं बाह्येन, यत्र[181] साधकं च नास्ति प्रमाणम्, बाधकं च प्रकाशात् भेदे अनुमेयतयापि प्रकाशनाभाव इति तावत् मुख्यम्[182]। अभ्युच्चयबाधकास्तु[183] अवयविनो[184] वृत्त्यनुपपत्तिः, समवायासिद्धिः[185], क-

---

१७८ तैः—बाह्यैरर्थैः।

१७९ सत्यपि बाह्येऽर्थे तत्समर्पितेषु आभासेष्वेव व्यवहारसिद्धेः।

१८० अप्रकाशमानत्वात्।

१८१ अनुपपत्तिना इत्यस्यार्थं व्याचष्टे यत्रेति।

१८२ पूर्वं हि मुख्यं बाधकं प्रमेयस्वरूपमनपेक्ष्यैव सांशमनंशं विरुद्धमविरुद्धं यद्भवतु तद्भवतु प्रकाशाद्भिन्नं न प्रकाशते इति सर्वथा बाधकम्।

१८३ अधिका बाधका उच्यन्ते इत्यर्थः, अभ्युच्चयेति—पूर्वं हि प्रमाणमुखेन प्रवृत्तं बाधकमुक्तम् अधुना स्वयमपि प्रमेयस्वनिरूपणप्रवृत्तप्रतीतिद्वारेणापि प्रवृत्तं प्रमेयस्वरूपमेव उन्मूलयति इति अधिकबाधकत्वमस्येति।

१८४ अवयवेषु अवयवी वर्तते।

१८५ यदि हस्तश्चलति न शरीरं, तदा अवयवावयविनोर्युतसिद्धिः। यथा न्यायकन्दल्यां विरुद्धधर्मयोगो विवेचितः—पाणौ कम्पवति तदाश्रितं शरीरं न कम्पते पादे वा कम्पमाने तद्गतं शरीरं न कम्पते इत्येकस्य विरुद्धधर्मताप्रसङ्गः। तथा एकावयवावरणे तत्समवेतस्यावयविनो न ग्रहणम् अनावृतावयवग्रहणे तु ग्रहणमित्येकस्य युगपद्ग्रहणमग्रहणं

न्याकम्पावरणानावरणरक्तारक्तादिग्भाग[186]भेदा-
दिविरुद्धधर्म[187]योगः । अणु[188]संचयबाह्यवादेऽपि सं-
चयस्य अन्यस्य[189] अभावे अणव एव, ते[190] च यदि
संयुज्यन्ते निरन्तरतया तत् अवश्यं दिग्भा-
गभेदः, देवना[191]क्षे षट्सु दिक्षु संचीयमानेषु

---

प्राप्नुत इति, अवयविनः प्रत्यवयवमेकदेशेन वृत्तिः कार्त्स्न्येन वा, न तावत् एकदेशेन वृत्तिः–अवयवव्यतिरेकेणास्यैकदेशाभावात्, कार्त्स्न्येन वा वृत्तौ अवयवान्तरे वृत्त्यनुपपत्तिः–एकावयवसंसर्गावच्छिन्ने रूपे अवयवान्तराणामनवकाशात् तत्स्वरूपव्यतिरेकेण चास्य स्वरूपान्तराभावात् ।

१८६ दिग्भिरुपलक्षितो भागभेदः ।

१८७ इति मूर्ते बाधः ।

१८८ वैभाषिकपरिभाषितं दुदूषयिषुराह, पूर्वत्र कणादमते अवयव्यादिसमर्थने दोषमुद्भाव्य अधुना तेभ्यो विशेषज्ञा निरवयवमेवाभ्युपागमन् तथा सति पूर्वोक्तदोषासंभव इत्याह अणुसंचयेति । अत्र निरवयवत्वे न पूर्वोक्तदोषानवकाशः ।

१८९ परमाणुविलक्षणस्य ।

१९० अणुतावादे कथंचिदपि अनुपपत्तिः ततश्च संयोगेनाणुसंचयवादं संभावयति तत्र सान्तरं बहुदोषदूषितत्वात्यक्त्वा निरन्तरपक्षे पृच्छति–'ते च' इत्यादि तत्र यदि सान्तराः परमाणवः तदहश्यता, संचयस्यावधिनियमाभावः, अर्थक्रियानुपयोगः, धारणकर्षणाद्यभावः, आलोकपुञ्जघटयोरेकदेश एव दर्शनं, पार्थिवतैजसादिवस्त्वन्तरैकप्रसङ्ग इति हि एते शतशो दोषाः ।

१९१ देवनाक्षे—षट्कोणे ।

षट्सु अणुषु मध्यमस्य परमाणोः[193] यत्रैव धाम्नि[193] एको लग्नः तत्रैव यदि[194] अपरः तत् एकपरमाणुमात्रता[195]। अथ अन्यत्र एकः अन्यत्र अपरः तत् अवश्यं भागभेदापत्तिः[196], इति भाग एव परमार्थसन्[197], तस्यापि एषैव सरणिः इति न किंचित् अवशिष्यते बाह्यं तत्त्वतः। न चैतत्[198] वाच्यम्–मूर्तानाम् एकदेशत्वायोगात्[199], संयोगे[200]

---

१९२ घटो हि विततरूपत्वेन प्रथमानः पूर्वापरादिभागवानेव प्रथते, न चैवं परमाणुमयत्वे घटते, तथाहि–योऽसौ पूर्वाभिमतः परमाणुस्तेन द्वितीयः परमाणुः संश्लिष्यमाणः तदेकतामापद्यते निरवयवयोर्हि संलग्नत्वे कियद्संलग्नमवशिष्यते, संलग्नौ च अन्योन्यस्वरूपपरिमग्नावित्येकपरमाणुर्भासेतैव पुनरप्यपरपरमाणुसंस्पर्शे तथैव इत्यनन्तपरमाणुयोजनेऽपि एकपरमाणुमात्रप्रकाशः स्यात् सोऽपि वा न स्यात् एकैकपरमाणोरतीन्द्रियत्वात् इति।

१९३ धाम्नि–स्थाने।

१९४ षड्केन युगपद्योग एकस्य परमाणोः षडंशत्वमापादयन्परमाणुसद्भावं बाधते।

१९५ युगपदेव संलग्नाः षडणवो यदि कल्प्यन्ते तत्समषड्कोणवस्तुसमुदायः कथम् इति परमाणुमात्रतैव।

१९६ तथा च परमाणुता कथमिति शेषः।

१९७ अणुः इति योज्यम्।

१९८ तदेकपरमाणुमात्रता इत्येतदेव समर्थयति 'न च' इति।

१९९ भिन्नदेशत्वादित्यर्थः।

२०० प्रदेशवृत्तिः संयोगः।

भिन्नदेशत्वा[201]योवृत्तेः तन्निष्ठं [202]द्व्यणुकं नाम कार्यद्र[203]व्यम् अणुपरिमाणम्, तेभ्यः त्रिभ्यो महत्कार्यम् इति । अवयविवादो हि अयम्, स च पूर्वमेव अपबाधितः । [204]यच्च अव्याप्यवृत्तित्वं संयोगस्य उच्यते तन्निरंशे कथं संगच्छताम् । स्वाश्रये हि यदि [205]असौ समवैति किम् अन्यत् [206]अस्य अवशिष्टम् यत् न व्याप्नुयात् इति, अभ्युच्चयबाधकं च इदम्, इति न अत्र अस्माभिः [207]भरः कृतः । विस्तरेण च प्रज्ञालङ्कारे दर्शितम् आचार्यशंकरनन्दनेन ॥ ६ ॥

ननु बाधकं नाम प्रमाणसिद्धे वस्तुनि न किंचित् कर्तुं समर्थम्—तेनैव दृढेन प्रमाणेन बाधकाभिमतस्य बाधितस्य अप्रमाणत्वसंपादनात् । दर्शितं च इह साधकं प्रमाणं कार्य-

---

२०१ इति कणादमतम् । तन्निष्ठं–स्थूलनिष्ठम् ।

२०२ द्वाभ्यां संयुक्ताभ्यां अणुकमवयविरूपमारभ्यत इति ।

२०३ कार्यद्रव्यं–किंचित्स्थूलम् ।

२०४ अव्याप्यवृत्तिः संयोग इत्यक्षपादीयं मतमाशङ्क्याह–यच्चेति ।

२०५ असौ–संयोगः ।

२०६ अस्य–संयोगस्य ।

२०७ भरः–प्रयत्नातिशयः ।

हेतुः 'तत्तदाकस्मिकाभास' इति कारिकया इत्याशङ्क्य आह

चिदात्मैव[208] हि देवोऽन्तः-
स्थितमिच्छावशाद्बहिः ।
योगीव निरुपादान-
मर्थजातं प्रकाशयेत्[209] ॥ ७ ॥

इह[210] तावत् स्वप्न-स्मरण-मनोराज्य-संकल्पादिषु नीलाद्याभासवैचित्र्यं बाह्यसमर्पकहेतुव्य[211]तिरेकेणैव निर्भासते इति यद्यपि अस्ति संभवः, तथापि तदा[212]भासवैचित्र्यम् अस्थैर्यात् सर्वप्रमात्रसाधारण्यात् पूर्वानुभवसंस्कारजत्व-

---

२०८ वासनाप्रबोधवादिमतं बाह्यार्थवादिना निःशेषीकृतं, तच्च तावत्सिद्धान्तिना स्वरूपोपयोगासंभावनया शिथिलीकृतं तथापि दोलावदनवलम्बमानं सिद्धान्तिना तावत्स्वमतेन स्थिरीक्रियते–चिदात्मेत्यादिना । एव-शब्दः 'अप्रयाससिद्धः अयमर्थो बहुतराभीष्टसंपादकश्च' इति द्योतयति ।

२०९ अयमर्थः–चित्तत्वमेव यतः स्वात्मरूपमहमित्यनन्यापेक्षप्रकाशविमर्शं ततस्तस्य यदाभासनं तत्तावदुपपन्नं न प्रयत्नसाध्यं तदभेदिनश्च भावराशेः प्रकाशात्मत्वादुपपन्नमाभासनमिति ।

२१० योगीव इति किमर्थो दृष्टान्त इत्याह इहेति ।

२११ तत्र तदभावात् ।

२१२ स्वप्नोत्थितम् ।

संभावनात्[213] अवस्तु इति शङ्क्येत[214] । यत् पुनरिदं योगिनाम् इच्छामात्रेण पुरसेनादिवैचित्र्यनिर्माणं दृष्टम्, तत्र उपादानं[215] प्रसिद्धमृत्काष्ठ-शुक्र-शोणितादिवैचित्र्यमयं न संभवत्येव[216], न हि एवं[217] वक्तुं शक्यम्—सर्वगताः परमाणवो योगीच्छया झटिति संघटिताः कार्यम् आरप्स्यन्ते इति । यत एतत्[218] लोकप्रसिद्धकारणभावानतिक्रमसिद्धये निरूप्यते[219] । न च एतत् प्रसिद्धम्—परमाणुभ्य एव स्थूलं घटादि

---

२१३ संभावनात्–शङ्कनात् ।

२१४ शङ्क्येतेति, अविदितसंवित्स्वातन्त्र्यैस्तत्ससंशयमेव ख्याप्यतामिति न पुनरत्र संवित्स्वातन्त्र्यज्ञैस्तत्कारणान्तरमन्विष्यते । यदाह भट्टदिवाकरवत्सः—

> 'न दृश्यते स्वप्रतिभासशक्तेः
> स्वप्नेऽर्थवैचित्र्यनिमित्तमन्यत् ।
> तद्दृष्टसामर्थ्यतया सदैषा
> विश्वप्रपञ्चप्रथनैकहेतुः ॥'

इति ।

२१५ उपादानं कार्येणाभिन्नं यथा घटस्य मृत्पिण्डः ।

२१६ एव-कारेणात्र परोऽपि न विप्रतिपत्त्या शङ्कत इत्याह ।

२१७ एवमिति–एवं तात्पर्ये सिद्धान्तिते सति ।

२१८ एतदिति–परमाणवो योगीच्छया इत्यादि ।

२१९ निरूप्यते इत्यत्र भवद्भिरिति शेषः ।

जायते इति,[२२०] किं तु कपालादिव्यवधानेन, तत्रापि नियतसहकारि[२२१]समवलम्बनम् करचरणादिव्यापारो विशिष्टदेशकालधर्माधिपत्ययोगः शिक्षाभ्यासप्रकर्ष इति, इयति च आश्रीयमाणे योगी कुम्भं निर्मिमाणः कुम्भकारप्रसिद्धसमस्तसामग्रीसमर्जनपुरःसरं घटं घटयन् कुम्भकार एव स्यात्, तस्मात् प्रसिद्धकारणोल्लङ्घने किम् असंचेत्य[२२२]मानपरमाण्वाद्युपादानकारणान्तरचिन्तया इति। तत्र योगिसंविद[२२३] एव सा तादृशी शक्तिः—यत् आभासवैचित्र्यरूपम् अर्थजातं प्रकाशयति इति। तत्[२२४] अस्ति संभवः—यत् संवित् एव अभ्युपगतस्वातन्त्र्या अप्रतीघातलक्षणात् इच्छाविशेषवशात् संविदोऽनधिकात्मताया अनपायात् अन्तःस्थितमेव

---

२२० इति—शब्दो वाक्यसमाप्तौ।

२२१ सहकारिकारणं कार्येण भिन्नदेशं यथा घटस्य दण्डचक्रचीवरादि।

२२२ असंचेत्यमानम् असंभाव्यमानम्।

२२३ योगिनश्च शरीरप्राणाद्यारूषितमपि चैतन्यं तावति नैर्मल्याभिर्मातृस्वशरीरप्राणादिसहितप्रमात्रन्तरापेक्षया बाह्यत्वेन तस्यार्थस्य चित्तत्वमेव सर्वत्र निर्मातृ।

२२४ तदिति—तस्मात्।

सत् भावजातम् इदमित्येवं प्राण[225]बुद्धिदेहादेः वितीर्णकियन्मात्रसंविद्रूपात् बाह्यत्वेन आभासयति इति, तत् इह विश्वरूपाभासवैचित्र्ये चिदात्मन एव स्वातन्त्र्यं किं न अभ्युपगम्यते स्वसंवेदनसिद्धम्, किमिति हेत्वन्तरपर्येषणाप्रयासेन खिद्यते। एवकारेण इदमाह — सर्वेण तावत् वादिना विषयव्यवस्थापनं संविद्रूपम् अनपह्नवनीयम् आदिसिद्धं हि तत् इति उक्तम्। तस्य च स्वातन्त्र्यमेव देवशब्दनिर्दिष्टं चिद्रूपत्वम्, इति किम् अपरकारणान्वेषणव्यसनितया। हि यस्मात् एवं प्रकाशयति देव इति संभाव्यते, तस्मात् किं बाह्येन अनुपपत्तिना, इति पूर्वेण संबन्धः ॥ ७ ॥

ननु एवम्[226] उभयथापि संभावनानुमानम्[227] उन्मिषति, तत्र किं मकुरप्रतिबिम्बितघटादिदृष्टान्तेन ज्ञानप्रतिबिम्बताभासवैचित्र्ये विज्ञा-

---

२२५ अत्र हि परप्रकाशाद्बहिर्भूतत्वे अप्रकाशमानतापत्तिप्रसङ्गात्तत्सिद्ध्ये कल्पितप्रमात्रादर इति दर्शयन्नाह प्राणेत्यादि।

२२६ एवमिति — वक्ष्यमाणम्।

२२७ संभावनानुमानमिति — सर्वथा हि परनिष्ठत्वमिहोपपादनीयं, तच्च संभावनारूपानुमानेन द्विधा समानमेव विकसति इति कस्योपादानं कस्य वा त्याग इति।

नदर्पणातिरिक्तं तत एव बाह्याभिमतं[228] हेतुं कल्पयेम? किं वा योगिदृष्टान्तेन संवित्स्वातन्त्र्यमेव हेतुभावेन ब्रूयाम? तदिदं सांशयिकं[229] वर्तते इति आशङ्क्य बाह्यार्थानुमानसंभावनां सूत्रद्वयेन अपाकर्तुमाह

अनुमानमनाभात-[230]
पूर्वे नैवेष्टमिन्द्रियम्।
आभातमेव बीजादे-
राभासाद्धेतुवस्तुनः[231] ॥ ८ ॥

आभासः[232] पुनराभासा-
द्बाह्यस्यासीत्कथंचन।

---

२२८ बाह्याभिमतमिति—स्वसदृशभावान्तरसंक्रमणरूपम्।

२२९ सांशयिकं—संशयमापन्नम्।

२३० यत्किंचिदनुमानं तत्समग्रं विकल्परूपं, विकल्पश्चाननुभूते नोदेति।

२३१ अत्रायं भावः—पूर्वावभासान्तःस्थित एवार्थो नान्तरीयकार्थदर्शनवशात्तद्देशकालादियोजनया विमर्शनमनुमानम्, इन्द्रियमप्यनुमीयते किंचिन्मात्रं निमित्तं, तच्च बीजाद्याभासादाभासितमेवेति।

२३२ बाह्यतासामान्यमपि पुनर्न कदाचित्प्रतिभातम्, अतो न बाह्यार्थस्यानुमानिकता युज्यते इत्याह आभास इति।

अर्थस्य नैव तेनास्य
सिद्धिर्नाप्यनुमानतः[२३३] ॥ ९ ॥

न केवलम् अनन्तरश्लोकनिर्दिष्टाभिः युक्तिभिः प्रत्यक्षेण बाह्योऽर्थो न आभासते, इयदेव हि प्रत्यक्षं – यत् नीलं भाति इति स्वप्रकाशसंविद्रूपं[२३४], नाधिकं किंचित् इति, यावत् अनुमानेनापि न अस्य बाह्यस्य सिद्धिः इति अपिशब्दः । तत्र अनुमानम् अत्र नैव प्रवर्तितुम् उत्सहते । प्रवृत्तमपि न प्रकृतसिद्धिम्[२३५] आदध्यात् इति अनेन सूत्रद्वयेन दर्श्यते । तत्र अनुमानं – विकल्पः, सर्वश्च अयं विकल्पोऽनुभवमूल इति प्रसिद्धम् । तेन यत् सर्वथा अनाभातपूर्वम् – अननुभूतचरं तत्र अनुमानम् अनुमितिव्यापारो विकल्पात्मा नैव केनचित् वादिना इष्यते । ननु भवतु

२३३ अयं भावः – घटाद्याभासाद्बाह्यस्यानुपपत्तेः नासीदाभासः, ततस्तत्र नानुमानादपि सिद्धिरिति ।

२३४ पूर्वोक्त्या साधितम् ।

२३५ बाह्यार्थसिद्धिरूपाम् ।

पं० ६ क० पु० संविन्मात्रं रूपमिति, ख० पु० संविन्मात्रं नाधिकमिति पाठः ।

प्रत्यक्षतो दृष्टेऽनुमाने संकथा इयम्, सामान्यतो दृष्टे तु किं वक्ष्यसि यथा अर्थोपलब्ध्या इन्द्रियानुमाने?[२३६], उच्यते — तत्रापि[२३७] विकल्पेन यथा सोऽर्थः स्पृश्यते[२३८] तथा अनुमेय इति स्थितिः। विकल्पश्च न इन्द्रियादिकम् अर्थं केनचित् संनिवेशविशेषात्मना स्पृशति, अपि तु किंचिदुपलब्धेः कारणम्[२३९] इति अमुना स्वभावेन, स च स्वभावः कारणतालक्षणः प्रत्यक्षगृहीत[२४०] एव। तथा च बीजात् अङ्कुरः तन्तुभ्यः पट इत्यादौ कार्यकारणभावः प्रत्यक्षानुपलम्भबलेन[२४१] तावत् निश्चयः[२४२]। तत्र च

---

२३६ इन्द्रियमपि पूर्वानुभूतमेव, न हि तत्प्रातिस्विकेन आकारेणानुमीयते अपि तु सामान्येन।

२३७ द्विविधं प्रत्यक्षम् — सविकल्पकनिर्विकल्पकभेदात्।

२३८ स्पृश्यते — प्रकाश्यते इत्यर्थः।

२३९ इन्द्रियमिति ज्ञेयम्।

२४० आभातमित्यस्यार्थः।

२४१ प्रत्यक्षानुपलम्भौ हि कार्यकारणभावं साधयतः, तत्र प्रत्यक्षं प्रत्याभासं प्रमाणम् अनुपलम्भोऽपि अन्योपलम्भस्वभावत्वादेवमिति।

२४२ तद्यथा मृज्जलयोः संनिहितयोरभवन्नङ्कुरः, स हि सति बीजे भवेत्, दण्डचक्रयोः सतोरभवन्घटः मृत्पिण्डे सति भवेत्। तदधिकबीजहेतुकः तदधिकमृत्पिण्डहेतुक इति क्रमेण प्रत्यक्षानुपलम्भजो निश्चयो जायते। तत्र च कारणत्वं नाम सामान्यमकारणव्यावृत्तमनधिकव्यावृत्तं

[२४३]प्रत्यक्षं प्रत्याभासं प्रामाण्यं भजते, विमर्शलक्षणस्य प्रमितिव्यापारस्य [२४४]एकैकशब्दवाच्येऽर्थे विश्रान्तेः, तदनुसारि[२४५]त्वाच्च प्रमाणस्य इति वक्ष्यते । 'एकाभिधानविषये मितिर्वस्तुन्यबाधिता।' इति। आभासमात्रं च सामान्यम् इति निर्णेष्यते । अनुपलम्भोऽपि अन्योपलम्भरूप आभासमात्रविश्रान्त एव–इति कारणाभासो विशेषशून्यः परिगृहीत एव बीजात् अङ्कुर इति प्रतीतौ यत् यस्य नियमम् [२४६]अनुविधत्ते अव्यतिरिक्तम् तत् तस्य कार्यम्, इति प्रतिघटं मृत्तिकादिरूपस्य हेतुतद्वन्मात्रस्य आभा-

---

चाधिकत्वं प्रत्येकं व्यावृत्तिनिष्ठात्प्रत्यक्षव्यापाराद्गृहीतमेव, बीजं हि तत्र कारणरूपं वस्तु इति गृह्यते, अन्यथा एकत्र बीजे कारणशब्दः संकेतितो न मृत्पिण्डादौ संकेतितो भवेत्, तस्मात्कारणत्वाभाससामान्यं पूर्वप्रत्यक्षस्वीकृतं, तत्र ततो युक्तं विकल्पनं, विकल्पनविशेष एव चानुमानं, तदियं व्याप्तिः अनुमानमनाभाते विषये न भवति विकल्परूपत्वात् अनाभाते हि अर्थे भवदपूर्वसंवेदनं निर्विकल्पं भवेत् तद्विरुद्धं चेदमिति स्वभावविरुद्धोपलब्धिरिति तात्पर्यम् ।

२४३ एताभ्यामग्निसहचरितं धूममनग्नेश्च व्यावर्तमानं पश्यति ।

२४४ शब्दैरेकैकशोऽभिधेये अर्थे ।

२४५ तदनुसारित्वात्–विमर्शानुसारित्वात् ।

२४६ मृदो घट इति प्रत्यये यद्यस्य नियममनुविधत्ते तत्तस्य कार्यम् इत्यपि सामान्यमवभातमेव, ततश्च रूपोपलब्धिर्यस्य नियममनुविधत्ते तन्नेत्रमिति तत्पूर्वं प्रमाणगृहीतमेव तत एव सामान्यतो दृष्टमिति तात्पर्यम्।

सात्, आभासात् बाह्यः पुनः[२४७] अनाभासरूपः, स च आभासते इति विप्रतिषिद्धम् । अनाभाते च नास्ति विकल्परूपस्य अनुमानस्य व्यापारः । ग्राम[२४८]गृहादेस्तु यत् बाह्यं तत् अग्रामादि[२४९]रूपं न उच्यते–प्रत्येकं वाटानूप[२५०]कुड्यतुलादेः बाह्यत्वप्रसङ्गात् अपि तु तत्संनिकृष्टम्[२५१], तस्मात् ग्रामबाह्यम् आभासबाह्यम् इति च शब्दसाम्यमात्रम् एतत् न वस्तुसाम्यम्[२५२]। एवं ये[२५३] विकल्पे वस्तु न आभाति इति मन्यन्ते

---

२४७ पुनःशब्द इन्द्रियादेरपि कारणसामान्येन दृष्टाद्विशेषं द्योतयति । अनाभासरूपः अप्रकाशरूपः ।

२४८ बाह्यत्वविशिष्टोऽर्थो ग्रामाद्दर्पणाद्गृहात्संवेदनाद्बाह्यमिति बाह्यतासामान्यमेकं तच्च गृहाद्बाह्यमिति प्रतीतौ सिद्धं, ततश्च समर्पकं दर्पणादिबाह्यं संवेदनादपि सेत्स्यति इति क्रमिकाभासवैचित्र्यादित्याशङ्क्याह ग्रामगृहादेरिति। तथा चात्र पूर्वव्यवस्था स्फुटमेव दृश्यते–यथा चक्षुरादिविशेषपरिहारेण यथा वा बीजाद्यनुभवात्कारणसामान्यमनुभूतमेवोक्तम्, तथा शरीराद्गृहाद्ग्रामादेर्वा बाह्यस्यानुभवाद्बाह्यत्वमपि सामान्येनानुभूतमेव, ज्ञानविशेषेण बाह्यत्वाननुभवोक्तौ वा चक्षुरादेरपि कारणविशेषस्याननुभूतपूर्वत्वान्न स्यादनुमानं तत्कथं नानुमानस्य व्यापार इत्युक्तिः ।

२४९ नेदं बाह्यत्वं घटस्य ग्रामाच्च संवेदनाच्चैकं, संवेदनाद्बाह्यं हि असंवेदनरूपं न गृहाद्बाह्यमगृहरूपमिति भावः ।

२५० वाट इति – तदेकदेशो, अनूप इति – तदन्तर्वर्ति इत्यन्वेयम् ।

२५१ अत्रायं भावः–गृहसंनिकृष्टं यद्बाह्यं ग्रामात्, न तद्वदेव संवेदनात् – तस्य अमूर्तस्य संनिकर्षादिदेशव्यवहार्यत्वाभावात् ।

२५२ वस्तुसाम्यम्–अभिप्रायः ।

२५३ ये – सौगताः ।

तेषामपि तावत् अनुमानविकल्पो न बाह्ये उपपन्नः । अस्माभिस्तु उपपादितम्—अध्यवसायस्यापि आभासमानविषयत्वम् 'भ्रान्तित्वे[२५४] चावसायस्य' इति सूत्रे । तेन अनुमानविकल्पात्मनापि प्रकाशेन यदि अनाविष्टो नीलादिः अर्थः तत् न अनुमित एव स्यात् । अथ आविष्ट एव, तर्हि 'प्रागिवार्थोऽप्रकाशः स्यात्' इति न्यायेन प्रकाशमात्रस्वभाव एव, न बाह्यः । तेन बाह्ये साध्ये यत् किंचित् प्रमाणम् आनीयते, तदबाह्यतामेव प्रत्युत प्रसाधयति इति विरुद्धमेव, अत एव आह 'कथंचन' इति, केनापि प्रकारेण[२५५] प्रत्यक्षात्मना अनुमेयात्मना वा आभासनम् आभासो बाह्यस्य अनाभासस्य न कदाचित् अभूत् इति, तस्मात् सिद्धम्[२५६] 'चिदात्मैव हि देव' इति ८ ॥९॥

---

२५४ भ्रान्तित्वे इति चोपलक्षणं, तेन 'भासयेच्च स्वकालेऽर्थात्' इत्याद्युक्तम्, 'केवलं भिन्नसंवेद्य' इत्यादिषु वक्ष्यते च ।

२५५ विशेषान्तरतिरस्कारेणापि ।

२५६ बाह्येऽर्थे संवेदनान्तःप्रतिबिम्बरूपाभासोत्थापके यतः प्रमाणं न किंचिदस्ति तस्मादेतत्सिद्धम् ।

---

पं० १३ क० ख० पु० आभासबाह्यस्येति पाठः ।

ननु अन्तःस्थितं बहिः प्रकाशयेदित्युक्तं तत् अन्तःस्थितत्वम् उपपादनीयम्[257] इति आशङ्क्य आह

स्वामिनश्चा[258]त्मसंस्थस्य
भावजातस्य भासनम्[259]।
अस्त्येव न विना तस्मा-
दिच्छामर्शः प्रवर्तते[260] ॥ १० ॥

बहीरूपतयापि आभासने अन्तारूपता न त्रुट्यति 'प्रमात्रैकात्म्यमान्तर्यम्' इति हि वक्ष्यते, तच्च[261] सदैव प्रकाशस्य प्रमातृत्वात्, तदात्मतया च विना प्रकाशमानस्य अवस्तुत्वात्, किं तु तत्र अहम् इति उचिते परामर्शे

---

२५७ यद्यन्तःस्थित एव चिदात्मनोऽर्थराशिः तत्कथमसौ न भासते इति, तदेव युक्त्या साधयतीत्यर्थः ।

२५८ चोऽत्राप्यर्थे भिन्नक्रमः, न केवलमिदमित्यनेन वपुषा निर्भासमानस्य बाह्यभावजातस्य भासनं सकललोकसिद्धं भवति यावद्भगवतः प्रकाशैकरूपस्यान्तःस्थिततयापि भासनमस्त्येव, केवलं बहिर्भावलक्षणेदन्तानुल्लासादहन्तौचित्येनास्त्यवभासनं न तु नास्त्येव ।

२५९ भासनं – स्वामिकर्तृकम् ।

२६० अत्रेदं तात्पर्यम्–चिदात्मनश्चेश्वरस्यात्मनीवाभेदेनार्थेष्वपि प्रकाशोऽस्ति, अन्यथा प्रतिभासमानार्थैकविषयो निर्मातृतामयो विमर्श इच्छारूपो न स्यादिति ।

२६१ तच्च – आन्तरम् । सदैव – बहीरूपतायामपि ।

योऽयम् इदन्तापरामर्शः सैव बाह्यता, तच्च इह अन्तःस्थितत्वम् अहमित्येतावता चित्समुचितेनैव वपुषा परामर्शनम्, तच्च इह नीलादीनामस्त्येव, न तु नास्ति इति, यदि हि न स्यात् कुम्भकृतो 'घटं करवाणि' इति य उत्तरक्रियापेक्षया इच्छाशब्दवाच्यः परा-[262]मर्शः एषणीयात्मना, स परामृश्येन[263] अनियन्त्रितः चेत् ततः[264] पटेच्छापि सा न कस्मात् इति संकीर्येरन् व्यवहाराः। अथ तत्रापि च एषणीयः तदानीमेव निर्मितः[265] सन् तथा जातः, तर्हि तन्निर्माणं[266] चिदात्मनि विनेच्छया नोपपन्नम् इति। 'तिष्ठासोरेवमिच्छैव हेतुता।' इत्यत्र वर्णयिष्यते । ततश्च इच्छान्तरमपि

---

२६२ प्रथम इति बोध्यम् ।

२६३ परामृश्येन–घटेन ।

२६४ ततश्च अन्तःस्थितमेवेत्यर्थः ।

२६५ निर्मित इति यदेवान्तःपरामर्शनं तदेव निर्माणम् इति केयमन्तःस्थितत्ववाचोयुक्तिः ।

२६६ अत्रायं भावः – तदानीमेव हि यन्निर्माणं तद्बुद्धिभूमौ अशुद्धविद्याभूमावपि वा, तत्रस्थतया तु निर्माणं संविदवस्थितस्यैवेष्यमाणस्य युक्तम् इति ।

विषयनियन्त्रितं[२६७]? न वा? इति विकल्पेऽनवस्था। विषयनियन्त्रितं चेत् स्यात् आत्मतैव जाता, न चेत् घटे पटेच्छा स्यात्। अथ तत्रापि[२६८] तदानीमेव इति कृत्वा अनवस्था, तस्मात् सर्वोऽयं भावराशिः चिदात्मनि अहम् इत्येव वपुषा सततावभासुरवपुः ऐश्वर्यरूपाच्च स्वातन्त्र्यलक्षणात् स्वामिभावात् विचित्रेण वपुषा क्रमाक्रमादिना[२६९] संवित् एनं[२७०] बहिष्करोति प्रमातृभेदप्रथनपूर्वकम्[२७१], तत्रापि क्वचित्[२७२] आभासे प्रमातॄन् एकीकरोति नित-

२६७ विषयेण–परामृश्येन, नियन्त्रितं–संबद्धम्।

२६८ तत्रापि–द्वितीयेच्छायाम्।

२६९ कार्यकारणभावे क्रमः, अन्यत्राक्रमः।

२७० एनं–भावराशिम्।

२७१ प्रमातृभेदश्च समनाशिवमयौन्मुख्यरूपकारणात्मकः, तस्य च व्यापिनीशक्तिरूपं कार्यमिति।

२७२ अयं भावः–विभागेऽपि सर्वशक्तिसुनिर्भरशिवत्वसंभवोऽस्त्येव क्वचित्, उक्तं च तत् श्रीमत्सोमानन्दपादैः।

'एवं न जातुचित्तस्य वियोगस्त्रितयात्मना।
शक्त्या निर्वृतचित्त्वस्य तद्भागविभागयोः॥'

इति। तथा च स्फुटमेव तेनैव प्रत्यभिज्ञापितम्, यथा

'यदा तु तस्य चिद्धर्मप्रभवामोदजृम्भया।
विचित्ररचना नानाकार्यसृष्टिप्रवर्तने।
भवत्युन्मुखिता चित्ता सेच्छायाः प्रथमा त्रुटिः॥'

म्बिनीनृत्त इव प्रेक्षकान् । तावति हि तेषाम् आभासे ऐक्यम् । शरीर[२७३]प्राणबुद्धिसुखाद्याभासांशेषु तु भेदस्य अविगलनात् न सर्वथा ऐक्यम् । अत एव प्रतिक्षणं [२७४]प्रमातृसंयोजनावियोजनावैचित्र्येण परमेश्वरो विश्वं सृष्टिसंहारादिना प्रपञ्चयति । तदुक्तमाचार्येण

'सदा सृष्टिविनोदाय सदा स्थितिसुखासिने ।
सदा त्रिभुवनाहारतृप्ताय [२७५]भवते नमः ॥'

इत्यादि । श्रीभट्टनारायणेनापि

'मुहुर्मुहुरविश्रान्तस्त्रैलोक्यं कल्पनाशतैः ।
कल्पयन्नपि कोऽप्येको निर्विकल्पो जयत्यजः ॥'

---

इत्यस्य प्रस्तावे

'सा च दृश्या हृदुद्देशे कार्यस्मरणकालतः ।
प्रहर्षावेगसमये दरसंदर्शनक्षणे ॥
अनालोचनतो दृष्टे विसर्गप्रसरास्पदे ।
विसर्गोक्तिप्रसङ्गे च वाचने धावने तथा ॥
एतेष्वेव प्रसङ्गेषु सर्वशक्तिविलोलता ।'

इति । तथा स्पन्दसूत्रेष्वपि

'अतिक्रुद्धः प्रहृष्टो वा किं करोमीति वा मृशन् ।
धावन्वा यत्पदं गच्छेत्तत्र स्पन्दः प्रतिष्ठितः ॥'

इति ।

२७३ ननु तदियमेव स्पन्दनात्मिका परमार्थसती शिवदशा अलं प्रमातॄनेकीकरोति इति वादे ? न, इत्यत आह शरीरेत्यादि ।

२७४ संयोजना-मल्लप्रेक्षादौ, वियोजना-अन्यत्र ।

२७५ भवते इति, प्रत्यक्षेण निर्देशः स्वस्वरूपताप्रतिपादनार्थः ।

इति । तस्मात् स्थितम् अन्तःस्थितं भाव-जातं—तेन विना तद्विषयस्य परामर्शस्य[२७६] अयो-गात् इति ॥ १० ॥

ननु परामर्शो नाम विकल्पः[२७७], स च अवि-कल्पशुद्धसंविद्वपुषि भगवति कथं स्यात् इत्याशङ्क्याह

स्वभाव[२७८]मवभासस्य
विमर्शं विदु[२७९]रन्यथा ।
प्रकाशोऽर्थोपरक्तोऽपि
स्फटिकादिजडोपमः[२८०] ॥ ११ ॥

---

२७६ परामर्शस्य—इच्छारूपस्य ।

२७७ विकल्प इति—इच्छालक्षणो हि परामर्शः, इच्छा च वेद्यसापेक्षा तथा तदपेक्षया परामर्शस्यापि समयबलायत्तता, तथा च विकल्प्यत्व-नान्तरीयकत्वशब्दयोजनावकाशः, तदेव हि विकल्पतायां निबन्धनम्, वेद्योपरक्ते तु प्रकाशे विकल्पता वेद्यांशविश्रान्ताभिलापयोजनया, वेद्या-पेक्षायास्तु कदाचित्स्वयमविकल्पत्वेऽपि, न च शुद्धा संविद्विकल्परूपा संवेद्यत्वानुपलब्धेः इति हि अत्रावकाशः ।

२७८ तेनात्र न समयायत्तशब्दयोजनावकाशशङ्कापीत्यर्थः ।

२७९ अवाप्ततत्स्वरूपपरामर्शा एतज्जानन्ति इत्यर्थः, विमर्शं, च अह-मिति अकृत्रिममसांकेतिकं स्वातन्त्र्यरूपमात्मविश्रान्तिस्वभावं लक्षणं विदुः तत्त्वविदः ये मन्त्रशरीरं श्रीमातृकाश्रीमालिन्यादितत्त्वं मन्यन्ते ।

२८० अत्रेदं तात्पर्यम्—प्रकाशस्य मुख्य आत्मा प्रत्यवमर्शः, तं विना अर्थभेदिताकारस्यास्य स्वच्छतामात्रं न तु अजाड्यं चमत्कृतेरभावात् ।

इह अवभासस्य प्रकाशस्य, अनवभासस्य च अप्रकाशस्य घटादेः परस्परपरिहारेण द्वयोः[२८१] स्वात्मनि चेत् व्यवस्थानं[२८२], तत् घटपटयोः इव इदमजडम् इदं जडम् इति दुरुपपादं वैलक्षण्यम्[२८३]। अथ अवभासो यतोऽर्थस्य संबन्धी, ततो न जडः, तर्हि संबन्धमात्रेण मृत् अपि घटस्य इति अजडा स्यात्। अथ न स्वसंबन्धमात्रम् अपि तु अवभासोऽर्थस्य प्रकाशः, तर्हि अर्थात्मना स प्रकाश इति समापतितम्। न च अन्यात्मना[२८४] अन्यस्य[२८५] प्रकाश उपपन्नः। अथ अन्यस्वभावोऽपि[२८६] घटोऽवभासस्य कारणम्, तर्हि अवभासोऽपि घटस्य कारणम् इति घटोऽपि अजडः स्यात्। अथ अन्येनापि सता घटेन यतोऽवभासस्य प्रतिबिम्बरूपा च्छाया दत्ता, ताम् असौ अवभासो बिभ्रत् घटस्य[२८७]

२८१ द्वयोः–प्रकाशघटयोः।

२८२ व्यवस्थानं–स्वात्ममात्रनिष्ठम्।

२८३ वैलक्षण्यं–भेदः चेतनजडयोः अजडजडभावलक्षणो न भवेद्विषय इति भावः।

२८४ घटस्यात्मना।

२८५ प्रकाश इति योज्यम्।

२८६ प्रकाशात्।

२८७ प्रकाश इति शेषः।

इति उच्यते, ततश्च[288] अजडः[289], तर्हि स्फटिकसलिलमकुरादिः अपि एवंभूत एव, इति अजड एव स्यात् । अथ तथाभूतं[290]मपि आत्मानं तं च घटादिकं स्फटिकादिः न परामष्टुं समर्थ इति जडः, तथा परामर्शनमेव अजाड्यजीवितम् अन्तर्बहिष्करणस्वातन्त्र्यस्वरूपं स्वाभाविकम् अवभासस्य स्वात्मविश्रान्तिलक्षणम् अनन्यमुखप्रेक्षित्वं नाम । 'अहमेवं[291] प्रकाशात्मा प्रकाशे' इति हि विमर्शोदये स्वसंविदेव प्रमातृप्रमेयप्रमाणादि चरितार्थम् अभिमन्यते न तु अतिरिक्तं[292] काङ्क्षति, स्फटिकादि हि गृहीतप्रतिबिम्बमपि तथा[293]भावेन सिद्धौ प्रमात्रन्त-

---

२८८ ततश्च – संबन्धात् ।

२८९ अजडः—घट इति बोध्यम् ।

२९० गृहीतप्रतिबिम्बम् ।

२९१ अत्र सूत्रे अपि-शब्दोऽत्यन्तरक्षयं द्योतयति इत्याह अहमेवमिति, यस्मादेवं तस्माद्बोधस्य इयमेव बोधरूपता यदसौ घटादिवत्प्रकाशे 'नान्यापेक्षः प्रकाशते' अनन्यापेक्षता च एषैव यत्स्वात्मीयविमर्शोऽहमिति भोक्तृतामयेऽविच्छिन्ने भुञ्जानतात्मनि चमत्कारे रूढिः, नीलं हि तथा-प्रकाशात्, सोऽपि तथा-ज्ञानोदयात्, सोऽपि अहमेवं-प्रकाश इति पार्यन्तिकादनन्याकाङ्क्षात् विमर्शात् ततः परमाकाङ्क्षाविरहात् ।

२९२ अतिरिक्तं—भिन्नं प्रमातारम् ।

२९३ तथा भावेन – गृहीतप्रतिबिम्बत्वेन ।

रम् अपेक्षते, इति निर्विमर्शत्वात् जडम्। सर्वं तु वस्तुतो विमर्शात्मकप्रमातृस्वभावतादात्म्याहंपरामर्शविश्रान्तेः अजडमेव पूर्वापरकोट्योः[२९४]। यदुक्तम्

'इदमित्यस्य विच्छिन्नविमर्शस्य कृतार्थता।
या स्वस्वरूपे विश्रान्तिर्विमर्शः सोऽहमित्ययम्॥'

इति। मध्यावस्थैव तु इदन्ताविमृश्यमानपूर्वापरकोटिः, विमूढानां मायापदं संसारः, इति विमर्श एव प्रधानं भगवत इति स्थितम्॥ ११॥

न केवलं संवित्तत्त्वस्य अस्माभिः एव विम-

---

२९४ तथा चात्रपूर्वावस्था,– सर्वविकल्पादिज्ञानानामग्रत उत्पित्सावस्था, तस्यां हि ज्ञानज्ञेयानाविलज्ञातृस्वरूपसंस्पर्शोऽवश्यंभावी, तथा अपरकोटिः,–मया एतत् ज्ञातम् इति प्रमाणफलभूतज्ञानान्तरोदये तदा हि ज्ञानमात्रे निर्वृतिमतिविश्रान्तिः। तथा अन्यथापि पूर्वापरकोटिनिभालनं सूत्रकारेणोक्तं यथा सर्वज्ञानानामारम्भे तथा फले परिसमाप्तौ तत्रैव विश्रान्त्या, तद्विश्रान्ति विना अर्थो ज्ञात एव न भवति समग्रत्वमनेकप्रकारत्वेन ज्ञानानां मध्यदशायामेव प्रत्यगात्मत्वेन, पूर्वापरकोट्योस्तु एकविशुद्धशिवतैव सर्वेषामिति। तदेतत् श्रीसोमानन्दप्रभुपादैरप्युक्तम्।

'न परं तदवस्थायां व्यवस्थैषा व्यवस्थिता।
यावत्समग्रज्ञानाग्रज्ञातृस्पर्शदशास्वपि॥
स्थितैव लक्ष्यते सा च तद्विश्रान्त्या तथा फले॥'

इति।

र्शप्राधान्यम् उक्तम्[295] यावत् आगमान्तरैरपि[296] इति दर्शयति

> आत्मात एव चैतन्यं
> चित्क्रिया चितिकर्तृता।
> तात्पर्येणोदितस्तेन
> जडात्स हि विलक्षणः[297] ॥१२॥

यतो विमर्श एव प्रधानम् आत्मनो रूपम् अमुमेव हेतुं प्रयोजनरूपम् उद्दिश्य आत्मा धर्मिस्वभावो द्रव्यभूतोऽपि, चैतन्यम् इति धर्मिवाचिना शब्देन सामानाधिकरण्यम् आश्रित्य उदितः कथितः, भगवता शिवसूत्रेषु

'चैतन्यमात्मा' १–१

इति पठितम्, चैतन्यम् इति हि धर्मवाचकोपलक्षणम्, 'चितिशक्तिरपरिणामिनी'

'··· तदृदृशेः कैवल्यम्।' (यो० सू० २–२५)

'द्रष्टा दृशिमात्रः ········' (यो० सू० २–२०)

---

२९५ स्वकपोलकल्पितत्वमत्र निरस्यति उक्तमित्यनेन।

२९६ आगमान्तरैः – पातञ्जलन्यायादिभिः।

२९७ अत्रायं भावः – आत्मद्रव्यस्य भावात्मकमप्येतत् जडाद्भेदकतया विमर्शाख्यं मुख्यं रूपमुक्तं चैतन्यं, चितिशक्तिर्दृशिरिति सा चेतनक्रिया चितिकर्तृतैवेति।

इत्यादौ अपि हि धर्मशब्देन सामानाधिकर-
ण्यम् आत्मनो दर्शितं गुरुणा[२९८] अनन्तेन । द्रव्यं
हि तत् उच्यते—यद्विश्रान्तः पदार्थवर्गः सर्वो
भाति च अर्थ्यते च अर्थक्रियायै, तत् यदि न कु-
प्यते तत् सकलोऽयं तत्त्वभूतभावभुवनसंभारः
संविदि विश्रान्तः[२९९] तथा भवति इति । स[३००] एवं
गुणकर्मादिधर्मा[३०१]श्रयभूतपदार्थान्तरस्वभावः तां[३०२]-
मेव मुख्यद्रव्यरूपाम् आश्रयते इति सैव[३०३]
द्रव्यम्, तत् अनन्तधर्मराशिविश्रमभित्तिभू-
तायाः तस्याः[३०४] स एव धर्मः चैतन्यम् इति
कर्तृकृदन्तात् उत्पन्नेन भाव[३०५]प्रत्ययेन संब[३०६]न्धा-
भिधायिनापि प्राधान्येन दर्शितः, तथाहि
संबन्धस्य संबन्धिविश्रा[३०७]न्तस्य प्रतीतेः, द्रव्य-

---

२९८ गुरुणा—पतञ्जलिना ।

२९९ तत्त्वादित्वेन ।

३०० सः—तत्त्वादिः ।

३०१ गुणानामाश्रयो द्रव्यम् ।

३०२ तां—संविदम् ।

३०३ सैव—संवित् ।

३०४ तस्याः—संविदः ।

३०५ भावप्रत्ययेन—ष्यञा ।

३०६ कृत्तद्धितसमासेषु संबन्धाभिधानमित्युक्त्या ।

३०७ चित्क्रिया चेतनस्येति ।

रूपस्य च संबन्धिनः[308] प्रकृत्या उक्तत्वात् चितिक्रियारूपं धर्मं संबद्धम् अवगमयता ष्यञा निष्कृष्ट[309] एव अंशः प्रत्यायितो भवति। चितिक्रिया च चितौ कर्तृता, स्वातन्त्र्यं संयोजनवियोजनानुसंधानादिरूपम् आत्ममात्रतायाम्[310] एव जडवत्[311] अविश्रान्तत्वम् अपरिच्छिन्नप्रकाशसारत्वम् अनन्यमुखप्रेक्षित्वम् इति, तदेव[312] अनात्मरूपात् जडात् संयोजनवियोजनादिस्वातन्त्र्यविकलात् वैलक्षण्यादायि इति, तदेव[313] परत्वेन प्रधानतया अभिसंधाय, आत्मा चेतन इति वक्तव्ये धर्मान्तराधरीकरणाय[314] विमर्शधर्मोद्धुरीकरणाय[315] च 'आत्मा चैतन्यम्'

---

३०८ संबन्धिनः–द्रव्यरूपस्य चेतनस्य।

३०९ निष्कृष्ट एव–भिन्न एव।

३१० आत्ममात्रतायां–चितावेव।

३११ यथा जडः स्वात्ममात्रनिष्ठः संयोजनवियोजनादिस्वातन्त्र्यरहितः नैवमात्मा इत्यर्थः।

३१२ तात्पर्येण इति व्याचष्टे।

३१३ तात्पर्येण इति व्याचष्टे।

३१४ धर्मान्तरं–नित्यत्वादि।

३१५ विमर्शधर्म एवाधरधर्मान्तर्भावात्। यथोक्तम्

'तेन स्वातन्त्र्यशक्त्यैव युक्त इत्याञ्जसो विधिः।
बहुशक्तित्वमप्यस्य तच्छक्त्यैवावियुक्तता॥'

इति।

इत्युक्तम्। चित्क्रिया चितिकर्तृता तात्पर्येण[316] इति समासः अर्धयुक् पादविश्रान्तिः इति हि काव्ये समयः, न शास्त्रे। यदि वा चित् क्रिया आत्मा उदितः, चितिकर्तृता[317] च, इति पृथगेव। एवं[318] तु न क्वचित् पठितम्॥ १२॥

ननु यथा प्रकाशोऽप्रकाशश्च इति उभयमपि स्वात्मनि, ततश्च[319] प्रकाश इति उक्ते जडात् न वैलक्षण्यम् उदितं स्यात्, तद्वत् विमर्शोऽपि अविमर्शोऽपि च स्वात्मनि, इति तेनापि[320] कथं वैलक्षण्यं जडाजडयोः इत्याशङ्क्याह

चितिः[321] प्रत्यवमर्शात्मा
परा वाक्स्वरसोदिता।

---

३१६ ऐकपद्यमत्र बोध्यम्।

३१७ अत्र भावे इक् प्रत्ययः कृषिरित्यादिवत्।

३१८ चित्क्रिया आत्मा इति न कुत्रापि पठितम्।

३१९ ततश्च – स्वात्मस्थितत्वात्।

३२० तेनापि – स्वात्मस्थितविमर्शेनापि।

३२१ तदेवमियता यदि हि स्वातन्त्र्यरूपमस्य रूपं न भवेत्तत्प्रकाशः स्वात्मनि प्रकाशः, घटोऽपि स्वात्मनि घट इत्युपपादितम्, तत्र यथा द्वयमपि एतत्स्वात्मनि, तथा तत्परामर्शोऽपि स्वात्मनि, केयं स्वातन्त्र्यरूपेण विमर्शेन परस्परमुभयोरपि चाजडचेतनभावविलक्षणो विमर्श इति सूत्रं चितिरिति।

स्वातन्त्र्यमेतन्मुख्यं त-
दैश्वर्यं[३२२] परमात्मनः ॥ १३ ॥

चेतयति इत्यत्र या चितिः चितिक्रिया[३२३] तस्याः प्रत्यवमर्शः[३२४] स्वात्मचमत्कारलक्षण आत्मा स्वभावः, तथाहि — घटेन स्वात्मनि न चमत्क्रियते स्वात्मा न परामृश्यते न स्वात्मनि तेन प्रकाश्यते न अपरिच्छिन्नतया भास्यते ततो न चेत्यत इति उच्यते । चैत्रेण तु स्वात्मनि अहमिति संरम्भोद्योगोल्लासविभूतियोगात् चमत्क्रियते, स्वात्मा परामृश्यते स्वात्मन्येव प्रकाश्यते इदमिति यः परिच्छेद एतावद्रूपतया तद्विलक्षणीभावेन[३२५] नील-पीत-सुख-दुःख-तच्छून्यताद्यसंख्यावभासयोगेन आभास्यते, ततः चैत्रेण चेत्यते इति उच्यते । एवं[३२६] च विमर्शः स्वात्मनि अधिमर्शोऽपि स्वात्मनि

---

३२२ अत्रेदं तात्पर्यम्—अभिन्नवाच्या भाषा वागेषा नित्यचित्स्वरूपत्वेनानाद्यन्ता परतन्त्रभावान्तरानपेक्षं शुद्धमेवत्स्वातन्त्र्यमैश्वर्यसंज्ञमिति ।

३२३ जानातिक्रियावत् ।

३२४ प्रत्यवमर्शः—स्वात्मा ।

३२५ तद्विलक्षणीभावेन—अन्तःकृतविश्वत्वात् ।

३२६ एवं च—इदन्ताभासविमर्शे ।

इत्यसिद्धमेतत्। विमर्शो हि सर्वंसहः परमपि[327] आत्मीकरोति, आत्मानं च परीकरोति[328], उभयम्[329] एकीकरोति, एकीकृतं द्वयमपि न्यग्भावयति[330] इत्येवं-स्वभावः। प्रत्यवमर्शश्च अन्तरभिलापात्मकशब्दनस्वभावः, तच्च शब्दनं संकेतनिरपेक्षमेव अविच्छिन्नचमत्कारात्मकम्[331] अन्तर्मुखशिरोनिर्देशप्रख्यम्[332] अकारादिमायीयसांकेतिकशब्दजीवितभूतं, नीलम् इदं, चैत्रोऽहम् इत्यादिप्रत्यवमर्शान्तरभित्तिभूतत्वात्, पूर्णत्वात् परा[333], वक्ति विश्वम् अपलपति प्रत्यवमर्शेन इति च वाक्, अत एव सा स्वरसेन[334]

---

३२७ परम्—इदन्तापदम्।

३२८ देहादिरूपतया, यदा हि परात्मीकरणं तदा अवश्यमेवात्मनः परीकरणम्।

३२९ अहमिदमिति सदाशिवभूमौ।

३३० बोधाख्यायां शून्यावस्थायाम्।

३३१ अत्र अक्षरनिर्णयः कैश्चिदुक्तो दृश्यते—चमतो भुञ्जानस्य करणं संरम्भः, अहमसौ नीलादेर्भोक्ता इति चमत्कारः।

यद्वा—अनुपचरितस्य संवेदनरूपतानान्तरीयकत्वेनावस्थितस्य स्वतन्त्रस्यैव रसनैकघनतया परामर्शः परमानन्दो निर्वृतिश्चमत्कार उच्यते।

३३२ यथा कश्चित् स्वकृतं शिरःकम्पेन निर्दिशति।

३३३ पॄ-पालनपूरणयोः इति धातोर्व्युत्पन्नोऽयं शब्दः।

३३४ अहमिति यन्नित्यं चित्स्वरूपं तद्देशकालाकारकृताभ्यामाद्यन्ताभ्यां शून्यं, नित्योदितं तदेव परमित्युच्यते।

चिद्रूपतया स्वात्मविश्रान्तिवपुषा उदिता सततम् अनस्तमिता[335] नित्या अहमित्येव,[336] एतदेव परमात्मनो मुख्यं स्वातन्त्र्यम् ऐश्वर्यम् ईशितृत्वम् अनन्यापेक्षित्वम् उच्यते । परापरं[337] तु इदंभावरूपस्य प्रत्यवमर्शस्य आख्यातिप्राण-[338]

---

३३५ अनस्तमिता – सदोदिता ।

३३६ अहमित्येवेति, अत्राहुरेके पश्यन्तीदशैव मुख्या आनन्दरूपा न परा, तस्याः परत्वादेव, तदेव एवकारेण दलयति, यथोक्तं सोमानन्दपादैः ।

'विमर्शानुभवेनैषा यथा वाक्प्रथमं श्रिता ।'

इत्युपक्रम्य

'इति चेच्चर्च्यतां तावत्पश्यन्ती युज्यते यथा ।'

इत्यादि ।

'यो हि पश्यति पश्यन्तीं स देवः परमः शिवः ।'

इत्यादिना शब्दनरूपत्वं भगवत उक्तम् । तत एव तत्रभवता भट्टनारायणेनाप्युक्तम्

'सुगिरा चित्तहारिण्या पश्यन्त्या दृश्यमानया ।
जयत्युल्लासितानन्दमहिमा परमेश्वरः ॥'

इति । अत्र हि यथा परममहापश्यन्त्या आनन्दमहिमा परस्वातन्त्र्यात्मा उल्लासनीयः सा भगवतः परा वागिति दर्शितम् । परस्परप्रेमदर्शनं रतेरानन्दात्मिकाया उल्लासनं करोति इति लौकिकनिदर्शनेनानन्द एव स्फुटीकृत इति ।

३३७ यदाह मुनिः

'सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।'

इति ।

३३८ आख्यातिप्राणस्य – स्वरूपापोहनजीवितस्य ।

स्य — उद्बोधमात्रेऽपि अहंभाव एव विश्रान्तेः श्रीसदाशिवादिभूमौ पश्यन्तीदशायाम् । अपरं तु इदंभावस्यैव निरूढौ मायागर्भाधिकृतानामेव [३३९] विष्णुविरिञ्चेन्द्रादीनाम्, तत्तु एषां परमेश्वरप्रसादजमेव [३४०] इति । अन्यनिरपेक्षतैव परमार्थत आनन्दः, ऐश्वर्यं, स्वातन्त्र्यं, चैतन्यं च । तस्मात् युक्तमुक्तम्

'........तेन जडात्स हि विलक्षणः ।'

इति ॥ १३ ॥

प्रधानागमेष्वपि [३४१] एतत् [३४२] प्रदर्शितमेव इति निरूपयति

सा [३४३] स्फुरत्ता महासत्ता
देशकालाविशेषिणी ।

---

३३९ स्रष्टव्ये स्थातव्ये संहर्तव्ये च व्यतिरिक्ते अधिष्ठातारो मायागर्भाधिकारिणो ब्रह्माद्याः । इन्द्रग्रहणेनात्र तदिच्छानुवर्तिनः सर्वे लोकपाला उपलक्षिता मन्तव्याः ।

३४० मायागर्भाधिकारित्वात् न एषां स्वसामर्थ्यं किंचित् इति द्योतितम् ।

३४१ रहस्यागमेषु, परमेश्वरभाषितेषु वेदान्तादौ मुनिप्रोक्तेषु सिद्धान्तप्रोक्तेषु गुरुनिरूपितेषु च शास्त्रेषु यदस्या रूपं नामधेयनिर्वचनवैचित्र्यभिन्नं तदेव सूत्रेण ध्वन्यते सामानाधिकरण्यार्थम् ।

३४२ एतत्—प्रकाशस्य विमर्शप्राधान्यम् ।

३४३ तत्र किंबहुना यावत्तत्र—भवता शंकरानन्देनापि—साक्षादेव

**सैषा सारतया प्रोक्ता**
**हृदयं परमेष्ठिनः ॥ १४ ॥**

इह घटः कस्मात् अस्ति, खपुष्पं च कस्मात् नास्ति, इति उक्ते वक्तारो भवन्ति, घटो हि स्फुरति मम, न तु इतरत्[३४४] इति, तत् एतत् घटत्वमेव यदि स्फुरत्त्वं स्फुरणसंबन्धः, तत् सर्वस्य[३४५] स्फुरेत् न कस्यचिद्वा, तस्मात् मम स्फुरति इति कोऽर्थः, मदीयं स्फुरणं स्पन्दनम् आविष्ट इति। स्पन्दनं च किञ्चित् चलनम्[३४६], एषैव च किञ्चिद्रूपता[३४७] – यत् अचलमपि चलम् आभासते इति, प्रकाशस्वरूपं[३४८] हि

---

स्फुरत्ता साक्षात्कारः स्वतःसिद्धतमा स्फुरद्रूपता अस्य हि इति वदता निरूपिता। अत्रायं भावः—स्फुरत्ता स्फुरणकर्तृता अभावाप्रतियोगिनी, अभावव्यापिनी सत्ता, सत्ता भवनकर्तृता नित्या देशकालास्पर्शात्मैव प्रत्यवमर्शात्मा चितिक्रिया शक्तिः, सा विश्वात्मनः परमेश्वरस्य स्वात्मप्रतिष्ठारूपा हृदयम् इति तत्र तन्त्रागमे निगद्यते इति।

३४४ इतरत्–खपुष्पम्।

३४५ सर्वसर्वज्ञताप्रसङ्गः, सर्वाज्ञताप्रसङ्गो वा इति ज्ञेयम्।

३४६ स्पदि–किंचिच्चलने इति धात्वनुसारात्।

३४७ किंचिच्चलनं च यदि स्वरूपाद्वस्त्वन्तराक्रमणं तच्च चलनमेव न किंचित्त्वं, नो चेच्चलनं तर्हि न किंचित्तस्मात्स्वरूप एव क्रमादिपरिहारेण।

३४८ प्रकाशस्वरूपं हि इति–मम स्फुरति घट इति अहमंशलग्ना स्फुरत्ता संक्रम्यते भावे घटः स्फुरति इति कोऽर्थः अहं तावत् प्रकाशात्मा घटरूपेण स्फुरामि इति तदेतदुक्तं मनागिति।

मनागपि नातिरिच्यते, अतिरिच्यते[३४९] इव इति अचलमेव आभासभेदयुक्तमेव च भाति इति । तत उक्तम्

'आत्मैव[३५०] सर्वभावेषु स्फुरन्[३५१]निर्वृतचिद्विभुः ।
अनिरुद्धेच्छाप्रसरः प्रसरद्दृक्क्रियः शिवः ॥'

इति । तथा

'अतिक्रुद्धः प्रहृष्टो वा किं करोमीति वा मृशन् ।
धावन्वा यत्पदं गच्छेत्तत्र[३५२] स्पन्दः प्रतिष्ठितः ॥'(स्प०२२)

इति ।

'..................स्पन्दतत्त्वविविक्तये ।' (स्प० २१)

इति ।

'गुणादिस्पन्दनिःष्यन्दाः............ ।'(स्प०१९)

इति च । लोकेऽपि विविधवैचित्र्ययोगेऽपि स्वरूपात् अचलन् जनो गम्भीरः स्पन्दवान् इति उच्यते । सत्ता च भवन[३५३]कर्तृता सर्वक्रि-

---

३४९ अतिरिच्यते इत्यत्र, स्वत इति शेषः ।

३५० सर्वभावेषु स्वात्मैव शिव इति संबन्धः ।

३५१ स्फुरन्निति हेत्वर्थकः, निर्वृता—वेद्यनिराकाङ्क्षा पूर्णा चित् तया विभुः—आत्मसात्कृतसमस्तवेद्यार्थं इत्यर्थः ।

३५२ एतेषु प्रतिष्ठितस्पन्दोपलब्धिरित्यर्थः ।

३५३ यथोपरचितं श्रीमहेश्वरानन्देन ।

'सत्तैव हृदयप्रकाशो भवनक्रियाया भवति कर्ता ।
सैव क्रियाविमर्शः स्वस्था क्षुभिता च विश्वविस्तारः ॥'

इति ।

२७

यासु स्वातन्त्र्यम्। सा च खपुष्पादिकमपि व्याप्नोति इति महती, देशकालौ[३५४] नीलादिवत् सैव सृजति इति ताभ्यां विशेषणीया न भवति, यत् किल येन तुल्यकक्ष्यतया भाति तत् तस्य विशेषणं[३५५] – कटक इव चैत्रस्य[३५६]। न च देशकालौ विमर्शेन तुल्यकक्ष्यौ भातः – तयोः इदन्तया तस्य च अहन्तया प्रकाशे तुल्यकक्ष्यत्वानुपपत्तेः। एवं देशकालास्पर्शात् विभुत्वं नित्यत्वं च – सकल[३५७]देशकालस्पर्शोऽपि

[३५४] देशकालावित्यत्रायं भावः – यत् खण्डितप्रथाकं तदेव क्वचित्कदाचिच्च भवद्देशकालाभ्यां कारणभूताभ्यामाविश्येत इति कृतकस्यैव तौ विशेषणं नाकृतकस्य संवेदनस्य प्रमेयकक्ष्यापतितस्यैव च प्रमातृसंयोज्यमानाभासान्तराभिधानधर्मयोजनसहिष्णोस्तौ विशेषणं न प्रमेयतोत्तीर्णस्य प्रमात्रेकरूपस्य संवेदनस्य इति।

[३५५] यो हि येन जीवति स तस्य व्यवच्छेदकः स्यात्।

[३५६] कटकवान् चैत्र इत्यत्र।

[३५७] ननु च अत्यल्पेयं वाचोयुक्तिः – यद्देशकालास्पर्शाद्विभुत्वम् अर्थात्तस्य परिमितत्वमशङ्कितमनेनायाति इत्याशङ्कां गर्भीकृत्याह सकलेत्यादि, अयं पुनरत्राशयः – सर्वथा यथा यथा अस्याः प्रमेयन्यक्कारः स्यात् तथा तथा यतनीयम् तत्स्वरूपस्वातन्त्र्यशालिनाम् तच्च देशकालविशेषणतापरिहारेण अस्याः सिध्यति पुनस्तत्सिद्धौ सत्यां देशकालावच्छेदोऽपि तदनन्य एव इति पूर्णव्यापकत्वम्, अत एव यदत्र तत्रभवता व्यापकत्वमस्योक्तं दिक्कालाद्यनवच्छिन्नेत्यादि तत्सोमानन्दपादैर्निर्दलितम्

'दिक्कालादिलक्षणेन व्यापकत्वं विहन्यते।
अवश्यं व्यापको यो हि सर्वदिक्षु स वर्तते॥'

इति शिवदृष्टौ।

तन्निर्माणयोगात् इति, ततोऽपि व्यापकत्वनित्यत्वे । तदुक्तम्

'महासत्ता महादेवी विश्वजीवैर्निगद्यते ।'

इति । सारम् इति यत् अतुच्छं रूपं तत् इयमेव विमर्शशक्तिः[358][359], ग्राह्यग्राहकाणां यत् प्रकाशात्मकं रूपं तस्यापि अप्रकाशवैलक्षण्याक्षेपिका इयमेव इति, श्रीसारशास्त्रेऽपि निरूपितम्

'यत्सारमस्य जगतः सा शक्तिर्मालिनी परा ।'

इति । सैषा[360], इति शक्तिप्रत्यभिज्ञानं दर्शितम् । हृदयं च नाम प्रतिष्ठास्थानमुच्यते, तच्च उक्त[361]नीत्या जडानां चेतनं, तस्यापि प्रकाशात्मत्वं, तस्यापि विमर्शशक्तिः इति विश्वस्य

---

३५८ जडचेतनयुगलकमेव यद्विश्वं तस्येयं सारभूतेति ।

३५९ यदुक्तमनेनैव तन्त्रसारे

'अन्तर्विभाति सकलं जगदात्मनीह यद्वद्विचित्ररचना मकुरान्तराले ।
बोधः परं निजविमर्शनसारयुक्त्या विश्वं परामृशति नो मकुरस्तथा तु ॥'
इति ।

३६० सैषा इति—तदेतच्छब्दौ हि परोक्षप्रत्यक्षवाचकौ प्रत्यभिज्ञानमेव सूचयतः ।

३६१ 'तथाहि जडभूतानाम्'
इति पूर्वोक्तया ।

परमे पदे तिष्ठतो[362] विश्रान्तस्य इदमेव हृदयं विमर्शरूपं परमन्त्रात्मकं तत्र तत्र अभिधीयते। सर्वस्य हि मन्त्र एव हृदयम्, मन्त्रश्च विमर्शनात्मा, विमर्शनं च परावाक्छक्तिमयम्। तत एवोक्तम्

'न तैर्विना[363] भवेच्छब्दो नार्थो नापि चितेर्गतिः।'

इति।

'तत्र तावत्समापन्ना मातृभावम्········।'

इत्यादि च, इत्यागमेषु। तत्रभवद्भर्तृहरिणापि

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते॥
वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी॥'

इति।

'सैषा संसारिणां संज्ञा बहिरन्तश्च वर्तते।
यदुत्क्रान्तौ विसंज्ञोऽयं[364] दृश्यते काष्ठकुड्यवत्॥'

---

१६२ यथोक्तं श्रीभगवता गीतासु।

'ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च॥'

इति। अनेन हि सद्रूपस्य ब्रह्मणः परमानन्दस्य विश्रान्तिस्थानम् अहमिति विमर्शात्मकमुक्तम्।

३६३ तैरिति – मन्त्रैः।

३६४ विसंज्ञः – चेतनारहितः।

इत्यादि च । तत् एतेन विदुः इत्येतत् निर्वाहितम्[३६५] । बौद्धैरपि अध्यवसायापेक्षं प्रकाशस्य प्रामाण्यं[३६६] वदद्भिः उपगतप्राय एव अयम् अर्थः— अभिलापात्मकत्वात् अध्यवसायस्य इति ॥१४॥

ननु असंख्यशक्तिश्रेणीशोभितवपुषि परमशिवे विमर्शशक्तिरेव इयम् इत्थंकारम् अभिषिच्यते कस्मात् ?, इत्याशङ्क्याह

आत्मानमत एवायं
ज्ञेयीकुर्यात्पृथक्स्थिति ।
ज्ञेयं न तु तदौन्मुख्या-
त्खण्ड्येतास्य स्वतन्त्रता॥१५॥
स्वातन्त्र्यामुक्तमात्मानं
स्वातन्त्र्यादद्वयात्मनः ।
प्रभुरीशादिसंकल्पै-
र्निर्माय व्यवहारयेत्[३६७] ॥ १६ ॥

---

३६५ 'स्वभावमवभासस्य विमर्शं विदुः' इत्येतदेव सिद्धान्तितम् ।

३६६ अध्यवसायविश्रान्तिरेव प्रकाशस्याङ्गीकृता इति विमर्शशरीर एव प्रकाशो युक्तः ।

६७ अत्र श्लोकद्वये इदं तात्पर्यम्—एतादृगशुद्धस्वातन्त्र्यवशात् नैष

सर्वाः शक्तीः कर्तृत्वशक्तिः ऐश्वर्यात्मा समाक्षिपति । सा च विमर्शरूपा इति युक्तम् अस्या एव प्राधान्यम् इति तात्पर्येण उत्तरमुक्तम् । शब्दार्थस्तु अयं—प्रकाशात्मा परमेश्वरः स्वात्मानं ज्ञात्रेकरूपत्वात् अज्ञेयमपि ज्ञेयीकरोति इति यत् संभाव्यते[३६८] — कारणान्तरस्य अनुपपत्तेः दर्शितत्वात् दृढेन संभावनानुमानेन[३६९], तत एव विमर्शशक्तिलक्षणात् कर्तृत्वात् हेतोः भवति, यतो हि अयम् आत्मानं परामृशति ततो विश्वनिर्भरत्वात् तथा नीलादित्वेन चकास्ति । ननु एषैव कुतः संभावना आत्मानं ज्ञेयीकरोति?, इति आह पृथक् प्रकाशात् बहिर्भूता स्थितिः यस्य तादृक् ज्ञेयं नैव भवति । तुः अवधारणे । तत्र

---

तदा पृथगेव लब्धप्रतिष्ठं वस्तु अवैति अपि तु अज्ञेयमात्मानमनियन्त्रितप्रभावतया ज्ञेयीकरोति, भिन्नज्ञेयसापेक्षत्वे ज्ञानकर्तृता म्लायेत् । अत एव वेद्यैकीभावलक्षणपूर्णतामयास्वातन्त्र्यात्तदानींतनमेव वेदकमात्मानमीश्वरः शिवो वेदिता इत्येवमादि विकल्पैराभासयति भावनादिव्यवहारार्थम् इति ।

३६८ संभाव्यते—संभावनया व्यवस्थाप्यते ।

३६९ अनुमानेन—स्यादेतदित्यादिना ।

च उक्ता युक्तयः । अभ्युच्चय[३७०]युक्तिमपि आह— यदि व्यतिरिक्तं ज्ञेयं स्यात् तत् ज्ञातृरूपस्य आत्मनो यत् एतत् ज्ञेयविषयम् औन्मुख्यं स्वसंवेदनसिद्धं दृश्यते तत्[३७१] न अस्य स्यात्, तेन व्यतिरिक्तविषयौन्मुख्येन अन्याधीनत्वं नाम पारतन्त्र्यम् अस्य आनीयते । पारतन्त्र्यं च स्वातन्त्र्यस्य विरुद्धम् । स्वातन्त्र्यमेव च अनन्यमुखप्रेक्षित्वलक्षणम् आत्मनः स्वरूपम्, इति व्यतिरिक्तोन्मुख आत्मा अनात्मैव स्यात् । अनात्मा च जडो ज्ञेयं प्रति न उन्मुखीभवति इति प्रसङ्गः[३७२] । ततः प्रसङ्गविपर्ययात् इदम्[३७३]आयातम्— अव्यतिरिक्तोन्मुखः स्वतन्त्रः सन् आत्मानमेव ज्ञेयीकरोति इति ।[३७४] न च केवलं नीलादिरूपमेव ज्ञेयं, यावत् अत्यक्तकर्तृस्वभावं स्वातन्त्र्येण अपरित्यक्तमेव सन्तम् आत्मानं निर्माय व्यवहारेण ध्यानोपास-

---

३७० अभ्युच्चययुक्तिम्—अधिकां युक्तिम् ।

३७१ तत्—औन्मुख्यम् ।

३७२ अनभिमताप्तिः ।

३७३ अर्थादेव ।

३७४ द्वितीयं श्लोकं व्याचष्टे न चेत्यादिना ।

नार्चनोपदेशादिना योजयति इति यत् संभाव्यते तदपि अत एव इति संबन्धः। ननु स्वातन्त्र्ययुक्तं च निर्मीयते च इति विरुद्धम् इदम्?, तत्राह – अद्वयात्मनः संविदेकरूपस्य स्वातन्त्र्यात् हेतोः इदं[३७५] न न युज्यते, यत् किल मायापदे अतिदुर्घटं प्रतिभाति, तत्संपादने यत् अप्रतिहतं स्वातन्त्र्यं तदेव पुनः स्वातन्त्र्यशब्देन दर्शितम्। अत एव इत्यनेन तु विमर्शशक्तिरूपम्[३७६] इति अपुनरुक्तम्। अथ[३७७] वा अत एव स्वातन्त्र्यात् इति सामानाधिकरण्येन श्लोकद्वयेन संबन्धनीयम्। उदाहरणम्[३७८] अत्र अर्थे दर्शयति – नीलादिनिर्माणवत् अस्य स्वतन्त्ररूपनिर्माणस्य अप्रसिद्धत्वात् ईश्वरो-भग-

---

३७५ यथोक्तं सूत्रकारेणैवान्यत्र

'अतिदुर्घटकारित्वमस्यानुत्तरमेव यत्।
एतदेव स्वतन्त्रत्वमैश्वर्यं बोधरूपता॥'

इति।

३७६ दर्शितम्।

३७७ अथ वेति – अत्र पक्षे शिवादिसृष्टिरेव प्राधान्येनाभिधेयस्यार्थस्याप्रसिद्धत्वात् तत्र तु पूर्वश्लोकोक्तं नीलादिनिर्माणं दृष्टान्तः, दृष्टान्ततायोजनयैव न च केवलमित्यादि योजनीयम्।

३७८ उदाहरणम्–ईशादिसंकल्पैरित्यादि।

वान्-आत्मा-नित्यो-विभुः-स्वतन्त्रः इत्येवमादौ हि प्रमातुः, पूजयितुः,[३७९] ध्यातुः वा पृथग्भूतं तत् प्रमेयं, पूज्यं, ध्येयं च भाति इति तत् तावत् निर्मितम्, न च अनीश्वररूपम्। एवं हि ईश्वर इति, अनीश्वर इति संकल्प-ध्यानादेः तुल्यत्वं स्यात्, न च एवम्—फल-भेदस्य उपलब्धेः इति, तस्मात् स्वातन्त्र्यशून्यता[३८०]भासनेन स्वातन्त्र्ययुक्तता[३८१]भासनेन च यत् इदम् उभयं ज्ञेयम् आत्मरूपमेव परमेश्वरो भासयति तत्[३८२] विमर्शशक्तिबलात् एव, इति सैव प्रधानम् इति ॥ १५ ॥ १६ ॥

ननु प्रकाशबलात् भावव्यवस्था, स च प्रकाशो विमर्शसार इति विमर्शाभेदे तदेव[३८३]

---

३७९ यद्येवं न स्यात् तर्हि अखण्डितस्वातन्त्र्यस्य ईश्वर इत्यनीश्वर इति भावनादेरविशेषः स्यात्, एष च ईश्वरो मया पूज्यते ध्यायते उपदिश्यते इत्यादौ निर्मितः तावदसौ पृथक्प्रमातुरवभासात्, न च अत्यन्तमेव पृथक्त्वात्मन्येव तथावभासादिति।

३८० शून्यता—नीलादौ।

३८१ युक्तता—ईशादौ।

३८२ तदिति—भासनम्।

३८३ तदेव तदिति—यथा हि श्रीमत्सोमानन्दपादैर्विवृतम्।

तत् इति वक्तुं युक्तम्, ईश्वर आत्मा इत्यादि-संकल्पेषु च निर्मितस्य इदन्तया परामर्शः, स्वातन्त्र्यं तु अहंपरामर्शरूपम्, इति निर्मितस्य तद्रूपत्वाभावे[३८४] कथं स्वातन्त्र्यामुक्तत्वम् इति?, तत् एतत् परिहर्तुमाह

नाहन्तादिपरामर्श-
भेदादस्यान्यतात्मनः।
अहंमृश्यतयैवास्य
सृष्टेस्तिङ्वाच्यकर्मवत्[३८५] ॥१७॥

---

'गच्छतो निस्तरङ्गस्य जलस्यातितरङ्गिताम्।
आरम्भे दृष्टिमापाल्य तदौन्मुख्यं हि गम्यते॥'

इति। तथा

'बोधस्य स्वात्मनिष्ठस्य रचनां प्रति निर्वृतिः।
तदास्याप्रविकासो यस्तदौन्मुख्यं प्रचक्षते॥'

इति। तथा लोकव्यवहारोऽपि।

'गोस्तनात्पाततः क्षीरे विकासस्तत एव हि।
न च न क्षीरमित्येष व्यपदेशोऽस्ति तत्क्षणम्॥'

इति। अत्र च निर्मितस्य इदमिति रूपत्वान्निर्मातुश्च अहमिति रूपत्वात् नैतादृशो व्यवहार इति कथमभेदहेतुः 'स्वातन्त्र्यामुक्तम्' इत्यतः सूत्रम्।

३८४ तद्रूपत्वाभावे – अहंपरामर्शरूपत्वाभावे।

३८५ अस्येदं तात्पर्यम् – वर्तमानप्रमातृभावेन आहितप्रत्यवमृश्यस्य प्रमेयत्वेन, इदंता – विमर्शभेदे च आभासभेदे च प्रमातैव ईश्वरशब्देन सृष्टः अहंपरामर्शो व्यवधानेन केवलं, यथा क्रियादिशब्देन क्रियादय

स्वरूपे[३८६] भाव[३८७]प्रत्ययः, आदिग्रहणात् आत्मेश्वरादिपरामर्शः, तिङ्ग्रहणं प्रत्ययोपलक्षणम्, कर्मग्रहणं क्रियावाचिसदसत्त्वभूतशक्तिरूपोपलक्षणम् । तत् अयम् अर्थः—अहम् इत्येवंरूपो यः परामर्शो, यश्च ईश्वरः प्रमाता आत्मा शिव इत्यादिः अनन्तप्रकारः परामर्शः, तस्य[३८८] यद्यपि भेदोऽन्यान्यरूपता, तथापि तद्भेदात् हेतोः अस्य आत्मनो निर्मातृरूपस्य अहंपरामर्शमयस्य निर्मेय[३८९]रूपस्य च ईश्वरादिपरामर्शास्पदस्य यो भेदः शङ्कितः, स न युक्तः, यत ईश्वर इत्यपि यः परामर्शः, स ईशनशीले ज्ञातृत्वकर्तृत्वतत्त्वे विश्राम्यति, ज्ञातृत्वादि च ज्ञानादौ, स्वातन्त्र्यम् अनन्यमुख-

---

उच्यन्ते पचत्यादिवत् पचत्यादिमुखेन ह्यत्वभिधानात् ईश्वरशब्दादात्मशब्दात् अहमिति परामृशन्नात्मानमवैति न साक्षात्प्रतीतिस्तु अस्त्येव अनुभवमुखेनानुभूतस्येति ।

३८६ अहमित्यव्ययम् अव्यतिरिक्ते प्रकाशे वर्तते तस्य भावः अहमिति स्वरूपविमर्शलक्षणोऽहन्ता सैव प्रकाशस्य निजं लक्षणम् ।

३८७ भावप्रत्ययः— तल्प्रत्ययः ।

३८८ तस्य—अनन्तपरामर्शस्य ।

३८९ निर्मात्रपेक्षया ।

प्रेक्षित्वम् अविच्छिन्नज्ञानादिशक्तियोगः, [३९०]अ-विच्छेदश्च जानामि करोमि इति अस्मदर्थवि-श्रान्तिः इति। अस्य ईश्वरस्य आत्मनः सृष्टेः सृज्यमानस्य अहंविमर्शनीयत्वमेव। सृष्टेः इति वा हेतौ पञ्चमी। अस्य ईश्वरस्य यतः ईश्वरादिसंकल्पेषु अपि अहंपरामर्शनयोग्यस्यैव सृष्टिः। [३९१]अर्हे कृत्यः। यथा क्रियाकारकसमुच्च-यविकल्पादिशक्तयो [३९२]यथास्वं तिङ् तृतीयादि च वादिप्रयोगावसेयपरामर्शपरमार्थाः [३९३]पाकः कर्ता समुच्चयो विकल्पः इत्यादिशब्दैः अभि-धीयमानाः सत्त्वभावम् आपादिता अपि, [३९४]पचति चैत्रेण च वा इत्येवंभूते मूलपरामर्शे

---

३९० अविच्छेद इति – संविद्विमर्शः परमार्थः प्रमेयरूपं परतन्त्रमर्थं नैवोल्लासयति अत एव एवंविधः शब्दः अव्ययमित्युच्यते, बहिःसृष्टस्य हि लिङ्गसंख्यादिशक्त्यन्तरयुक्तता स्यात् नान्तररूपस्य संविद्रूपस्य तद्धर्मस्य वा। अत एव समुच्चयविकल्पनादिकं बाह्यवस्तुनिष्ठत्वाभावात्संवेदनस्वात-न्त्र्योल्लासनलक्षणं धर्ममभिद्योतयन्तः चादयोऽपि असत्त्वभूतार्थनिष्ठा इत्युच्यन्ते, समुच्चय इत्यादौ तु तदेव रूपं सृष्टं भाति इति।

३९१ अर्हे कृत्यः मृश्यतया इत्यत्र।

३९२ यथास्वं–क्रमेण।

३९३ पाकः–सत्त्वभूतः।

३९४ पचति इति–अत्र हि धात्वर्थावगमाविशेषेऽपि क्रियान्तराका-ङ्क्षानाकाङ्क्षतैव मानं तथा च क्रियान्तराकाङ्क्षैवासत्त्वरूपत्वं। तथा चोक्तं तत्र भवता

---

पं० ३ ख० मु० अस्येश्वरात्मनः सृष्टेरिति पाठः।

विश्राम्यन्ति । अन्यथा तु ता[३९५]: प्रतीता नैव भवेयुः । तद्वत् अत्रापि । एतदुक्तं भवति—परामर्शो नाम विश्रान्तिस्थानम्, तच्च पार्यन्तिकमेव पारमार्थिकम्, तच्च अहमित्येवंरूपमेव । मध्यविश्रान्तिपदं तु यत् वृक्षमूलस्थानीयं ग्रामगमने तदपेक्षया सृष्टत्वम् उच्यते,—इति को विरोधः । [३९६]अनेन नीलादेः अपि, इदं नीलम् इति मध्यपरामर्शेऽपि मूलपरामर्शे अहमित्येव विश्रान्तेः आत्ममयत्वम् उपपादितम् एव । नीलम् इदम् अहं वेद्मि इति, अहं प्रकाशे इति हि इयत्तत्त्वम् । यथोक्तम् 'इदमित्यस्य'

---

'असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते ।'

इति । क्रिया च स्फुटमेव असत्त्वभूता । उक्तं च तेनैव

'यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते ॥'

इति । च-वादीनां च निपातत्वादत्यन्तमेव असत्त्वरूपत्वं तेनायमाशयः—यथा एतेषां सत्त्वाभाव एव सृष्टे रूपे क्रियाकारकसमुच्चयविकल्पादिमये लिङ्गसंख्यादियोगादिक्कालादियोगः न शक्तिरूपतायां, तथा ईशादीनामपि सृष्ट एव रूपे भेदो नान्तारूपतायामित्यर्थः ।

३९५ ताः—शक्तयः ।

३९६ ननु एवं नीलमित्यपि परामर्शे अहन्तैव मूलविश्रान्तिहेतुः तथा च सति नीलादिसृष्टेरपि कथं परिहृतं वेदकत्वं येन सूत्रे आत्मादिसृष्टेरेव स्वातन्त्र्यामुक्तत्वमुक्तम् इत्याशङ्कां गर्भीकृत्याह अनेन नीलादेरपि इति ।

इत्यादि। मूढस्तु नीलादिविमर्शात् एव अर्थक्रियादिपरितोषाभिमानी, इति नीलादेः स्वातन्त्र्यनिर्मुक्तत्वम् उक्तम्। आत्मादौ तु तन्मूलपरामर्शविश्रान्तिमन्तरेण प्रतीतिपरिसमाप्तिम् अर्थक्रियां च मूढोऽपि न अभिमन्यत इति तस्य निर्मितौ अपि अनुज्झितस्वातन्त्र्यम् उक्तम्॥ १७॥

ननु[३१७] एवं विश्वपरामर्शानाम् अहम् इत्येव विशुद्धैकपरामर्शविश्रान्तिरेव तत्त्वम् तत् कथम् इदम् उच्यते – ज्ञानस्मृत्यादिका अस्य शक्तय इति, ज्ञानस्य च निर्णयसंशयभेदा नीलादीनां च वैचित्र्यम्? इति आशङ्कायां परिहारमाह

मायाशक्त्या विभोः सैव[३१८]
भिन्नसंवेद्यगोचरा।

---

३१७ अयं भावः – यदि विश्वमहमिति परामर्शमयमेव कुत्रैषां ज्ञानस्मृत्यादीनामुपयोगः, यदि च आत्मनो ग्राहकरूपस्य ज्ञानाध्यवसायस्मरणसंकल्पादिव्यवहारः तत्कस्य विमर्शशक्त्या उपयोगः,–परमेश्वरस्य इति चेत् तर्हि आत्मैव परमेश्वर इत्युक्तिः विरुद्धा आपतेत् इति अभिप्रायः अस्या आशङ्कायाः।

३१८ सैव–विमर्शशक्तिः।

कथिता ज्ञानसंकल्पा-
ध्यवसायादिनामभिः[३९९] ॥ १८ ॥

अनुपपन्नम् अवभासनं माया इति उच्यते, ततश्च भिन्नं प्रकाशात् सर्वम् अवभासजातं माया, तत्र च चित्तत्त्वस्यैव स्वातंत्र्यं[४००] मायाशक्तिः, तया भिन्नं यत् संवेद्यं प्रमातुश्च[४०१] अन्योन्यतश्च, मायाशक्त्या भिन्नेन प्रमातुः अन्योन्यतो वेद्याच्च[४०२] करणवर्गेण यत् संवेद्यं स एव गोचरो—विश्रान्तिपदं यस्याः तादृशी सती सैव प्रत्यवमर्शात्मा चितिः परावाग्रूपा, ज्ञानम् इति, संकल्प इति, अध्यवसाय इति च उच्यते, आदिग्रहणात् संशयः स्मृतिः इत्यादि । तथाहि—यत् इन्द्रियेण स्फुटग्राहिणा बाह्येन

---

३९९ इदमस्य सूत्रस्य तात्पर्यम्—प्रकाशात्मनः परमेश्वरस्य मायाशक्त्या स्वात्मरूपं विश्वं भेदेन आभास्यते ततः सैव चितिर्ज्ञानमध्यक्षं तस्यैव भिन्नस्य आभातस्य स्मृतिः संकल्पोऽध्यवसायो मनोबुद्धिवृत्तिरूपत्वेनापि चितिरेवेति ।

४०० अनेन मायायां स्वातन्त्र्यम्—इति विग्रहो दर्शितः ।

४०१ प्रमातुरिति—विभुरेवात्मा परमेश्वरः स तु मायाशक्त्या संकोचाद्ग्राहको यथा तथा विमर्शशक्तिरपि मायाशक्तिसंकोचितवेद्योपरागसंकुचिता सती ज्ञानस्मरणादिरूपा इत्युच्यते परंतु नाममात्रेण विमर्शशक्त्यतिरिक्तं न किमपि ज्ञानादि तत्त्वान्तरमिति तात्पर्यम् ।

४०२ अनेनावृत्तिपक्षमाश्रित्य भिन्नसंवेद्येति व्याख्यातमिति बोध्यम् ।

विषयेण स्फुटेन च नियन्त्रितं संवित्तत्त्वं तत् ज्ञानम् । मनसा विषयेण च अस्फुटेन संकल्पः । बुद्ध्या विषयेण च विषयत्वपर्यन्तभाजा अध्यवसायो निश्चयः । विषयस्य च यत् भिन्नत्वं बहिरन्तःकरणानां च तत्प्रकाशाभेदात् अनुपपन्नं चित्तत्त्वेन[४०३] आभास्यते, इति भेदे यतो विश्रान्तिः, न तु भेदस्य अभेदे ईश्वरसदाशिवादिवत्, ततो ज्ञानसंकल्पादयो भिन्नाः तस्य अप्रध्वस्तस्वस्वभावाभेदस्य[४०४] संवित्तत्त्वस्य अनुसंधातुः शक्तय इति उक्ताः, संशयादयश्च भिन्ना नीलादिवैचित्र्यं च इति सर्वम् अखण्डितम्[४०५] ॥ १८ ॥

ननु प्रत्यवमर्शात्मत्वं चितिशक्तेः संकल्पस्मरणादिशक्तिषु सविकल्पात्मिकासु भवतु । या तु निर्विकल्परूपा साक्षात्करणलक्षणा अनुभवशक्तिः, तत्र कथम्[४०६] । प्रत्यवमर्शो हि

---

४०३ चित्तत्वेन–अशुद्धप्रमात्रा ।

४०४ यद्यपि अर्थस्थितिः प्राणपुर्यष्टकनियन्त्रिते जीवे निरुद्धा तत्रापि परमात्मनि सा स्थिता इति नित्या ।

४०५ अखण्डितम्–अभिन्नम् ।

४०६ प्रत्यवमर्शात्मत्वम् ।

अभिलापभेदयोजनामयः, अभिलापविशेषयो-
जना च संकेतस्मरणम् अपेक्षते । तच्च
संस्कारप्रबोधम् । सोऽपि तादृशादृशम्, इति
एवं प्रथमसमये[४०७] कथम् अभिलापयोगः?, इति
परस्य व्यामोहम् अपोहयितुमाह

साक्षात्कारक्षणेऽप्यस्ति
विमर्शः कथमन्यथा ।
धावनाद्युपपद्येत
प्रतिसंधान[४०८]वर्जितम् ॥ १९ ॥

इह[४०९] तावत् चैतन्यस्य आत्मभूतोऽङ्गुलिनिर्दे-
शादिप्रख्यो[४१०]ऽभिलापयोगः, अन्यथा बालस्य
प्रथमं व्यवहारे दृश्यमाने व्युत्पत्तिरेव न
स्यात् । निर्विकल्प[४११]विज्ञानपरंपरया हि तं शब्दं

---

४०७ साक्षात्कारलक्षणे ।

४०८ अत्रायं भावः—साक्षात्कारक्षणे ज्ञानेऽपि चितोऽर्थप्रत्यवमर्शो-ऽस्ति सूक्ष्मः, वाचनधावनादौ शीघ्रक्रियया तत्तद्दृश्यमानदेशाद्युपादित्सा जिहासानुसंधानेव हि भवेदिति ।

४०९ अप्रतिनियते मायीये विमर्शे ।

४१० दत्तलक्षणः ।

४११ बालः ।

शृणोति, तमर्थं पुरः पश्यति, पुनः तद्विविक्तं[412] भूतलं पश्यति इति, घटम् आनय – नय – इति व्यवहारात् कथम् अस्य अयम् अर्थो हृदि परिस्फुरेत्, घट इति, इदमानय इति, इदं नय इति, इदमिति योजनाप्राणो हि अयमर्थः, योजना च विकल्पव्यापारः[413] । अथ बालस्य प्राग्जन्मानुभूतसंकेतस्मृतेः[414] एवम्[415], तथापि संकेतकाले स शब्दो विषयत्वेन इदं भावेन अप्रत्यवमृश्यमानत्वात् भेदात् प्रच्युत्य निर्भासमानो विज्ञानशरीरविश्रान्तीकृतो वाचक इति भवति, तत् विज्ञानस्य स्वरूपं चेत् भाति, तत् अभिलापमयमेव इति, यथा[416] विषयस्य सुखरूपत्वाभावेऽपि ज्ञानं सुखात्मकं

---

४१२ अर्थशून्यम् ।

४१३ तथा चात्मभूत एवाभिलापश्चैतन्यस्येति सिद्धस् ।

४१४ संकेतस्य स्मरणं संस्कारादानसंस्कारप्रबोधयोरायत्तं, तौ च निर्विकल्पकेन कर्तुमशक्यौ । उक्तं हि 'अनुभवः पटीयान् स्मृतिबीजमाधत्ते तादृशदर्शनादर्थस्य प्रबोधः' इति पटीयस्तां चानुभवस्य नापरां कांचन मन्महे ऋते विमर्शविश्रान्तेरिति ।

४१५ तथा च नात्मभूत इति पूर्वपक्षाशयः ।

४१६ यथा स्रक्चन्दनवनितादेर्विषयस्य सुखसाधनस्यापि सुखरूपत्वाभावेपि ज्ञानं सुखरूपं भाति तथा अभिलापात्मा रूपादिर्विषयो मा भूत् ज्ञानं तद्रूपमेव भासिष्यत इत्यर्थः ।

भाति तथा मा भूत् अभिलापात्मा रूपादिः विषयः, तथापि विज्ञानं तदात्मकं[417] अवभासिष्यते। अत्र[418] तु दर्शने विषयस्यापि विमर्शमयत्वात् अभिलापमयत्वमेव वस्तुतः, स्तैमित्याद्यवस्थापि[419] यदि न परामर्शमयी तर्हि अस्यां विकल्पात्मकप्रमातृव्यापारानुल्लासात् संभवः शपथपरमार्थ[420] एव, स्मरणं च न स्यात्[421], रूपविषयाध्यवसायी हि यदि विकल्प उदियात्

---

४१७ तदात्मकम्—अभिलापात्मकम्।

४१८ अत्र दर्शने – स्वतन्त्रशिवाद्वयदर्शने।

४१९ सकलविकल्पक्षोभरहितः स्तिमितः, बहिरन्तःकरणप्रसराभावः स्तैमित्यम्।

४२० ननूक्तं प्रत्यक्षसाधन एव इन्द्रियधियः कल्पनाविरहः

'संहृत्य सर्वतश्चिन्तां स्तिमितेनान्तरात्मना।
स्थितोऽपि चक्षुषा रूपमीक्षेत साक्षजा मतिः॥
पुनर्विकल्पयन्किंचिदासीन्मे कल्पनेदृशी।
इति वेत्ति न पूर्वोक्तावस्थायामिन्द्रियाद्गतौ॥'

इति सत्यमुक्तं, तत्तु न परामर्शाभावसाधनायालम्, तथा हि सर्वचिन्तासंहारे तत्समनन्तरं तावदध्यवसायेन नोत्पत्तव्यं तदुत्पत्तौ स्तिमितेतरयोरविशेषप्रसङ्गात् अध्यवसायानुत्पत्तौ सा च दशा अस्ति इति कथम् अव्यवहरणीयत्वात्, स्मरणेन व्यवहरिष्यते इति चेत् न यत्किल दर्शनस्य स्मरणस्य च यथैकमन्तर्मुखं परामर्शमयं चित्तत्त्वं तदा भवति अभिन्नविषयत्वं नान्यथा, द्रष्टुश्च संविद्रूपस्येयमेव द्रष्टृता यदिदन्ताविमर्शे भित्तिस्थानतया प्रतिष्ठापदत्वेन अहं विमर्शमयत्वमिति स्तिमिततापि अहं विमर्शमयी एवेति।

४२१ स्तिमितोऽहमासमिति।

किमन्यत्, सर्वचिन्तासंहरणेन स्तैमित्यं नाम न स्यात् इति, तत्रापि अस्ति अन्तः परामर्शः सकलेन च शब्दग्रामेण, शब्दनं[422] हि सहन्ते वस्तूनि। तत्र च नियतशब्दयोजनं क्रियते, तथाहि—बालस्य पुरतः पिण्डे सहजो यः परामर्शः, अहम् इत्यविच्छेदेन इदम् इति विच्छेदेन वा तत्पृष्ठे एव[423] गौर इति गौः[424] इति वा शब्द आरोप्यते, सोऽपि अभ्यासात् प्रमातृमयीभवति, तत्पृष्ठे च अन्यः शुक्ल इति वलीवर्द इति, एवमन्यत् इति संकेततत्त्वम्। तस्मात् अस्ति साक्षात्कारे प्रत्यवमर्शः। अपिशब्दस्य अयमाशयः—इह साक्षात्कारो[425] वस्तुतः 'पश्यामि' इत्येवंभूतविकल्पनव्यापारपर्यन्त एव। विकल्पो हि प्रत्यक्षस्य व्यापार, इति परोऽपि[426] मन्यते। न च व्यापारः तद्वतो[427] भिन्नो युक्तः, तत्स्वरूपभूतो हि सः।

४२२ शब्दनं—विमर्शनम्।

४२३ अहमिति।

४२४ इदमिति।

४२५ साक्षात्कारः—प्रत्यक्षनिर्विकल्परूपः।

४२६ परः—सौगतादिः।

४२७ तद्वतः—व्यापारवतः।

भवतु वा क्षणमात्रस्वभावः साक्षात्कारः तत्रापि अस्ति विमर्शः, अवश्यं चैतत्—अन्यथा इति यदि स न स्यात्, तत् एकाभिसंधानेन जवात् गच्छन्, त्वरितं च वर्णान् पठन्, द्रुतं च मन्त्रपुस्तकं वाचयन्, न अभिमतमेव गच्छेत्, उच्चारयेत्, वाचयेत् वा । तथाहि—तस्मिन् देशे ज्ञानम् आचिक्रमिषा-आक्रमणम्-आक्रान्तता-ज्ञानं-प्रयोजनान्तरानुसंधानम्-तित्यक्षा-देशान्तरानुसंधिः[428], तत्रापि आचिक्रमिषा इत्यादिना संयोजनवियोजनरूपेण परामर्शेन विना अभिमतदेशावाप्तिः कथं भवेत् । एवं त्वरितोद्ग्रहणवाचनादौ मन्तव्यम् । तत्र विशेषतः स्थानकरणाक्रमणादियोगः[429] । अत्र[430] च यतः पश्चा-

४२८ अभिमतदेशप्राप्तिरूपम् ।

४२९ स्थानं—मूर्धताल्वादि, करणं—जिह्वाग्रादि, तयोः परस्परं संस्पर्शे सति वर्णनिष्पत्तिः ।

४३० ननु च इदमिति सर्वत्र नीलादिबोधे शब्दनं चेत् तर्हि न किंचिन्निर्विकल्पकम्, तथा च कथमवतरणिकायां 'या तु निर्विकल्पकरूपा' इत्यादि उक्तमित्यत आह, अत्र च यत इत्यादि, अयं भावः—या तु निर्विकल्परूपा इत्याद्युच्यते तत्परदृशैव, तदकथनेऽपि नास्माकं किंचिद्विघटितं भवेत् । तथाहि इदमेव अधुनैव रक्तः संजानामि करोमि संकुचितरूप इत्येवं नियतिकालरागाशुद्धविद्याकलामायारूपकञ्चुकषट्क-

ऋादिस्थूलविकल्पकल्पना न संवेद्यते, तत एव त्वरितत्वम् इति सूक्ष्मेण प्रत्यवमर्शेन संवर्तितशब्दभावनामयेन भाव्यमेव। संवर्तिता हि शब्दभावना प्रसारणेन विवर्त्यमाना—स्थूलो विकल्पः, यथा इदमित्यस्य प्रसारणा घटः शुक्ल इत्यादिः, तस्यापि पृथुबुध्नोदराकारः शुक्लत्वजातियुक्तगुणसमवायी इ-

---

परिवृतप्रकाशस्वभावो यः पुरुषो नाम मायाप्रमाता तस्य 'समस्तं पश्यामि इति प्रभृति बुद्धीन्द्रियविशेषवृत्तिवर्गे यदनुयायि' वेद्मीति वृत्तिरूपं तत्र यत्करणं सामान्यरूपमशुद्धविद्यातत्त्वं तच्च न स्वतन्त्रं किंचित् अपि तु परमेश्वरस्यैव शक्तिः, ततस्तस्य यानि विशेषरूपाणि चक्षुरादीनि रूपं वेद्मि स्पर्शं वेद्मि इत्यादि विशेषवृत्तिभाञ्जि तैरभिव्यक्तो मायाशक्तिसंकोचापसारितोऽपि ईषत्पुन‥‥‥काशो यस्मिन्नीलादौ वेद्ये तादृशे झटिति दृश्यमाने प्रकाशस्य स्वाभाविकात्परामर्शमयत्वात् यत् अहमिति विमर्शनं तद्गोचरीभावं प्राप्ते इदन्तया प्रमातृप्रमेयान्तरभावापोहनप्राणया निर्देश्यत्वं विकल्प्यमानत्वं नास्ति, तावति यतो मनसः संबन्धे प्रमातृप्रमेयभेदोत्थापकोऽनुव्यवसायात्मा विकल्पनव्यापारो नोदितः, तत्र च इदन्तानिर्देश्यत्वाभावे नीलादिमात्रविषया भेदप्रथनमात्ररूपा माया संस्कारस्य तत्रापि भावात् न तु सर्वथा पूर्णा ईश्वरता प्रमाणता च प्रमाणलक्षणे 'इदमेतादृक्' इत्यादौ तदा च मायाप्रमातृभावस्य संवृतस्यैवावस्थानम्, उदिते तु विकल्पनव्यापारे सोऽपावृतो वर्तते इति तस्कृताद्वैतारम्भात्प्रमातृप्रमेययोर्भेदकः प्रमेयविश्रान्त इदमिति निर्देशो भवन् पूर्वापेक्षया प्रसारितरूपः स्वयं विकल्पनात्मा स्वापेक्षया पूर्वत्र निर्विकल्पकतां व्यवहारयति संवृता हि शब्दभावना प्रसारितां शब्दभावनां विविधकल्पनारूपामुपेक्ष्य तथाभूतवैविध्यकल्पनवकल्यान्निर्विकल्पा इत्युच्यते इति।

त्यादिः । धावु गतिशुद्धौ इति पाठात् धावि-स्त्वरितगतौ[431] स्वशक्तिवशात् वर्तत इति ॥ १९ ॥

भवतु एवं सूक्ष्मो विमर्शः प्रकाशशरीरावेशी, यत्र तु स्थूलत्वेन[432] विकल्परूपता स्फुटा, तत्र शब्दो नीलादिवत् एव पृथक् प्रतिभासते—नीलम् इदम् इति, स कथं प्रकाशस्वरूपात् अपृथग्भूतः स्यात्, शब्दात्मा च विमर्शः, स च अत्र मायात्मके भेदपदेऽपि प्रकाशापृथग्भूतो भवद्भिः इष्टः, तत् एतत् कथं प्रतिपत्तव्यम्[433]?, इत्याशङ्क्याह

---

४३१ धावु इति संकेतेनैव त्वरितगतौ वर्तते, आर्यसंकेतो हि शक्तिः ।

४३२ स्थूलत्वेन—अध्यवसायरूपत्वेन ।

४३३ त्रिधा हि अत्र श्लोके पूर्वपक्षव्यवस्था—तथाहि एका तावत्,—यदिदं शब्दनं स्थूलं शब्दात्म नीलमिति तदिति वा स मायापदोचितो विमर्शो मायाप्रमातृप्रकाशस्य कथं जीवितमिति । तथा द्वितीया यत् सांख्यदर्शनकृताश्रमैः—

'बुद्धिं विना कथं बोधः सा बुद्धिः प्रकृतेः प्रजा ।
न च तस्यास्तया योगः ………………… ॥'

इति नीत्या विमर्शोऽध्यवसायरूपोऽभ्युपगतः स बुद्धेर्धर्मो न चितः प्रकाशरूपायाः 'अध्यवसायो बुद्धिः' इति च ईश्वरकृष्णवचनात् । तृतीया पुनः शब्दार्थव्यतिरेकेण तावन्न परं संवेद्यते तत् किं विमर्शस्य वपुः इति ।

तत्र आद्ये तात्पर्याभिधायि सूत्रम्, द्वितीये विपर्यस्तताशमकम्, तृतीये अज्ञानस्य संबोधकतापादकम् इति ।

घटोऽयमित्यध्यवसा
नाम[४३४]रूपातिरेकिणी।
परेशशक्तिरात्मेव
भासते न त्विदन्तया॥ २०॥

केन एतत् उक्तम्,—घट इति यः स्थूलः शब्दः स प्रकाशजीवितस्वभावो विमर्श इति। सोऽपि हि स्थूलः शब्दोऽर्थवत् पृथग्भूत एव भाति। तौ नामरूपलक्षणौ शब्दार्थौ एकरूपतया 'सोऽयम्' इत्येवंरूप[४३५]त्वेन परामृशन्ती अध्यवसायशक्तिः[४३६] या, सा परमेश्वरशक्तिः वि-

---

४३४ नाम—घट इति, रूपं—पृथुबुध्नोदराकारः, तथानामायमिति रूपं कठिनम् इति विशेष-सामान्यविभागेन योज्यमिति।

अस्याः कारिकाया इदं तात्पर्यम्—अयमिति घट इति वा अध्यवसायो भिन्नप्रकाशमान-नाम-रूपातिरिक्त-चितिशक्तिमय एव आत्मैवाभेदेनाभासते इति।

४३५ सोऽयमित्येवंरूपत्वेन परामृशन्ती इति—ताभ्यामतिरेकी यो न कदाचिदिदन्ताविषयः अपि तु आत्मवत् अहमित्येव भासते योऽध्यवसायो मायाप्रमातृप्रकाशस्य जीवितम् इत्येवास्मन्मतम् न तु शब्द एवाध्यवसाय—इति प्रथमप्रश्नपरिहारः।

४३६ परमेश्वरस्यैव प्रकाशवपुषः परमार्थतः सा शक्तिः, स एव पशुप्रमातृरूपतया अध्यवस्यति स्मरति जानाति न तु जडस्य बुद्धितत्त्वस्य एतत् प्रातिस्विकं किंचन वपुः—इति द्वितीयप्रश्नपरिहारः।

मर्शरूपा आत्मवत्[437] एव अहमित्यनवच्छिन्नत्वेन भाति, न तु कदाचित् इदन्तया—विच्छिन्नत्वेन भाति, विच्छिन्नत्वेन अवभासे परप्रतिष्ठत्वात् पुनर्विमर्शान्तरेण भाव्यम्, तत्रापि एवम्[438] इति अनवस्था, अतो नीलस्य प्रकाशनमेव न स्यात्—प्रतिष्ठालाभाभावात्। तस्मात् 'सर्व एव विमर्शः प्रकाशात् अविच्छिन्न एव' इति। अध्यवसा इति, 'आतश्चोपसर्गे' (पा. व्या. ३-३-१६) इत्यङन्तः स्त्रियाम्॥२०॥

ननु एवं सर्वस्यैव ज्ञानकलापस्य अहमित्येव प्रतिष्ठाने[439] वेद्यभूमिस्पर्शो नास्ति वेद्यभुवि च देशकालयोगः न तु वेदकांशे देशकालयोगाभावे च यत् इदं ज्ञानानां स्वांशापेक्षया ज्ञानान्तरापेक्षया च सक्रमत्वं लक्ष्यते तत् कथं स्यात्, क्रमाभावे च एकत्वमेव वस्तुतो भवेत्,

---

४३७ नामरूपातिरेकी चाध्यवसायः प्रकाशते अहमिति आत्मेव, ततश्च निर्देश्यत्वाभावेऽपि अनपह्नवनीया एवासौ विमर्शशक्तिः—इति तृतीयप्रश्नपरिक्षेपः।

४३८ एवम्—अन्येन।

४३९ प्रतिष्ठाने—सर्वेषां संवेदनानां परामर्श एव जीवितमिति स्थिते।

---

पं० १ ख० पु० अहमित्यविच्छिन्नत्वेनेति पाठः।

ततश्च 'ज्ञानस्मृत्यादिशक्तिभिस्तद्वान् परमेश्वरः' इति यत् उक्तं तत् कथं निर्वहेत्?[440] इत्याशङ्कां शमयन् पूर्वोक्तमुपसंहरति[441]

केवलं[442] भिन्नसंवेद्य-
देशकालानुरोधतः ।
ज्ञानस्मृत्यवसायादि
सक्रमं प्रतिभासते[443] ॥ २१ ॥

सत्यम् एवम्—अक्रममेव संवित्तत्वम्, किन्तु स्वशक्तिवशात्[444] भिन्नत्वेन भासितानि

---

४४० तथा चात्र नात्मरूपतावभासनमध्यवसायस्योपपद्यते इति निष्कृष्टोऽर्थ इति ।

४४१ पूर्वसूत्रोक्त एवार्थः सूत्रान्तरेणाभिव्यज्यत इति भावः ।

४४२ केवलमित्येतद्वाक्यार्थविशेषणं भवत् अहमिति विश्रान्तिः पारमार्थिकी तावदखण्डितैव तत्पृष्ठ एव तु सक्रमत्वं निर्भासत इति प्रकटयति । संवेद्यशब्दः परामृश्यताविश्रान्तः संवेदनस्य परामर्शसारत्वाभिधानाय व्याख्यातः ।

४४३ इदमत्र तात्पर्यम्—चित्तत्वस्य मायाशक्त्या भिन्नं घटादि संवेद्यं तत्तद्देशकालभिन्नं प्रकाश्यते, यस्याभेदेनावष्टम्भाद्विभिन्नदेशकालादिना ज्ञानस्मृत्यादि अवभासते इति ।

४४४ ननु भिन्नसंवेद्येत्यादि अयुक्तम् यतो बोधस्योन्मग्नतायां प्रकाशनमेवास्य न युक्तम् इत्यत आह स्वशक्तिवशादिति । अभिमानबलेनेदमुन्मग्नत्वं प्रकाशेत न वस्तुत इति भावः ।

यानि वेद्यानि[४४५] तेषां मूर्तिभेदकृतो यो दूरादूर-वैतत्यावैतत्यादिः देशः, क्रियाभेदकृतश्च चिर-शीघ्रक्रमादिरूपः कालः, तौ अनुरुध्य — च्छाया-मात्रेण अवलम्ब्य, ज्ञान-स्मरणाध्यवसायानां स्वांशा इव भान्ति, निरंशानामपि तद्भास-मानांशकृतश्च सक्रमत्वावभासः परस्परापेक्षया स्वांशापेक्षया च, यद्यपि कालक्रम एव स्फुटो विज्ञानेषु भाति न देशक्रमः, तथापि वि-मूढस्य पर्वतसंवेदनं विततमिव बदरसंवेदनं च सूक्ष्ममिव भाति — इति देशक्रमोऽपि दर्शितः, तेन वेद्यगतक्रमस्वीकाराभासात् सक्रमत्वम् आभासमानमपि न अपारमार्थिकम् — आभा-समानस्य परमार्थत्वात्, ततश्च युक्तमुक्तम् 'ज्ञानादयोऽस्य भगवतः शक्तय' इति ।

'मायाशक्त्या विभोः' ।

---

४४५ उपलक्षणपरत्वं चात्र देशकालपदस्य बोध्यम् । तेन संवेद्यस्य स्फुटास्फुटत्वादिरूपतया ज्ञानसंकल्पस्मरणादिभेदस्तावदन्तरङ्गः, प्रत्येक-मपि तत्र नीलज्ञानं पीतज्ञानमित्यन्तरङ्गतरः, नीलेऽपि सुखं दुःखं संवे-दनमित्यन्तरङ्गतमः । चिरमिदं ज्ञानं शीघ्रमिति बहिरङ्गः, पूर्वमिदमपर-मिदमिति बहिरङ्गतरः, सूक्ष्ममणकज्ञानं स्थूलं हस्तिज्ञानमिति बहिरङ्ग-तमः — इति प्रधानभूतसंवेद्योपरागकृतः संवेदनस्य भेद इति सूत्रार्थः ।

इति श्लोकेन स्वरूपवैचित्र्यं ज्ञानानां दर्शितम्[४४६]। अनेन तु देशकालवैचित्र्यम्–इति विशेषः । इति शिवम् ॥ २१ ॥

इति श्रीमदाचार्याभिनवगुप्तविरचितायामीश्वरप्रत्यभिज्ञा-
सूत्रविमर्शिन्यां प्रथमे ज्ञानाधिकारे ज्ञानशक्तिनिरूपणं
नाम पञ्चममाह्निकम् ॥

---

४४६ यस्तु ज्ञानस्मृतिसंकल्पाद्यवान्तरजातिकारी भेदः स 'मायाशक्त्या विभोः' इत्यनेन दर्शितः, अनेन तु ज्ञानाद्येकजातीयत्वेपि यो भेदो नीलज्ञानं पीतज्ञानं नीलस्मरणं पीतस्मरणमित्यादिः यश्च देशकालक्रमोपरागाद्वितताविततत्वशीघ्रचिरादिश्च संवेदनगतः स निरूपितः ।

# अथ षष्ठमाह्निकम्

स्वात्माभेदघनान्भावांस्तदपोहनटङ्कतः ।
छिन्दन्यः स्वेच्छया चित्ररूपकृत्तं स्तुमः शिवम् ॥

एवं स्मृतिशक्तिर्ज्ञानशक्तिश्च निरूपिता । अथ तदुभयानुग्राहिणी अपोहनशक्तिर्वितत्य श्लोकैकादशकेन 'अहं प्रत्यवमर्शो यः प्रकाशात्मा' इत्यादिना 'सिद्धे सर्वस्य जीवतः' इत्यन्तेन निर्णीयते । तत्र श्लोकेन 'प्रत्यवमर्शे अविकल्पो विशेष' इति सूच्यते । ततः श्लोकेन 'शुद्धेऽहंप्रत्यवमर्शेऽपोहनव्यापारासंभव' उच्यते । ततः 'स्वदृष्टावेव तदुपपत्तिः' इति श्लोकेन । ततोऽपि द्वयेन 'अशुद्धस्याहमित्यवमर्शस्य विकल्परूपता' । ततः श्लोकेन 'अनु-

---

१ 'सामानाधिकरण्यं च सद्धियाहमिदंधियोः ।'
इति न्यायात् विमर्शरूपता यद्यपि सामान्यरूपा तथापि विकल्पतानिबन्धनभूतरूपान्तरशून्यो यो विमर्शव्यक्तिविशेषः स विकल्पव्यतिरिक्त इति भावः, तेन यदज्ञानवबोधात् प्रत्यवमर्शो न विकल्प इति तथाविकल्पो विशेष इति च पाठान्तरं कल्पयन्ति तेस्याचार्यस्याशयं न विदुः सूच्यते इत्यनेन विरोधात् ।

२ अस्मद्दर्शन एवापोहनव्यापारसंभवः ।

३ स्वदर्शनमेव सिद्धान्तीकरोति ।

संधानस्यापि विकल्परूपता'। एवं 'भूतानुसंधानादिरूपमेव परमेश्वरस्य स्रष्टृत्वम्' इति श्लोकेन । ततः 'प्रकृते चिदात्मन्यर्थावभासस्य सत्तोपसंह्रियते' श्लोकेन । ततो द्वयेन 'तस्यैवार्थावभासस्यानुभवस्मरणादौ वैचित्र्यमुच्यते, तदुक्तिश्च प्रकृतायामीश्वररूपस्वात्मप्रत्यभिज्ञायामुपयुज्यते' इति श्लोकेन । इत्याह्निकस्य तात्पर्यार्थः । अथ ग्रन्थार्थो व्याख्यायते । उक्तमिदं

'स्वभावमवभासस्य विमर्शं....... ।'

इति, तत्र विमर्शोऽभिलापात्मना शब्देन योजित एव, तद्योजनाकृतं च विकल्परूपत्वं शुद्धेऽपि परमेश्वरे प्राप्तं, न चैतदिष्टं—तस्य संसारपदे मायात्मन्युपपत्तेः—इत्याशङ्क्याह

अहं प्रत्यवमर्शो यः
प्रकाशात्मापि वाग्वपुः ।
नासौ विकल्पः स ह्युक्तो
द्वयाक्षेपी विनिश्चयः ॥ १ ॥

---

४ देहादिसंकोचशून्यस्य प्रकाशस्य य आत्मा सारस्वभावो निर्विच्छेदोऽन्तरभ्युपगमस्वभावोऽनन्यवदनालोकितस्वातन्त्र्यविश्रान्तिमयः परः

प्रकाशस्य विशुद्धसंविद्रूपस्य देहादिसंस्पर्शैर-नाविलीभूतस्य यः आत्मा जीवितभूतः सारस्व-भावो विच्छेदशून्योऽन्तरभ्युपगमकल्पोऽनन्य-मुखप्रेक्षित्वस्वातन्त्र्यविश्रान्तिरूपः 'अहमिति'[6] प्रत्यवमर्शः असौ विकल्पो न भवति, विकल्पत्वा-शङ्कायां बीजं दर्शयति – वाग्वपुरपीति । विष[7]-यरूपात् श्रोत्रग्राह्यात् शब्दादन्य एव अन्तरव-

---

प्रतिष्ठात्मा अहमिति प्रत्यवमर्शः असौ विकल्पो न भवति कुतः पुनरियं विकल्पत्वाशंका? आह – वाग्वपुरपीति । श्रोत्रग्राह्यरूपातिरिक्तान्तरवभा-समानसंविद्रूपावेशिवाच्याध्याससतत्त्वशब्दनात्मकशब्दशरीरोऽपीत्यर्थः, कस्मादसौ न विकल्पः? आह – स हीति । विविधकल्पनाभिन्नस्यापि गुडदधिमरिचादेरिव योजना एकस्यापि वैविध्येन कल्पना, विविधस्य च शंकितस्य रूपान्तरस्य कल्पना, विच्छेदनं निर्भज्य अन्यतश्च्यवनं प्रमातृबुद्धिकोशे प्रवेशनेन दार्ढ्यापादनपर्यन्तं परिपालनं विकल्प उच्यते, निश्चयश्च । अत्र च सर्वत्रावश्यं तदतद्रूपद्वयेन भवितव्यं अन्यथा किं योज्येत किं च विभज्येत किं शंक्येत – इति सूत्रार्थः । प्रत्यवमर्श इति प्रत्यवमर्श एव हि शब्दात्मा परभूमौ प्रमातुः सूक्ष्मभुवि वागिन्द्रियं करणं स्थूलदशायां प्रमेयरूपः शब्द इति ।

५ चितिशक्तेरिति योज्यं शेषितया ।

६ आत्मनि यः प्रत्यवमर्शो विकल्पस्य न नीलादेरिव वेद्यस्येदमिति नापि शरीरादेरिव कल्पितप्रमातृभावस्याहमिति परप्रमातरि स एवमु-च्यतेऽहमिति ।

७ ननु विशुद्धे प्रकाशे वाचः करणरूपायाः कथं संभवो येनोक्तं वाग्वपुः? इत्यत आह – विषयरूपादित्यादि । श्रोत्रग्राह्याच्छब्दादन्य एवेति वागिन्द्रियजन्यशब्दस्वरूपोऽयं वेत्यर्थः ।

भासमानः संविद्रूपावेशी शब्दनात्माभिलापो वागित्यनेनोक्तः—वक्ति अर्थं[9] स्वाध्यासेन सोऽयं[10]मित्यभिसंबन्धेन, यदि वाग्वपुः[11]—कस्मान्न विकल्पः? आह[12]—नह्यस्य विकल्पलक्षणमस्ति, तथाहि—विविधा[13] कल्पना विविधत्वेन च शङ्कितस्य कल्पोऽन्यव्यवच्छेदनं[14] विकल्पः, विविधत्वं च वह्न्यावनग्निसंभावना[15]समारोपनिरासे सति भवत्, द्वयं वह्न्यवह्निरूपमाक्षिपति, तेन[16] विकल्पेऽवश्यं

---

८ संविद्रूपावेशीति श्रुतिगोचरीकार्या या शब्दक्रिया शब्दोत्थापिका क्रिया ब्रूते जल्पति वक्तीत्येवं तस्याजन्यत्वेन विषयतां यतो न प्राप्ता सा वाक्शक्तिः स्थूलशक्तिभूमिकां यतो न स्वीकृतवती ततस्तज्जननकारणतारूपः सूक्ष्मशब्दात्मा नासौ भवति ।

९ प्रमातृप्रमाणप्रमेयसामग्रीरूपम् ।

१० अयमेव विशेषविकल्पः ।

११ चोद्यम् ।

१२ उत्तरम् ।

१३ भिन्नस्यापि दधिगुडमरिचादेरिव योजना विविधा कल्पना तथ एकस्यापि वैविध्येन कल्पना ।

१४ व्यवच्छेदनं निर्भज्यान्यतः च्यवनं प्रमातृबुद्धिकोशे प्रवेशनेन दार्ढ्यापादनपर्यन्तं परिपालनं विकल्प इति निश्चय इति चोच्यते अत एव विनिश्चयः इति साकूतम् ।

१५ प्रमाणप्रमेयादिरूपा ।

१६ हेतुना ।

तच्च[17] निश्चेतव्यम्—अतश्च[18] व्यपोहितव्यं भवति । तथा च[19]

> भिन्नयोरवभासो[20] हि
>
> स्याद्घटाघटयोर्द्वयोः ।
>
> प्रकाशस्यैव नान्यस्य
>
> भेदिनस्त्ववभासनम्[21] ॥ २ ॥

घटे हि दृष्टे घटस्थान एवाघटोऽपि योग्यदेशाभिमतस्थानाक्रमणशीलो विज्ञानजनकः स्वकारणोपनीतः[22] संभाव्यते पटादिस्वभावः,

---

१७ द्वयरूपत्वम् ।

१८ अन्यथा किं योज्येत किं च विभज्येत किं च शङ्क्येतेत्यर्थः ।

१९ द्वयरूपतामेव विकल्पे समर्थयति ।

२० ननु यथा वह्निरयमित्यत्र अनग्निसंभावनानिरासेन तद्विनिश्चयात् व्यपोहलक्षणद्वयाक्षेपो नञर्थालिङ्गितो भाति तथा प्रकाशेऽपि परसंभावनानिरासेन भवत्येव प्रकाशाप्रकाशद्वयाक्षेप उभयत्र विशेषाभावात् संभावनाया इत्याशङ्काशान्तये सूत्रम् ।

२१ ननु घटे प्रतियोगी संभवति न प्रकाशे इति कुतो नञर्थालिङ्गितो ह्यघट इव घटे प्रकाशेऽपि अप्रकाशो भवेदेव इत्याशंक्य सूत्रं भिन्नयोरिति । मायापदे हि घटाघटौ भिन्नौ प्रकाशेते, ततश्चात्र प्रतियोगिसंभवः, शंक्यते हि घटाक्रान्ते योग्यदेशे तद्देशाक्रमणशीलो विज्ञानजनकः स्वकारणोपनतः पटादिरघटः, देहादिसंकोचकालाविकले, सत्यप्रकाशे तु योऽप्रकाशः शंक्यते तस्य प्रकाशवदवभासनमनुचितं, अवभासने हि अप्रकाशत्वहानिः, हिरिति हेतौ यत एवं ततो युक्तं नासौ विकल्प इति सूत्रार्थः ।

२२ आलोकादि ।

अतो घटाघटयोर्द्वयोरवभासस्य संभावनात्[23] समारोपः सावकाशीभवति, अघटस्य सत्यारोपे निषेधलक्षणोपोहनव्यापारः—इति तदनु[24]-प्राणिता विकल्परूपता घट इत्येतस्य निश्चयस्य, 'लिङ् संभावनायाम्'। यस्त्वयं प्रकाशो नाम तस्य स्थाने यः संभाव्यते स तावदप्रकाशरूपो न भवति—तुल्यकक्ष्यस्य[25] हि संभावनं भवति, न[26] च यत्प्रकाशेन कर्तव्यं तदप्रकाशस्य कदाचित् दृष्टं—संभावनारोपणादिबलादेव च अस्याप्रकाशरूपत्वं विघटेत, अतः प्रकाशतुल्यस्यान्यस्याप्रकाशरूपस्य भेदिनस्तत्तुल्यकक्ष्यस्यापोहनात्मकभेदनव्यापारासहिष्णोरवभासनमेव नास्ति, तदभावे कस्यापोहनम्? अवभाससंभवेऽपि प्रकाशरूपत्वमेव। न च प्रकाशस्य स्वरूपदेशकालभेदो—येन द्वितीयः प्रकाश एकस्मादपोह्येतेति, हीति—यस्मात् एवं, ततो द्वयाभावादपोहासंभवे विकल्परूपत्वाभावात्

---

२३ घटेऽघटसमारोपः।

२४ अपोहनव्यापारानुप्राणिता।

२५ स्वरूपेण क्रियया च।

२६ केयं संभावनायामपि कर्तव्यतादिशङ्क्येत्याह न चेति।

चिन्मात्रे परामर्शात्मनि अहमिति प्रत्यवमर्श एव, न तु विकल्पः ॥ २ ॥

ननु घटे परिनिष्ठितरूपे[२७] दृष्टे तद्दर्शनमुपजीवता विकल्पेन कथमघटस्य निषेधनं क्रियते, न ह्यघटस्य केनचिन्नामापि गृहीतम्, अघटवासनापि[२८] घटे दृष्टे कथंकारं प्रबुध्यताम्,? सत्यम्[२९]— एवं शाक्यः[३०] पर्यनुयोज्यो[३१], न तु वयम्, यतः

तदतत्प्रतिभाभाजा
मात्रैवातद्व्यपोहनात् ।
तन्निश्चयनमुक्तो हि
विकल्पो घट इत्ययम् ॥ ३ ॥

इह प्रमाता नाम प्रमाणादतिरिक्तः प्रमासु स्वतन्त्रः संयोजनवियोजनाद्याधारवशात् कर्ता दर्शितः, तस्य च प्रमातुरन्तः सर्वार्थावभासः,

---

२७ संकुचितरूपे निर्विकल्पदशायाम् ।

२८ सदृशाद्येव हि वासनाकारणम् ।

२९ अर्धानुमतौ ।

३० बौद्धः ।

३१ प्रष्टव्यः ।

चिन्मात्रशरीरोऽपि तत्सामानाधिकरण्यवृत्ति-रपि दर्पणनगरन्यायेनास्ति — इत्यपि उक्तम्। [३२]एवं च तत्प्रतिभां घटाभासम्, अतत्प्रतिभां च अघटाभासं प्रमाता भजते — सेवते तावत्, [३३]तद्विकल्पदशायां चित्स्वभावोऽसौ घटः चिद्वदेव विश्वशरीरः पूर्णः, न च [३४]तेन केचिद्व्यवहाराः, [३५]तत् मायाव्यापारमुल्लासयन्[३६]पूर्णमपि [३७]खण्डयति [३८]भावं, तेनाघटस्यात्मनः पटादेश्चापोहनं क्रियते निषेधनरूपं, तदेव व्यपोहनमाश्रित्य तस्य घटस्य निश्चयनमुच्यते 'घट एव' इति — एवार्थस्य संभाव्यमानापरवस्तुनिषेध-

---

३२ स्थिते सति।

३३ तदविकल्पदशायामित्युपलक्षणं तेन सदाशिवादौ सत्यपीदंताभासेऽहमिति सामानाधिकरण्येन भासमानत्वात् तत्राहंतैव सर्वसहेति न तत्र प्रमेयाभासः संवेदनात् प्रमेयान्तराच्च भिन्नो भासते अङ्गभूतश्चावयवतुल्यो भासते इति चेदंतोन्मेषेऽपि अचिरद्युतिवदप्ररोहान्नापोहनव्यापारसंभवः। निर्विकल्पे तु पशोरपि सार्वात्म्यमिति सूचयति चित्स्वभावोऽसौ घट इति। तेन स्थितमेतत् मायादशायामशुद्धप्रमातरि विकल्पेनापोहनव्यवहृतिरिति द्योतयति तन्मायेति।

३४ तेषां विकल्परूपत्वात्।

३५ हेतोः।

३६ विश्वशरीरमपि।

३७ प्रमाता।

३८ पदार्थम्।

रूपत्वात्, एष एव परितश्छेदात्तक्षणकल्पात् परिच्छेदः, हीति—यत एवं, तस्मात् युक्तं 'द्वयाक्षेपी विकल्प' इति पूर्वश्लोकोक्ते[39] वस्तुद्वये श्लोकद्वयेन हेतू क्रमेणोक्तौ, यस्मादेवं विकल्पः ततोऽहमिति शुद्धो विमर्शः न विकल्पः—इति श्लोकत्रयेण महावाक्यार्थः। शाक्यैरपि प्रमातुरेवायं व्यापार उक्तः 'एकप्रत्यवमर्शाख्य'[40] इत्यत्र 'प्रपत्तेति स्वयमिति' च वदद्भिः[41], स त्वेतैः कथं समर्थ्यः—इत्यास्तामेतत्[42] ॥ ३ ॥

नन्वेवमहमित्यपि प्रत्यवमर्शोऽनहंरूपस्य घटादेः प्रतियोगिनोऽपोहनीयस्यापोहे विकल्परूपता कथं न स्यात्? इत्याशयेनाह

**चित्तत्त्वं मायया हित्वा**
**भिन्न एवावभाति यः ।**

---

३९ प्रत्यवमर्शविकल्परूपे ।

४० 'एकप्रत्यवमर्शाख्ये ज्ञाने एकत्र हि स्थितः ।
प्रपत्ता तदतद्धेतून् भावान् विभजते स्वयम् ॥'

इत्याचार्यधर्मकीर्तिः ।

४१ व्यापार एकप्रमाता वा ।

४२ अप्रकृतत्वात् ।

## ⁴³देहे बुद्धावथ प्राणे
## कल्पिते नभसीव वा ॥ ४ ॥

---

४३ नन्वहमिति प्रत्यवमर्शो न विकल्प इत्युक्तं, ततश्च शरीरे गौरोऽहमिति, धियि सुख्यहमिति, प्राणे क्षुधितोऽहं तृषितोऽहमिति, शून्ये वीतसमस्तबाह्याभ्यन्तररूपोऽहमिति यो विमर्शः तत्रापि विकल्पत्वाभावेऽन्यो नापोह्यते इति तेषां परस्परेण प्रमात्रन्तरैः प्रमेयैश्च बहुशाखासंकरः प्रसज्यत इति स्वपरप्रविभागभङ्ग आपद्यते अत्राह श्लोकद्वयेन उत्तरम् 'चित्तत्त्वमित्यादिना' अहमिति विमर्शश्चित्तत्त्वमेव । 'कल्पिते नभसीति' सर्वो य एवं संवेद्यः अन्तःकरणबहिष्करणगम्यत्वेन प्रसिद्धः बुद्धिदेहप्राणलक्षणोऽर्थः तस्य यो निषेधः ।

'तथाहि वेद्यते यद्यत्तन्मध्येऽहं न कश्चन ।
अपि त्वेतद्विविक्तोस्मि··············· ॥'

इति नयेन तदभावमात्रं नान्तःकरणस्य सुखादिवत् न बहिष्करणस्य नीलाद्यर्थवद्विषयः विषयत्वादेव च कल्पितः विकल्पनमात्रपरमार्थः, तथैव वस्तुभूतः तत्र योगिनोऽहमिति विमर्शः शून्ये च वेद्यीकृते शून्यान्तरमेव योगिनः प्रमातृ, तत्राप्यन्यदिति यावदयं भेदग्रहः तावत्कल्पना न विरमति, न चानिष्टा, शुद्धप्रकाशस्यैव हि वस्तुतः प्रमातृता, देहादौ तु तथाभिमानमात्रं, पर्यन्ते च संकोचमात्रमेव चिद्रूपं शून्यं शून्यत्वं च न तुच्छं रूपं–सर्वात्मना आभासमानत्वात् आभासस्यैव च वस्तुत्वात्

'सर्वालम्बनधर्मैश्च सर्वतत्त्वैरशेषतः ।
सर्वक्लेशाशयैः शून्यं न शून्यं परमार्थतः ॥'
'यत्स्फुरणानुप्राणो लोकः स्फुरणं च सर्वसामान्यम् ।'

इत्यादिन्यायात् ईदृशस्य शून्यस्य व्यापित्वं च, शून्यस्य व्यापित्वं नास्ति अद्रव्यत्वात् इति चेत् न, महाविषयतात्वाच्छून्यस्य, सापि कथं? उच्यते–सर्वोऽर्थो यतो वेद्यरूपः तत्र निषेध्यः ततो निषेधस्य महान् विषयः न तादृगस्ति यत्तेन महानिषेधेन न स्पृष्टं । यथोक्तं

'यद्यत्संवेद्यते किंचिन्न तत्तद्रूपमिष्यते'

इति। वीप्सया हि सर्वमत्र निषेध्यम् इति दर्शितमहाविषयता एव च

प्रमातृत्वेनाहमिति
विमर्शोऽन्यव्यपोहनात् ।
विकल्प एव स पर-
प्रतियोग्यवभासजः ॥ ५ ॥

अहमित्यवमर्शो द्विधा — शुद्धो मायीयश्च, तत्र शुद्धो यः संविन्मात्रे विश्वाभिन्ने[44] विश्व-च्छायाच्छुरितस्वच्छात्मनि[45] वा । अशुद्धस्तु

---

प्रातीतिकं व्यापकत्वं नेति नेति सर्वनिषेधस्वभावत्वादेव बृहत्त्वेना-भावमेव ब्रह्म मन्यन्ते केचन

'शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥'

इति ह्यत्र सकलचिन्त्यविविक्तत्वेन तावदात्मतत्त्वम् इत्युपपादितम्, अ-धरभूमिकापरित्यागं तावदाद्रियन्तामित्याशयेन न तु तदेव परं तत्त्वम् इदमेव दर्शयितुं श्रीस्पन्दशास्त्रे

'नाभावो भाव्यतामेति········· ।'

इत्यादिना ।

'अभावं भावयेत्तावद्यावत्तन्मयतां व्रजेत् ।'

इत्यभावब्रह्मवादिमतं दूषितं ।

'यत्किल स्मर्यते तत्कालालिङ्गितं वेद्यं च
शून्यं च एवंभूतोऽहमकिं चिद्रूप आसम्'

इति देहादिप्रमातृतावतरणे स्मर्यमाणत्वेन, तथेति वेद्यमेव तद्वेदकीकृतं देहादिवदेव, अहंप्रकाशस्तु सततानस्तमितः, स्वतो निर्विच्छेदत्वान्न स्मरणार्ह इत्युपपादितमादिसिद्धसूत्रे प्रमातृशून्यता न कदाचिदुचिता इत्युपपादयता शास्त्रकारेण ।

४४ परमशिवदशायामिव ।
४५ सदाशिवादिदशायाम् ।

वेद्यरूपे शरीरादौ। तत्र शुद्धेऽहं-प्रत्यवमर्शे प्रतियोगी न कश्चिदपोहितव्यः संभवति – घटादेरपि प्रकाशसारत्वेनाप्रतियोगित्वेनानपोह्यत्वात्, इत्यपोह्यत्वाभावे कथं तत्र विकल्परूपता। अशुद्धस्तु वेद्यरूपे शरीरादौ अन्यस्माद् देहादेर्घटादेश्च व्यवच्छेदेन भवन् विकल्प एव– इति वाक्यार्थः। अक्षरार्थस्तु–चित्तत्त्वं प्रकाशमात्ररूपं हित्वा सदपि[46] अपहस्तनया अप्रधानीकृत्य भिन्ने देहादावहमेव देहादिः नीलादौ[47] प्रमेये प्रमाता–इत्यभिमानेन 'योऽहं स्थूल' इत्यादिविमर्शः स विकल्प एव, न तु[48] शुद्धं प्रत्यवमर्शमात्रम्।

---

४६ सदपीति यतो 'यद्यप्यर्थस्थितिः प्राणपुर्यष्टक······।' इत्यादिमाहमिति विमर्शश्चित्तत्त्वमेवावलम्बते इति तथापि तदुलङ्घ्य।

४७ न चैतद्विमर्शनं संकेतमात्रप्रभावेन, अपि तु नीलादिविषयप्रमातृताभिषेकयोगेनेत्याह नीलादौ प्रमेये प्रमातेति। तेन योऽहमिति विमर्शोऽवतीर्णः स निर्विकल्पभुवि या शुद्धा विमर्शरूपता तां तिरस्कारेण विधूय विकल्पावस्थायां विकल्पतामेव स्वीकुरुते।

४८ न तु शुद्धं प्रत्यवमर्शमात्रमिति, न च मन्तव्यं यदि शुद्धो नास्ति तर्हि समयमात्रमेवैतदिति किमनेन योऽहं स्थूल इत्यादिविमर्श इति कथितेन सत्यं न सामंयिकमात्रमहमिति अपि तु शरीरे ज्ञेये कार्ये च ज्ञातृकर्तृतामयस्वातन्त्र्यात्मकं परामर्शयोजनमेतदपरथा गच्छामि चलामि तिष्ठामीति स्वातन्त्र्यामर्शनमविच्छेदप्राणं कथं देहे संक्रामेत् न ह्यन्यस्य स्वातन्त्र्यमन्यस्य क्रियायै भवेत् विच्छेदविमर्शे हि स्यादेतत् भयं चकास्तीति अविच्छेदेन तु गच्छामीत्यादिपरामर्शः।

अत्र हेतुः—परो द्वितीयो देहादिर्घटादिश्च यः प्रतियोगी तुल्यकक्ष्योऽन्योन्यपरिहाराच्च विरुद्धस्तस्य योऽवभासः—समारोपणलक्षणः, तस्माद्यतोऽसौ [49]तन्निषेधानुप्राणितोऽहमित्यवमर्शो जातः 'अहं स्थूलो, न कृशो, न घटादिः' इति, शुद्धप्रकाशरूपस्य अपहस्तनमेव देहादेर्भेदे हेतुः, [50]तदपहस्तने तु परमेश्वरस्य स्वात्मप्रच्छादनेच्छारूपाभेदाप्रकाशनं भ्रान्तिरूपं प्रति स्वातन्त्र्यरूपा मायाशक्तिर्हेतुः, [51]चिद्रूपस्य चापहस्तनं देहादेरेव अत्यक्तवेद्यभावस्य भिन्नस्यैव उपपत्तिशून्यतयैव [52]प्रमातृताभिमानः । तथा च देहा-

---

४९ तदिति—घटादि द्वितीयदेहादि ।

५० ननु चापहस्तनस्यैव को हेतुः येन तद्भेदहेतुरपि समर्थितः स्यादित्यत आह तदपहस्तनेति ।

५१ किमिदमपहस्तनं नाम येनैतत्सिध्यतीत्याह चिद्रूपस्येति ।

५२ अनात्मनि वेद्ये यदात्माभिनिवेशस्य प्रमातृत्वगाढाभिमानस्य स्वरसवाहिनो विवेकमात्रेण अपसारयितुमशक्यस्य अवतरणमवरोहणम् ऊर्ध्वरूपशुद्धसंवेदनभूमित्यागेन अधरभुवि वेद्यरूपायां निपतनं, तत्रायमेव शून्यप्राणधीदेहाभिधानभूमिकापरिग्रहः पूर्वपूर्वयोगेन दृतीदृश एव क्रमः । तथाहि—वेद्यरूपेऽपि नभसि सर्वावकाशसहिष्णुत्वं व्यापारत्वं च इति नात्यन्तमिव जडता, ततो वैभवरहिते वायौ स्पन्दशक्तिसंयोगावियोगिनि नीरूपे, ततो रूपवति प्रकाशमये तेजसि, ततः प्रकाशशून्ये परप्रवेशाक्षमेऽम्भसि, ततोऽपि परप्रवेशासहिष्णावतिघने स्थूले पार्थिवेऽत्यन्तजडे प्रमातृताभिमानः क्रमेण निकर्षदशामधिशेते । तत्र केवलशून्य-

स्यायोगिभिरव्यवहार्यत्वाल्लोकापेक्षया स्पर्शमयस्य प्राणस्यैव परिगृहीतशून्यानुवेधस्य तेजःसंबन्धाधिक्योपनतचराचरदृग्धृत्वस्य प्राथम्यमुच्यते। तेन संविदः परिणामो हस्तिन इव तटे गाढेन अभिनिवेशेन आत्मनि वेद्यरूपे संक्रमणम्, स देहाद्यपेक्षया प्राण इत्युच्यते, अन्तःकरणस्य संकल्पनाभिमनननिश्चयनवृत्तिमयस्य तत्त्वं, यदनुग्रहादेवंविधवृत्तिलाभः तच्चित्तत्त्वं, तस्य वायुः प्राण आश्रयत्वमधिष्ठेयत्वं गतः, तथाभूतेन संवित्तत्त्वाधिष्ठितेन प्राणेन बुद्धिरूपपुर्यष्टकसाहित्यभाजा यतोऽधिष्ठितं शरीरं ततश्चेतनोचितत्वात्तद्व्ययोगोऽस्य न तु साक्षात्संवेदनेन अधिष्ठितं तत्। तथाचोक्तं

'प्रकाशरूपो भगवान्प्राणाधिष्ठान उच्यते।
प्राण एवाधरो धर्मो हंसश्चेति त्रिवाहनः॥'

अत एव

'शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्॥'

इति श्रीभगवता गीतासु। संविद्रूपस्य ईश्वरस्य प्राणपुर्यष्टकाधिष्ठानद्वारेण देहाधिष्ठानत्वमुक्तम् श्रीस्पन्दशास्त्रेऽपि गुरुणा

'यतः करणवर्गोऽयं विमूढोऽमूढवत्स्वयम्।
...............प्रवृत्तिस्थितिसंहृतीः॥
लभते.............................।'

इत्यत्र।

'सहान्तरेण चक्रेणेति ...............।'

तत एव देहस्य भस्मीभावेऽपि स्वप्न इव शयनैकनिमग्नतात्मकव्यामोहदशायोगेऽपि चेतनाधिष्ठितप्राणक्रोडीकृतस्य पुर्यष्टकस्य तादवस्थ्यात्परलोके देहान्तराधिष्ठानद्वारेण भोगो न दुःसमर्थः, दृश्यन्ते च भूयसा योगिन्यः स्वशरीरे स्वगृहावस्थिते एव स्वतन्त्रीकृतप्राणगमागमयोगेन देहान्तरगतेऽपि वस्तुनि ज्ञानक्रियायोगिन्यः, स्वतन्त्रीकरणे च युक्तय उपदिष्टा एव। यत्किल शिवसूत्रम्

'अक्षपदे कमलशरीरस्तदुत्थप्राणिरूपेण सर्वत्र विचारी।'

इत्यादि, तदूक्रमनेन। सर्वथा तावद्देहप्राणयोः पृथग्भाव एव। यदाह मुनिः

भिमानभूमिकायां[५३] स्थिताश्चार्वाकाः 'चैतन्यविशिष्टः कायः पुरुषः' इति कायमेव प्राधान्येनाहुः — स्त्रीबालमूर्खाणां तथाभिमानात् । ततोऽपि विवेकवन्तः पाकजोत्पत्तिपरिणामादिबलादस्थिरं शरीरं मन्वानाः प्राणशक्तिसमधिष्ठानेन च विना विकारशतावेशं शरीरस्य पश्यन्तो बुभुक्षापिपासायोगयोग्यं प्राणमेवात्मानं केचन श्रुत्यन्तविदो मन्यन्ते । ततोऽपि समधिकविवेकभाजः प्राणस्यापि अनित्यत्वादनुसंधानयोग्यतामपश्यन्तो ज्ञानसुखाद्याश्रयभूतां बुद्धिमेव

---

'सहवर्धितयोर्नास्ति संबन्धः प्राणकाययोः ।'

इति । संबन्धः सम्यग्बन्धः अत्यन्ताबियोग इति यावत् । तथा च कक्ष्यास्तोत्रम्

'भग्नो भ्रमोऽयं भवता विचित्रां
　स्वप्ने विदेहादिगतिं प्रदर्श्य ।
देहे गते भस्ममये परत्र
　कीदृक्................... ॥'

इति ।

५३ तथा चाभिमानिकं तेषां प्रमातृत्वं न तु वस्तुत इति फलितम् । यथाहि तानि तानि द्रव्याणि पृथक्स्थितानि न मदशक्तिमुत्पादयितुमलं मिलितानि पुनः सुरारूपेण परिणतानि तामुत्पादयन्ति, तथा पृथक्स्थितानि भूतानि चैतन्यरहितानि च मिलितानि चैतन्यवन्तीव भान्तीति चार्वाकाः । तदेतदेतेषां मतं संकलय्याचार्याः परमार्थविवेकं तत्रापि दर्शयन्ति — देहाभिमानेति ।

काणादप्रभृतय आत्मानमाहुः । अपरे तु तस्या अपि[५४] योगिदशायां वेद्यभावादपरत्वं म-न्यमानाः असंवेद्यपर्वरूपं यन्न[५५] किंचिद्रूपं सकलवेद्यराशिविनिर्मुक्तं शून्यत्वान्नभस्तुल्यं न तु महाभूताकाशस्वभावं प्रमातृतत्त्वं शून्यब्रह्मवादिनः सांख्यप्रभृतय आहुः । तस्मिन्नपि[५६] वेद्ये शून्यान्तरं तत्रापि शून्यान्तरम्—इति यावद्भेदः तावत्कल्पना न त्रुट्यति, तदर्थमाह 'कल्पिते' इति । न चानवस्था परमार्थप्रकाशबलेन यतः सर्वस्य प्रकाशो न तु देहादिवशात्, तथात्वाभिमानमात्रं—देहादिः प्रमातेति, संकोच[५७]मात्र-

---

५४ अपिशब्देन सर्वेषां पूर्वेषामन्तर्बहिष्करणगम्यत्वं द्योतितम् ।

५५ वेद्यत्वेन प्रसिद्धो बुद्धिप्राणलक्षणो योऽर्थस्तस्य यो निषेधः

'तथा हि वेद्यते यद्यन्तर्मध्येऽहं न कश्चन ।
अपि त्वेतद्विविक्तोऽस्मि.............. ॥'

इति नयेन तदभावमात्रं नान्तःकरणस्य सुखादिवस्तुवन्न बहिष्करणस्य नीलाद्यर्थवद्विषयोऽविषयत्वादेव कल्पितो विकल्पनमात्रपरमार्थ इत्यर्थः ।

५६ तस्यापि वेद्यत्वादिति ।

५७ ननु च

'शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥'

इति ।

'अभावं भावयेत्तावद्यावत्तन्मयतां व्रजेत् ।'

रूपं चित्तत्त्वं शून्यं भूतलं, यथा घटाभावः, सं-
कोचः—अपरवेद्यांशच्छायाच्छुरितं तु चित्तत्त्व-
मेव बुद्धिप्राणदेहादि इति । अमी एव भूमि-
काविशेषा उत्तरोत्तरमारोहतां योगिनां जाग्र-

---

इति च । तथा

'यद्यत्संवेद्यते किंचिन्न च तद्रूपमिष्यते ।'

इति सर्वनिषेधान्महाविषयतया च कथमत्र विकल्पत्वम्? इत्यत आह—संकोचमात्ररूपमिति । अयं भावः—यत् किल स्मर्यते तत्कालालिङ्गितं वेद्यं च शून्यं च एवंभूतोऽहमकिंचिद्रूप आसमिति देहादिप्रमातृतावरणे स्मर्यमाणत्वेन तथेति वेद्यमेव तद्वेदकीकृतं देहादिवदेव, अहंप्रकाशस्तु सततानस्तमितः स्वतो निर्विच्छेदत्वात् न स्मरणार्ह इति । अत एव स्पन्दे 'नाभावो भाव्यतामेति' इत्युक्तं । न च गीतासु विरुद्धं तत्र सकलचिन्त्यविविक्ततैव तावदात्मतत्त्वमित्युपपादितं अधरभूमिकापरित्यागं तावदाद्रियन्तामित्याशयेन न तु तदेव परं तत्त्वमिति ।

५८ तथा चागमशास्त्रे तन्त्रसारे आचार्याभिनवगुप्तकृते जाग्रदाद्यवस्था निरूप्यन्ते । तत्र वेद्यस्य तद्विषयायाश्च संविदो यत्संवेदनं वैचित्र्यमयमन्योन्यापेक्षं सत् सावस्था न वेद्यस्य केवलस्य नापि केवलायाः संविदः न चापि पृथक् पृथक् द्वे, तत्र यदधिष्ठेयतया भानं बहीरूपतया तदा जाग्रदवस्था मेये मातरि माने च, तदधिष्ठानतया भानं संकल्पः तदा स्वप्नावस्था, अधिष्ठातृरूपतया बीजात्मतया सुषुप्तावस्था । यदा तु तस्मिन्नेव प्रमातृविश्रान्तिगते प्रमातुः पूर्णतौन्मुख्यात् तद्द्वारेण पूर्णतोन्मुखतया भानं तदा तुर्यावस्था, एतदेवावस्थाचतुष्टयं पिण्डपदरूपस्थरूपातीतशब्दैर्योगिनो व्यवहरन्ति

'भूततत्त्वाभिधानानां योंऽशोऽधिष्ठेय उच्यते ।
पिण्डस्थ इति तं प्राहुः पदस्थमपरं विदुः ॥
मन्त्रास्तत्पतयः सेशा रूपस्थमिति कीर्त्यते ।
रूपातीता पराशक्तिः सव्यापाराप्यनामया ॥

दादितया पिण्डस्थादितया चागमेषु भण्यन्ते, अपहस्तनं च व्याख्यास्यते

'कलोद्दलितमेतच्च चित्तत्त्वं कर्तृतामयम् ।
अचिद्रूपस्य शून्यादेर्मितं गुणतया स्थितम् ॥'

इति, तत्स्थितम्—अशुद्धः 'अहम्' इत्यवमर्शो विकल्प एव ॥ ५ ॥

द्विविधोऽपि[५९] चायम् 'अहं-प्रत्ययो' द्विधा—

---

निष्प्रपञ्चो निराभासः शुद्धः स्वात्मन्यवस्थितः ।
सर्वातीतः शिवो ज्ञेयो यं विदित्वा विमुच्यते ॥'

इति ।

'पिण्डे मुक्ताः पदे मुक्ता रूपे मुक्ताः षडानन ।
रूपातीते तु ये मुक्तास्ते मुक्ता नात्र संशयः ॥'

इति तत्त्वसंग्रहे ।

'पिण्डं कुण्डलिनी शक्तिः पदं हंसः प्रकीर्तितः ।
रूपं चिद्बिन्दुरित्युक्तो रूपातीतः परः शिवः ॥'

इतीमा एव तिस्रः प्रमेयप्रमाणप्रमात्रवस्थाः प्रत्येकं जाग्रदादिभेदाच्चतुर्विधा उक्ताः, सा च रूपं दशा अहमित्येवंविधमंशत्रयमुत्तीर्य पश्यामीत्यनुपायिका प्रमातृता स्वातन्त्र्यसारा नैकट्यमध्यत्वदूरत्वैः प्रमातृप्रमाणप्रमेयताभिषेकं ददती तदवस्थात्रयानुग्राहकत्वात् त्रिभेदा । यच्च सर्वान्तर्भूतं पूर्णरूपं तत्तुर्यातीतं, किं च यस्य यद्यदा रूपं स्फुटं स्थिरमनुबन्धि तत् जाग्रत्, तस्यैव तद्विपर्ययः स्वप्नः यो प्रलयाकलस्य भोगः, सर्वावेदनं सुषुप्तं यो विज्ञानाकलस्य भोगः, भोग्याभिन्नीकरणं तुर्यं मन्त्रादीनां स भोगः, भावानां शिवाभेदस्तुर्यातीतम् ।

५९ शुद्धाशुद्धभेदात्, अहं प्रत्ययः—उभयोऽपि ।

अनुभवमात्ररूपश्चानुसंधानात्मा च, शिवात्मनि[६०] 'अहमिति' सदाशिवात्मनि[६१] 'अहमिदमिति' शुद्धो द्विधा । अशुद्धोऽपि 'अहं स्थूल'[६२] इति, योऽहं स्थूलोऽभवं, सोऽहं कृशो, बालो, युवा, स्थविरः, स एव 'अहम्' इति च अशुद्धो द्विविधः । तत्र शुद्धे विकल्परूपत्वम्[६३] अप्रतिष्ठमेव इत्युक्तम्[६४], अशुद्धे तु अनुभवरूपे विकल्पत्वमुपपादितम्[६५], अशुद्धेऽपि[६६] तु अनुसंधानात्मकतया अभेदस्य प्रस्फुरणात् कश्चिदविकल्पकत्वं शङ्केत तस्य व्यामोहं व्यपोहयितुमाह

---

६० अनुभवस्वभावः ।

६१ अनुसंधिरूपम् ।

६२ अनुभवस्वभावः ।

६३ प्रतियोग्यवच्छेदविश्रमशून्यत्वात् ।

६४ अहंप्रत्यवमर्श इत्यत्र ।

६५ प्रतियोग्यवच्छेदविश्रान्तशरीरत्वात् ।

६६ अशुद्धे चानुसंधानात्मा योऽहमित्यादिप्रत्ययः तत्र देहावस्थानां भेदात् नेदं तद्विषयपरामर्शनम् अपि तु संविन्मात्रमस्य विषयः, तद्धि नित्यमेकमिति । यदि वा स्थिरमेव शरीरमनेन साक्षात् क्रियते उभयथा चाविकल्पकत्वमिति भावः । अन्ये तु देहावस्थाविषयो योऽहमिति प्रत्ययस्तथापि देहावस्थाभेदैकीकरणस्फुरणादभेदसारतां स्पृशन् विमर्शपात्रतामालभेतेति ब्रुवन्ति ।

कादाचित्कावभासे या
पूर्वाभासादियोजना।
संस्कारात्कल्पना प्रोक्ता
सा[६७]पि भिन्नावभासिनि ॥ ६ ॥

देह इत्यादि व[६८]र्तते, कादाचित्कः कदाचिद्भवोऽनियतदेशकाला[६९]कारोऽवभासो यस्य देहादेः स्वलक्षणरूपस्य, तत्र या पूर्वाभासेन बालादिशरीरावभासेन योजना 'योऽहं बालः' स एवाद्य 'युवा' इत्यनुसंधानम्, आदिग्रहणादुत्तरेण भाविना आभासेन सह योजना 'स्थविरो भवितास्मि' इति सा योजना सर्वा कल्पनाविक[७०]ल्प एव, न तु शुद्धः प्रत्यवमर्शः। अत्र

---

६७ न केवलं देहाद्यनुभवमयोऽहमिति विमर्शो विकल्पो यावदनुसंधिमयोऽपीति अपि—शब्दस्यार्थः।

६८ पूर्वसूत्रात्।

६९ एतच्चात्र कादाचित्कस्योपलक्षणपरत्वे युज्यते तेन कौत्रचित्कः काथंचित्कश्चेति चोक्तं देशकालाकारेति।

७० योज्यमानयोर्हि आभासयोः प्रतियोग्यपोहनोट्टङ्कितभेदयोरेव योजना। योज्यमानोऽपि चासौ देहादिः पूर्वावस्थैकीकृतोऽपि अतद्रूपापोह एव निर्भाति, योजना च प्रमातुरेव अर्थानपेक्षो व्यापार इति सा कथं न विकल्पः स्यात्।

देहादेर्विशेषणं[७१] हेतुत्वाशयेन – यतो भिन्नाव-भासित्वमेव देहादेस्तदानीमपि[७२] अविच्छिन्नं, यदि हि तस्य देहादेः सर्वतः पूर्णत्वम् – अ-[७३]वच्छेदहीनत्वं पश्यन् अनुसंधानम् – 'अहमिदम्' इति विदध्यात् तदियं सदाशिवभूः केन विकल्पास्पदत्वेन भण्यते – यावता विच्छिन्ने एव सोऽनुसंधिः[७४], भिन्ने हि कथमनुसंधानम्? इति चेदाह 'संस्कारात्' – प्राक्तनानुभवकृतवासनाप्रबोधजस्मृतिवशात् इति यावत्, प्राणे बलाबल[७५]वशादनुसंधिः, बुद्धौ ज्ञानसुखादितारतम्यात्, शून्ये वेतत्यावेतत्ययोगात्[७६], अयमपि विकल्प एव, एवं 'स[७७] एवायं घट' इति घटाद्यनुसंधानेऽपि विकल्पत्वं मन्तव्यं, किन्तु

---

७१ भिन्नावभासिनीति ।

७२ योजनावसरे अनुसंधावपि ।

७३ चिद्विश्रान्तत्वम् ।

७४ योऽहं बाल इत्यादि ।

७५ क्षुधिततृषिताभासेन च ।

७६ मूर्छासमाधानाद्याभासान्तरैश्च सह योजना तावदस्ति ।

७७ एवं चेत्यत्रायं भावः – सूत्रे विशेष्यविशेषानुपादानादेतद्विशेषणं देहादि लभ्यत एवानियतं, तथा च न कोऽपि चानुवर्तनादिप्रयासः, न केवलं तदेव यावत्सामान्योक्तौ घटादावप्येवं बोध्यमित्याह स एवायं घट इति ।

एतासु अनुसंधानभूमिषु विद्याशक्तिराधिक्येन अचिरद्युतिवदुद्दीप्यते इति तासां परपद[78]परिशीलनप्रथमकल्पाभ्युपायत्वमभ्युपागमन्[79] गुरवः ॥ ६ ॥

न च देहादीनां पूर्वपूर्वप्रमातृवेद्यता—येन[80] प्रमातुरप्रकाशे प्रमेयं न भाति तत्प्रकाशश्च[81] न पूर्वप्रकाशं विना, सोऽपि न प्रमात्रन्तरप्रकाशं[82] विना—इत्यनवस्था स्यात्, अपि तु विशुद्धप्रकाश एव विश्वस्य[83] प्रकाश इति निरूपयन्[84] उक्तयुक्त्या सदैव[85] स्रष्ट्रयादिशक्तिवियोगोऽपि भगवत उक्तो भवति, इति दर्शयति

---

७८ सौधसमारोपणे सोपानत्वमिव।

७९ कस्यचिद्भेदस्य तिरस्कारात्।

८० वक्ष्यमाणानवस्थया।

८१ प्रमात्रप्रकाशतर्कमेवाह तत्प्रकाश इति—देहादि प्रमातृप्रकाश इत्यर्थः।

८२ प्रमात्रन्तरम्—पूर्वतरम्।

८३ देहादिप्रमातुः।

८४ देहादिप्रमाता भवन्स्वतन्त्रः।

८५ व्यवहारकालेऽपि।

तदेवं[८६] व्यवहारेऽपि
प्रभुर्देहादिम्[८७]आविशन् ।
भान्तमेवान्तरर्थौघ-
मिच्छया भासयेद्बहिः ॥ ७ ॥

यत् पूर्वं दर्शितं 'देहे बुद्धौ' इत्यादि तत् एवम् उपपद्यते[९०], कथम्? यदि व्यवहारे[९१] मा-

---

८६ ननु देहादीनां विकल्परूपत्वे घटादिवत् प्रमातृवेद्यत्वमेवायातं तथा च यथा प्रमेयं न स्वतः प्रकाशं तथा देहादिप्रमात्रपि तस्मात् तत्राहमिति विमर्शः संकेतरूप एव, तथा च न प्रमेयप्रकाशः कथंचनापि घटते येनोक्तं—नीलादौ प्रमेये प्रमातेति, तेन यदुक्तं ज्ञेयकार्ययोः ज्ञातृतामयकर्तृतामयस्वातन्त्र्यात्मकं प्रत्यवमर्शमात्रमहमिति गच्छामि चलामि तिष्ठामीत्यवच्छेदप्राणनादिति तदपि पूर्वपूर्वप्रमातृवेद्यतायां न घटते इत्याशयान्तर्गर्भीकारेण देहादीनां प्रमातृत्वस्वरूपं समर्थयन् तदनुषङ्गेण चैतदेव तस्यानस्तमितत्वं—यत्सर्वथा संकोचेऽपि स्वातन्त्र्यं तत्स्वरूपत्वेनैवाभाति इति सूचयति तदेवमित्यादिना । घटते इति शेषः । अपिना आदिसर्गपरिग्रह इति वृत्तिमतम् ।

८७ आविशन्—स्वीकुर्वन् ।

८८ यदि तदा तद्घटते इति संबन्धः ।

८९ प्रमातृत्वेनाहमिति विमर्श इत्यन्तम् ।

९० युक्त्या संभवति ।

९१ तदेवमत्र परमेश्वरसृष्टावियान् परमार्थः—परमेश्वरः प्राणशरीरादिकर्तृतयाभिनिविशमानो बहिर्भावेन अर्थानां पराधीनप्रकाशतया जडतामिव आपादयन् सर्गादि करोति, यदा पुनर्देहप्राणादिना आविशति तदा विश्वात्मना सर्वदैव स्वाधीनप्रकाशः स्वाङ्गभूतोऽर्थराशिः प्रकाशते न तु तत्र देशकालक्रमः कश्चित् इत्येवं व्यवहारे 'मायापदे' इत्युक्तम् ।

यापदे देहप्राणादिमपि प्रभुरेव प्रकाशपरमार्थ इच्छया—मायाशक्तिरूपया, आविशन्[९२]—देह-प्राणादिप्राधान्येन[९३] स्वरूपं प्रदर्शयन्, अन्तः—संविन्मात्रे, भान्तम्—अहमित्येवंरूपम् अर्थौघम् इच्छयैव[९४] बहिः इदमिति[९५] भासयति तत एतदुपपद्यते, अन्यथा[९६] तु अनवस्था स्यात्, हेतौ लिङ्। अपि-शब्द एव-शब्दश्च भिन्नक्रमौ[९७], यत् एतावत्[९८] उक्तं, तदिति—तस्मात् हेतोः, एवं जातं वक्ष्यमाणरूपम्, किं

---

९२ प्रमातृतया स्वीकुर्वन्नित्यर्थः।

९३ परमार्थतो हि सर्वमिदं स्वरूपमेवावेशनस्वरूपत्वं तथाभास-मात्रमेवेति बोध्यम्। तत्रेच्छयेति आवृत्तिपक्षेण योजनीयम्। एकत्रेच्छा मायाख्या स्वातन्त्र्यशक्तिः अपरत्र कर्तृशक्तिः।

९४ अत्रायमर्थः—सर्वथा संविन्मात्रमेवेदमन्तर्बहिष्कलनारहितं तदेव स्वेच्छया गृहीतदेहप्राणाद्यहंभावः सर्वथा चिन्मात्रमयमेवेदं सर्वमन्तर्भूमौ भासमानं देहाद्यहन्ताश्रयेण नेदमित्याभासवन्तं करोति इति प्राधान्ये-नेति पदेन ध्वनितं, तेन नात्र काचनापि उक्तानवस्था, अत्र वेदान्तप्र-क्रियाया महान् विशेष आयातः।

९५ अन्तःकरणबहिष्करणवेद्यताभूमौ स्फुटमस्फुटं च क्रमेण इद-माभासयति।

९६ अन्यथेति आवेशाभावे प्रमातृवेद्यतायाम्।

९७ भिन्नक्रमतया पदसंबन्धोऽर्थश्लेषेण घटते इति मत्वा अपरथा भासयेदित्यत्र संभावनार्थेनापि व्याचष्टे।

९८ अपोहस्वरूपम्।

तत्? यत् किल प्रभुः परस्परं [९९]व्यवहारकाले क्रयविक्रयप्रेक्षाव्याख्यादौ चैत्रमैत्रादिसंबन्धिनो देहप्राणादीन् [१००]एकतया तावति आभासे आविशन् अन्तर्भान्तमेव [१०१]अनुज्झितान्तःप्रकाशमेव सन्तं बहिः [१०२]एकाभासतया भासयति? इति संभाव्यते—इत्येतज्जातम्, [इति संभावनायां लिङ्], [१०३]तेन तेन प्रमात्रा सह ऐक्यं

---

९९ व्यवहारो द्विधा लौकिकालौकिकभेदात्, तत्र लौकिकः क्रयविक्रयादिरूपः, अलौकिकः शास्त्रीयः, तदाह प्रेक्षाव्याख्यादाविति। स्वयमूहनं प्रेक्षा, परत्र प्रतिपादनं व्याख्या।

१०० एकतयेति देहप्राणादीन् तत्रैवैकतया विशन्नित्यन्तर्भावितण्यर्थतया वेशयन्नित्यर्थः।

१०१ अत्यन्तप्रकाशमेव।

१०२ एकाभासतयेति अन्यापोहरूपतया। यथोक्तं प्राक् यत् किल तदा भास्यते तत् संविदो विच्छिद्यते संविच्च संविदन्तरात् संवेद्यं च संवेद्यान्तरात् न च विच्छेदनं वस्तुतः संभवतीति, विच्छेदनस्यावभासनमात्रमुच्यते इत्युक्तं भासयतीति, संभाव्यते इति अतश्च व्यवहारः परेशापोहनशक्तिमयः प्रमात्रवस्थाताद्रूप्यसूचकः इति सिद्धम्।

१०३ तदेवं

> 'चिन्तामणौ स्वरूपेण न किंचिदुपलभ्यते।
> अथ चाभिमतं सूते ब्रह्मैवं विश्वशक्तिकम्॥'

इति मनसि निधाय सूत्रस्यास्य चिन्तामणिरूपतां प्रकटयन् प्रसङ्गादन्यथापि सूत्रं व्याकरोति तेन तेन। तत्र चाभासयेदित्येव मूलं तत्राभासनं सृष्टिसंहारस्थितिलयानुग्रहलक्षणं कृत्यपञ्चकं, व्यवहार इति प्रमितिप्रमातृदशाविच्छेदः तेन सततमेवेत्यर्थः इत्यनेन तस्य संकुचितदशायामपि

सृज्यते, अन्येन प्रमात्रा ऐक्यं संह्रियते, घटादिमात्ररूपे स्थितिः क्रियते, पूर्णस्वरूपनिमीलनात् तिरोभाव आधीयते, तावति आभासे ऐक्यावभासनपूर्णत्ववितरणात् अनुग्रहः क्रियते, तेन[104] न केवलं महासृष्टिषु महास्थितिषु महाप्रलयेषु प्रकोपतिरोधानेषु दीक्षाज्ञानाद्यनुग्रहेषु भगवतः कृत्यपञ्चकयोगः यावत् सततमेव व्यवहारेऽपि । यदुक्तम्

'सदा सृष्टिविनोदाय सदा स्थितिसुखासिने ।
सदा त्रिभुवनाहारतृप्ताय स्वामिने नमः ॥'

इति ।

'प्रतिक्षणमविश्रान्तस्त्रैलोक्यं कल्पनाशतैः ।
कल्पयन्नपि कोऽप्येको निर्विकल्पो जयत्यजः ॥'

इत्यादि च । तथा

---

परमेश्वरस्वातन्त्र्याभिज्ञानं कृत्यपञ्चकं न हीयते—शक्तिदारिद्र्येपि संपूर्णशक्तित्वमस्य सूक्ष्मदृष्ट्या विवेच्यमित्यर्थः । अत्रापि संघट्टार्थः तेन तेन प्रमात्रा सह स एव प्रभुरैक्यं सृज्यतेऽन्येन संह्रियते इति कोऽर्थः ततश्च

'नाशक्तो विद्यते कश्चित् शक्तं वस्त्वेव तेऽपि नो ।'

इति महानयदृष्ट्या शक्तिमत एकत्वसमर्थनात् तत्प्रमातृसमनुरोधेन सृष्टिसंहारकलने परस्याकिंचिद्रूपत्वेनाकिंचित्करत्वात् स एव तत्तच्छक्तिमच्छक्तिस्वरूपशक्तिमत्प्रमातृत्वेन सृष्टिस्थितिसंहारतिरोधानानुग्रहात्मकं कृत्यपञ्चकं प्रतिक्षणं करोतीति सूक्ष्मवियेकविवेच्योऽत्रार्थः ।

१०४ व्यवहारेपीत्यपिशब्दार्थमाह तेनेति ।

'.........प्राकाम्यमात्मनि यदा प्रकटीकरोषि ।
व्यक्तीः................................... ॥'

इति[१०५] च ॥ ७ ॥

इह अन्तरर्थावभासः स्थित एव[१०६], तत् किं तत्र कारणान्तरचिन्तया[१०७] इति प्रकृतं प्रमेयं[१०८], तत्सिद्धये उपपत्तिः[१०९] उक्ता, तेन विना इच्छारूपः प्रत्यवमर्शो न स्यात् इति, तत्प्रसङ्गात्[११०] प्रत्यवमर्शविकल्पादिस्वरूपम् उपपादितम्[१११], इति

---

१०५ तदेवमिति च स्वामिनश्चात्मसंस्थस्येत्यादि यदुक्तं तदेवमिति घटते, सृष्टिकाले व्यवहारकाले चेच्छयैवान्तःस्थितमर्थजातं भासयेदिति यदुक्तम्

'कुत्सिते कुत्सितस्य स्यात्कथमुन्मुखतेति चेत् ।
रूपप्रसाररसतो गर्हितत्वमयुक्तिमत् ॥
पञ्चप्रकारकृत्योक्तिशिवत्वान्निजकर्मणे ।
प्रवृत्तस्य निमित्तानामपरेषां क्व मार्गणम् ॥'

इति चार्थोभिप्रेतो नियोगार्थतया लिङ इति ।

१०६ स्वसंवित्साक्षिकतया सिद्धोऽयमित्येवकारार्थः ।

१०७ बाह्यार्थवासनादिकारणान्वेषणया ।

१०८ साध्यम् ।

१०९ युक्तिः ।

११० तत्रापि अन्तरर्थावभासोऽस्तीति समर्थनार्थम् ।

१११ युक्त्यावस्थापितम् ।

शिष्याणां धियं समाधातुं[112] प्रकृतं[113] प्रमेयम् उपपादयन् उपसंहरति[114]

एवं स्मृतौ[115] विकल्पे[116] वा-
प्यपोहनपरायणे[117] ।
ज्ञाने[118] वाप्यन्तराभासः
स्थित एवेति निश्चितम् ॥८॥

प्रकाशात्मा परमेश्वर एव यतो देहादिप्रमातृताभिमानदशायामपि वस्तुतः प्रमाता,

---

११२ अव्यग्रां कर्तुम् ।

११३ अर्थानामन्तरवभासितत्वम् ।

११४ निगमप्रकारेण ।

११५ तदेवं 'वर्तमानावभासानाम्' इत्यादि, 'चिदात्मैव हि देवोऽन्तः स्थितम्' इत्यन्तं वस्तुपिण्डात्मिका प्रतिज्ञा, तत्रापि चावान्तरनयेन 'नैव ह्यनुभवो भाति स्मृतौ' इति स्मृतिज्ञाने 'या च पश्याम्यहम्' इति विकल्पादौ चान्तरर्थावभासोऽस्त्येव – इति समर्थितं, ततश्च स्वानुभवादिरक्षिते 'किमन्येनेति तत्तदाकस्मिकाभास इति स्यात्' एतदन्तं विशेषकलापो हेतुत्वेनोपन्यस्तः 'चिदात्मैव हि देवोऽन्तःस्थितम्' इत्यादि चोदाहरणादिनिरूपणं कृतं, तदेतत्सर्वं परप्रतीत्यै पञ्चावयवात्मकं वाक्यं संपन्नकल्पमिति सूचयंस्तावन्निगमयति – एवमित्यादि ।

११६ नैव ह्यनुभवो भातीत्यादिना ।

११७ या च पश्याम्यहमित्यादिना ।

११८ वर्तमानावभासानामित्यादिना ।

[११९] एवम् इति अतो हेतोः इदं सिद्धं भवति—स्मरणे अपोहनजीविते च विकल्पे अनुभवज्ञाने च अन्तरा[१२०]भासः प्रकाशविश्रान्तः स्थित एव, [१२१]नात्र संशयः कश्चित्, यदि हि देहादिरेव परमार्थप्रमाता स्यात् तत् शरीरस्य प्राणस्य धियः शून्यस्य वा अन्तर्घटादि इति न [१२२]किंचित् एतत्—[१२३]घटादिपरिहारेण देहादेः

११९ एवमिति प्रकाशात्मा परमेश्वर एव यतः सर्वस्य जीवितं तत एतत्सिद्धम्—सर्वसंविरस्वन्तःप्रकाशः स्थितः, तथाहि तावत् सदाशिवसंविद्यभेदेन विश्वे भावाः सामान्यरूपतया विमर्शप्राधान्येनास्फुटात्मानोऽवभान्ति, ईश्वरसंविदि च तथैव विशेषरूपतया तदाभासप्राधान्येनैव स्फुटात्मान—इति शुद्धाध्वनि, तदधस्तु संसारसर्गोऽपि द्विधा—शुद्धाशुद्धभेदेन, एतदपेक्षया पूर्वस्मिन् सुशुद्धे इति केचिद्व्यपदिशन्ति, तत्र शुद्धे सर्गे पुनस्त एव सर्वे भेदेन बहीरूपतया मन्त्रेश्वरादिप्रमातॄणां प्रकाशन्ते, अशुद्धे पुनर्व्यवहाररूपे पशूनां क्रमेण प्रथन्ते इति तेषामेव संसारिणां शक्तिविशेषान् लक्ष्यीकृत्यायमाचार्यो विवृणोति 'यतो देहादीति' तथा 'स्मरण' इत्यादि, सूत्रकृता पुनरेताः शक्तय उपलक्षणीभूता अवस्थापिताः, मतं तु तस्य सर्वत्रेति तात्पर्यम् ।

१२० प्रमातृसंलीनतयावभासः ।

१२१ एवकारार्थमाह नात्रेति ।

१२२ किं केन संगच्छेत् ।

१२३ उभयोरपि स्वरूपतथात्वात् । अन्तःस्थितत्वं हि सर्वथेह समर्थनीयं—तदन्तरेण बहिरिच्छामर्शासंभवात्, तच्च केवलं शुद्धस्वप्रकाशप्रमातृन्तर्लीनतां विना न कथंचनापि घटते । स्मृत्यादयश्च यद्यपि देहादिप्रमातृविषयास्तथापि तदेकप्रकाशेनैव प्रमातृरूपत्वात् तस्यैवान्तस्तादात्म्येन स्थितं सर्वमिति भावः ।

स्थितत्वात् । परमार्थ[१२४]प्रकाशस्तु सर्वसहः इति तत्रान्तर्विश्वम्, इति अनायाससिद्धमेतत् ॥८॥

ननु अन्तराभासवर्गस्य बहिराभासनं यदि सर्वत्रास्ति[१२५] कस्तर्हि स्मरणादौ आभास[१२६]भेदः, न च असौ[१२७] न संवेद्यते—स्फुटास्फुटता[१२८]दिप्रस्फुरणस्य अनपह्नवनीयत्वात्? इत्याशङ्क्याह

किन्तु[१२९] नैसर्गिको ज्ञाने
बहिराभासनात्मनि ।

---

१२४ ननु च यदि घटादिपरिहारेण देहादेः स्थितत्वात् न तत्र तत्सद्भावः, परमार्थप्रकाशे तु कीदृशस्तस्यावभास? इत्यत आह—परमार्थ इति तदन्तरिति । तथा चायमर्थः—पूर्वं सत्यप्रमातृरूपचित्तत्वे चिदात्मतया संनिविष्टा एव तथा स्फुरन्ति, न हि तथान्तःसत्तां विना सूक्ष्मेच्छामर्शः प्रवर्तते, न चान्तश्चित्तत्त्वात्मतया सद्भावे भावानां घटादित्वविमर्शयोग्यसत्ताप्रसङ्गः, तथाहि सति चिदात्मतैव न स्यात् तेषां, ततोऽहंपरामर्शोचिता एव ते तत्र तदा भान्तीत्युपगम्यम् ।

१२५ ज्ञानस्मृतिविकल्पेषु ।

१२६ अन्तराभासस्य सर्वसाधारण्यात् ।

१२७ भेदः ।

१२८ आदिना स्फुटत्वपरिग्रहः, तथा च ज्ञाने स्फुटता स्मृत्यादावस्फुटता ।

१२९ ननु चासति बाधके तदेवं स्मृताविस्यादि सर्वं संभवति, बाधकं चात्र ज्ञानस्मृत्यादीनामन्योन्यं विशेषः, यदि चान्तरवभास एव सर्वत्र बहिरवभासस्तत्किमिति तेषां भेदः, यदि चाभेदस्तर्हि कृतं ज्ञानस्मृत्यादिविशेषव्यपदेशेनेत्येषां स्वरूपं व्यवस्थापयितुं सर्वेषामन्तरवभासेऽपि विशेषमाह किंत्विति ।

पूर्वानुभवरूपस्तु
स्थितः स स्मरणादिषु[130] ॥ ९ ॥

अनुभव[131]ज्ञानस्य 'इदं नीलम्' इति अन्तराभासं बहिराभासयतः सोऽन्तर्भावाभासो नैसर्गिको—निसृष्टेः स्वा[132]तन्त्र्यात् आयातो न तु स्मरणादेरिव अन्यज्ञानकृतवासनादिबलात्, स्मरणे उत्प्रेक्षणे प्रत्यक्षपृष्ठ[133]भाविनि अध्यवसाये च योऽन्तर्नीलाद्यवभासो बाह्यतया अवभासयितव्यः नासौ स्वा[134]त्मीयः अपि तु पूर्वानुभव[135]संस्कारजोऽसौ, तत्र संस्का[136]रो नाम अ-

---

१३० सत्यं विशेषाभाव एवान्तर्भावाभासतया सर्वत्र तथापि अन्योन्यविशेषोऽस्त्येवैषां विशेषहेतोः सद्भावात् इति किंचिदिति सूच्यते । तथा चात्र सूत्रार्थः—सोऽन्तर्भावावभासो बहिराभासात्मनि ज्ञाने नैसर्गिकः परमेश्वरस्येव बहीरूपतया स्वातन्त्र्यायातः सहज एव तत्र च ज्ञाने परमेश्वरस्येव मायापदे प्रमातुः सहज एव ज्ञानशक्तौ स्मरणादिषु तु क्षेत्रज्ञानां सोऽन्तरवभासः पूर्वानुभवरूप इति ।

१३१ निर्विकल्पस्य ।

१३२ अनन्यशरणतयैव ।

१३३ अनन्तरभाविनि ।

१३४ स्मरणकालीनः ।

१३५ स्मृतौ हि दूरसंनिकृष्टप्रत्यक्षसंस्कारजायामनुभव्यामपि पूर्वानुभूतमेवार्थमन्तःस्थितं संस्कारशब्दाभिधेयं क्षेत्रज्ञ एव स्वेच्छया पूर्वकालावच्छेदेनैव मनोगोचरीकरोति न त्वपूर्वं सृजतीति भावः ।

१३६ अनुभूतपूर्वार्थाभासपृथक्करणमपि नाभिनवोऽयं व्यापारोऽस्याः,

नुभवस्य कालान्तरेऽपि अनुवर्तमानता, अतोऽसावनुवर्तमानोऽनुभवो यतो नीलाद्याभाससंभिन्नः ततः तत्तादात्म्यापन्नं[137] स्मरणाद्यपि तथा निर्भासते, तत एव स्मरणकालासंभवी अर्थाभासः[138] तदनुभवपूर्वकालकलित एव, इति स्वयं स्मरणादेर्निर्विषयत्वं गृहीतग्राहित्वं च उद्घोष्यते[139] । एतदेव अस्फुटत्वम्, इति सिद्धोऽनुभवस्मरणादौ आभासभेदः, अन्तराभासवर्गस्य बहिराभासनम् अव्यवधानेन स्फुटता, व्यवधानेन तु तात्कालिकत्वाभावात् अस्फुटता इति ॥ ९ ॥

ननु अनुभवज्ञानात् ऐन्द्रियकात् अन्यत्[140] सर्वं ज्ञानं व्यवधानेन बहिराभासनरूपं प्राप्तम्? इत्याशङ्क्य प्रविभागमाह[141]

किन्तु पृथक् कृत एव तमसा स आवृत इव संस्काररूपतयावस्थितः तदानीं प्रतिबोधकसंनिधाने पुनरावरणविगमात् स एव प्रकाशीभवति इत्यप्रमुषित उच्यते, अत एव अनुभूतविषयासंप्रमोषः स्मृतिर्न त्वपूर्वसृष्टिरेषा ।

१३७ तेन नीलादिना तादात्म्यापन्नम् ।

१३८ स्मर्यमाणः संस्कारजः ।

१३९ उच्चैर्भाष्यते ।

१४० अन्यत्—स्मरणादि स्वैरचारिविकल्पादि च ।

१४१ ननु च यथाव्यवधानेन स्फुटता व्यवधानेन पुनरस्फुटता, तथा

[142]स [143]नैसर्गिक एवास्ति
विकल्पे स्वैरचारिणि ।
[144]यथाभिमतसंस्थाना-
भासनाद्बुद्धिगोचरे ॥ १० ॥

---

च अनुभवव्यतिरिक्तं सर्वमेव ज्ञानं विकल्पादिरूपमस्फुटत्वेनैवायातं? सत्यं, तच्च

'किं तु नैसर्गिको ज्ञाने बहिराभासनात्मनि ।'

इत्यनेनैव सिद्धं, पुनरुत्तरार्धं

'पूर्वानुभवरूपस्तु स्थितः स स्मरणादिषु ।'

इति कथयताचार्येण स्मरणादावेव संस्काररूपो न स्वैरचारिविकल्पादौ-इत्यन्याभिप्रायावकाशो दत्तः, तदेवाह–स नैसर्गिक इत्यादि ।

१४२ सः–अन्तराभासः । तदेवमनुभवस्मृतिज्ञानयोः परस्परविशेषेणाभासभेदो दर्शितः, अपूर्वनिर्माणपूर्वनिर्माणत्वेन तत्रानुभवस्तावदेकप्रकारत्वेन संवृत्तचर एव, स्मृत्यादीति इत्यादिशब्देनोत्प्रेक्षाप्रत्यक्षपृष्ठभाविविकल्पादिपरिग्रहः, तत्र विकल्पस्य द्वैविध्यं–प्रत्यक्षपृष्ठभाव्येकः स्वैरचारी च, मनोराज्यादिरूपो द्वितीयः । तत्र प्रथमं पूर्वानुभवसंस्काराद्यपेक्षमस्फुटत्वपक्षे निक्षिप्तं, द्वितीये तु मनोराज्यादौ स्वैरचारिणि तथोत्प्रेक्षादिषु क्षेत्रज्ञस्यैव स्वतन्त्रता, इति त्रिषयविभागं विकल्पस्याह–स नैसर्गिक इति । ननु बहिराभासात्मनि ज्ञाने नैसर्गिकत्वेन अन्तराभासस्य अव्यवधानेन बहिराभासनम्–इत्याभासगतं स्फुटत्वमित्युक्तम्, तदन्यत्र स्मरणादावन्यव्यवधिना बहिराभासनात् तात्कालिकत्वाभावात् अस्फुटत्वमाभासस्येति लभ्यते, तत्किमर्थं द्वितीयमर्धं 'पूर्वानुभवेति'? सत्यम्–एवं त्वनुभववर्जं सर्वसंविदामेक एव वृत्तान्तः स्यात्, न चैवमिति दर्शयति सूत्रेण–स नैसर्गिक एवेत्यनेनैव ।

१४३ नैसर्गिकः–अन्योपायानपेक्षः स्वभावसिद्ध इत्यर्थः ।

१४४ नन्वस्तु तस्यान्तः प्रमातृभूमौ स्वैरचारितया सत्त्वं–बहिस्तस्य

यः प्रत्यक्षव्यापारम् अनुपजीवन्[145] व्याक्षेप[146]-सारतया मनोराज्यसंकल्पादिविकल्पः स स्वैरं कृत्वा – स्वप्रेरणेन परप्रेरणनैरपेक्ष्येण स्वातन्त्र्येण चरति उदेति व्ययते[147] च, तत्र यो बहिरवभासो नीलादेः अन्तराभासमयस्य स नैसर्गिक एव, तथाहि[148] अपरिदृष्टपूर्वमपि श्वेतं दशनशतकलितकरयुगलयुक्तं दन्तिनम् अन्तः प्रमातृभूमौ स्थितं बहिः अन्तःकरणभूमौ स्वच्छ-

---

सत्ताभावात् अलं प्रयत्नेनेत्यत आह–यथेति, तेन तस्य बुद्धिदर्पणास्फालनेनाभासवत्त्वमेव बहिष्ट्वम्।

१४५ अनपेक्षकः।

१४६ मनसः।

१४७ ननु च यदि स स्वैरं, यदि स्वातन्त्र्येणान्यप्रेरणनैरपेक्ष्यतयैव स्वतन्त्रविकल्पं रचयति तर्हि बहिष्ट्वं तस्य केन वार्यते, ततश्च न स्वैरम्? इति चेत्, अत्रोक्तं–सत्यमस्त्येव स्वातन्त्र्यं परं पारमेश्वरशक्त्यप्रत्यभिज्ञानान्न वा तथाभासनिर्माणेऽपि सर्वप्रमातृसाधारणस्फुटाभासमर्थनिर्माणासामर्थ्यमेवास्येत्यत उक्तं बुद्धिगोचर इति।

१४८ स्वैरचारिणि च विकल्पे यथेच्छं कल्पना इत्याह–तथाहि अपरिदृष्टमिति, अत्राक्षिपन्ति – नेदं स्वतन्त्रं स्वैरचारि विकल्पज्ञानमिति। तथाहि विकल्पस्यावभातपूर्वार्थमात्रनिर्माणसामर्थ्यमेव बुद्धिगोचरे न त्वदृष्टपूर्वेऽर्थे अभिनवत्वेन यथेच्छं निर्माणसामर्थ्यम् दृष्टपूर्वे एव हस्तिनि एतादृशनिर्माणं न त्वदृष्टे निर्माणं चापूर्वताभासनम्, अत्र परिहारः सूत्रकारेणाभिहितः–संस्थानभासनादिति, तदयमर्थः – दृष्टमपि यावन्न दृष्टतयावभास्यते अपि त्वपूर्वत्वेन तावदपूर्वमेव ततोऽदृष्टमिति कल्प्यते।

धीदर्पणात्मिकायां स विकल्पः तात्कालिक-मेव आभासयति ॥ १० ॥

अस्माच्च अन्तराभाससंभवसमर्थनप्रसङ्गा-[149][150] गतात् आभासभेदविचारात्[151] शास्त्रे यत् प्रयो-जनं मुख्यतया अभिसंहितं[152] स्वात्मनि ईश्व-रप्रत्यभिज्ञानरूपं[153] तदधिकरणसिद्धान्तनीत्या अनायाससिद्धम्, इति दर्शयति

अत एव[154] यथाभीष्ट-
समुल्लेखावभासनात् ।

---

१४९ स्वामिनश्चेत्यनेन ।

१५० यथाहि आदिसर्गे तत्प्रथममेव तथावभासनमर्थानां ज्ञानमुच्यते तथा सांसारिकक्षेत्रज्ञव्यवहारेऽपि देवदत्तादिप्रमातॄणां क्रमेण घटादि-प्रतिभासनं ज्ञानमेव, तत्रोभयत्रापि चिन्मय एव भावावभासस्तथा बहिः प्रथते, इत्येवमभिप्रायेणाह–प्रसङ्गागतादाभासभेदविचारादिति, तत्राभा-सभेदविचारेण ज्ञानस्यानुभविकस्यापूर्वतानिर्माणमेव प्रकृतार्थसमर्थकं–येन तस्य स्वातन्त्र्यमुन्मीलतीति बोध्यम् ।

१५१ स्वैरचारिविकल्परूपात् इति प्रकृतोपयोगेन ।

१५२ अभिप्रेतम् आख्यातुमिष्टम् ।

१५३ ईश्वरप्रत्यभिज्ञा च शक्त्याविष्करणद्वारेण, सा च शक्तिर्ज्ञानक्रि-यारूपा इति ज्ञानक्रियारूपशक्त्याविष्कारे स्वरूपप्रत्यभिज्ञा सिद्धा इत्यर्थः। यस्मिन्नर्थे सिध्यति तदनुयायीन्यर्थान्तराण्यपि सिध्यन्ति सो-ऽधिकरणसिद्धान्तः, यथा तर्के लक्षितम्–इन्द्रियव्यतिरिक्त आत्मा दर्श-नस्पर्शनाभ्यामेकार्थग्रहणादित्यस्मिन्नर्थे सिध्यति गुणव्यतिरिक्तो गुणी नियतविषयाणीन्द्रियाणीत्याद्यपि सिद्धं भवति ।

१५४ यतोऽस्त्येव स्वतन्त्रो विकल्पः अतश्च नैसर्गिक एवान्तराभास

ज्ञानक्रिये[१५५] स्फुटे एव
सिद्धे सर्वस्य जीवतः ॥ ११ ॥

यत् इदं यथाभीष्टस्य बहिरसत्त्वात् अननुभूतस्यापि सम्यक् उल्लेखनम्, अवभासनं च विकल्पस्य प्रसङ्गात् दर्शितम् अस्मादेव हेतोः इदमपि सिध्यति—यः कश्चित् कीटो वा ब्रह्मा वा जीवनक्रियाविष्टः तस्य अवभासनरूपा ज्ञानशक्तिः उल्लेखनरूपा च क्रियाशक्तिः नैसर्गिकी, ततः तस्यां भूमौ[१५६] व्यतिरि-

---

ईश्वरेणेव क्षेत्रज्ञेनापि बहिराभासीक्रियते अन्तःस्थितसहजाभासबहिष्करणात् बुद्धिपथे यथा क्षेत्रज्ञानां स्मृत्यतिरिक्तो विकल्पात्मा स्वतन्त्रव्यापारोऽस्ति ततो यदत्र ग्रन्थे प्रतिपिपादयिषितं तत्सिद्धमिति सूत्रार्थः, अतःशब्दसहायेनैवकारेण सिद्धिसमुच्चयः सूचितः । समुल्लेखावभासनादिति द्वन्द्वैकत्वम् ।

१५५ ननु च सर्वत्रैव ज्ञानपूर्विका क्रियाशक्तिरुद्दिष्टा, अनुभवश्चैवमेवेति किमत्र समुल्लेखावभासनादिति क्रियानिरूपणमादावत्र कृतम्? इति चेदत्राहुः—कर्तरि ज्ञातरीत्यत्र यथादौ क्रियाशक्तिनिरूपणं पूर्णस्वातन्त्र्यरूपां क्रियाशक्तिं निरूपयितुं, ज्ञानसमनन्तरभाविनी च क्रियाशक्तिः तत्पल्लवभूतत्वात् ज्ञानशक्त्यैवाक्षिप्ता, तथेहापि समुल्लेख इत्यान्तरस्पन्दरूपा शक्तिः पूर्वमुपात्ता, अवभासनशक्त्यैव क्रियाशक्त्याक्षेप इत्याशयशेषेण ज्ञानक्रिये स्फुटे एवेत्यत्र ज्ञानशक्तिरेव पूर्वमुपात्तेति बोध्यम् ।

१५६ भूमौ—मनोराज्यसंकल्पादौ ।

---

पं० ७ ग० पु० क्रियाविशिष्ट इति पाठः ।

क्तेश्वरोपकल्पितपूर्वसिद्धस्रष्ट्युपजीवनसंभावनापि नास्ति, इति स्वमेव ऐश्वर्यं स्फुटं प्रत्यभिज्ञेयं जानाति करोति च—इति ज्ञानक्रियास्वातन्त्र्यलक्षणम् एकवचनेन सर्वस्य जीवज्जातस्य[१५७] वस्तुत एकेश्वररूपतां सूचयति । इति शिवम् ॥ ११ ॥ आदितः ॥ ६३ ॥

इति श्रीमदाचार्याभिनवगुप्तविरचितायामीश्वरप्रत्यभिज्ञासूत्रविमर्शिन्यां प्रथमे ज्ञानाधिकारे ज्ञानशक्तिनिरूपणं नाम षष्ठमाह्निकम् ॥ ६ ॥

---

१५७ तिरश्चादीनामपि चोत्प्रेक्षादयः प्रवृत्तिविशेषैरनुमीयन्त एवेत्यर्थः ।

## अथ ज्ञानाधिकारे एकाश्रयनिरूपणाख्यं सप्तममाह्निकमारभ्यते ।

अनन्तशक्तिरत्नानां यदेकाश्रयसंश्रयात् ।
विचित्रचन्द्रिकोल्लाससंसिद्धिस्तं स्तुमः शिवम् ॥

एवं स्मृत्यादिशक्तीनां वितत्य स्वरूपमियता दर्शितम्, यत्तु अत्र प्रमातुरपि स्वरूपम् उन्मीलितम् तत्तासामेव शक्तित्वं समर्थयि-

१ तदेवं ज्ञानादिशक्तिभिः स्वतन्त्रः प्रमाता आक्षिप्तः, तत्र किं शक्त्यभेदमयत्वं विश्वस्य उत शक्तिमदभेदान्वयत्वमिति विचारार्थमुत्तरग्रन्थारम्भः। तत्र शक्तिवादिन आहुः — शक्तिमत्स्फारमयत्वात् विश्वस्य शक्तिमयमेव विश्वमिति, उक्तं च 'शक्तयोऽस्य जगत् कृत्स्नमिति' तदुपशिक्षणार्थं शक्तिमदभेदसमर्थनमेवाचार्यो विदधाति, 'या चैषेत्यादिना' तत्राह्निकार्थपीठिकारूपसंग्रहश्लोकेन तावत् सूत्रविमर्शिनीकारस्तदेव सूचयति 'अनन्तशक्तीत्यादिना' अयं भावः — सत्यमस्त्येव शक्तिमयत्वं विश्वस्य, तथापि

'न हिमस्य पृथक्छैत्यं नाग्नेरौष्ण्यं पृथग्भवेत् ।'

इति नीत्या शक्तेः शक्तस्य शक्तस्वरूपधर्मभूतत्वात् न धर्मिणो धर्मेण व्यपदेशः । यथोक्तम्

'शिवः शक्तस्तथा भावानिच्छया कर्तुमीहते ।'

इति व्यावहारिकी परमार्थतः 'शक्तयोऽस्य जगत् कृत्स्नम्' इत्येषोक्तिः, वस्तुतस्तु भगवच्छिवात्मकमेव सर्वमित्युक्तं 'यदेकाश्रयेत्यादिना' अत एवोक्तं नहि स्वतन्त्रं शक्तिस्वरूपं भवितुमर्हतीति ।

२ तं — शक्तिमत्स्वरूपमित्यर्थः ।

३ इयता — प्राधान्येन ।

४ अत्र — शक्तिनिरूपणे ।

५ समर्थयितुमित्यत्र स्वयं तासां स्वातन्त्र्यापसारणेनेति शेषः ।

तुम् 'न हि स्वतन्त्रं शक्तिस्वरूपं भवितुमर्हति' इति, अधुना तु तासां शक्तीनाम् एक आश्रयः[6], स च तच्छक्तिसंयोजनवियोजनादिस्वाच्छन्द्ययोगात् महेश्वरः न तु जडस्वरूपवह्न्यादिवत् दाहकपाचकादिशक्त्याश्रयमात्रम्—इति यत् उभयम्[7] उपक्षिप्तम्

'न चेत् अन्तःकृतानन्तविश्वरूप··· ।'

इत्यत्र सूत्रे, तत् वितत्य निर्णेतव्यम् । तत्र एकमाश्रयं निर्णेतुम्[8]

'या चैषा प्रतिभा··························· ।'

इत्यादि

'························व्यवहारोऽनुभूयते ॥'

इत्यन्तं चतुर्दशभिः श्लोकैः आह्निकं प्रस्तूयते । तत्र श्लोकेन एक आश्रयः स्वरूपत[9]

---

६ इति निर्णेतव्यमिति ज्ञेयम् ।

७ उभयं—शक्तिः शक्तिमांश्च ।

८ आश्रयमात्रं तावदस्तीति निर्णयायेत्यभिप्रायः ।

९ स्वरूपत इति—स्मृत्यादीनां शक्तीनामन्य आश्रयोऽस्तीति कथमैक्यं स्मृत्यादयोऽन्यस्वरूपाः स्युः आश्रयस्तु स एवास्त्विति स्वरूपत इति स एव तत्तत्स्मृत्यादिस्वरूपेण भासमान एक आश्रयश्च स एव तेषामिति परमार्थोऽस्याश्रयत्वेऽपि तस्यैव तादृक्क्रमावभासरूपत्वात् तासां न तस्याधेयत्वं येन लौकिकवदाधाराधेयभावोऽत्र संभवेदिति सिद्धमेतत्—यत् किंचिद्बाह्याभ्यन्तरभावेन भासते क्रमनिर्मितं तत्सर्वमन्तर्मुखतया

उपक्षिप्यते। ततोऽपि द्वयेन—व्यवहारः सर्वः सं[10]ति एकस्मिन् आश्रये युज्यते न असं[11]ति, इति अन्वयव्यतिरेकात्मा युक्तिः उच्यते। ततो व्यवहारस्वरूपं कार्यकारणभावतः, स्मरणतः, सत्यासत्यप्रविभागतश्च इति संक्षिप्य श्लोकेन श्लोकाष्टकेन च प्रतिपाद्यते। ततः श्लोकेन सर्वोऽर्थो नि[12]र्गम्यते, इति—आह्निकार्थसंक्षेपः। अथ श्लोकार्थो व्याख्यायते यदुक्तम्—'सर्वस्य सिद्धे ज्ञानक्रिये जीवत' इति तत् कथम्? यावता ज्ञानादिव्यतिरिक्तः कोऽसौ अन्यो? यस्य ते स्याताम्, काणाददिशा हि दूषितः तदाश्रयः

'ततो भिन्नेषु धर्मेषु ........................ ।'

इत्यादिना? तत् एतत् आशङ्क्य स्वद[13]र्शनदिशा तमेकं स्वरूपत उपक्षिपति

---

सर्वदेशकालसहं स्वतो देशकालावच्छेदमवभासनमाभासमानमात्मा स्वरूपं सर्वस्येति। उपक्षिप्यते—उपदिश्यते।

१० अन्वयात्मयुक्त्या।

११ व्यतिरेकात्मयुक्त्या।

१२ निगमविधया व्यवस्थाप्यते इत्यर्थः। तदत्र परावबोधमात्रफलत्वात् अस्याह्निकस्य पञ्चावयववाक्यं सिद्धं भवतीति सूच्यते—निगम्यते इति।

१३ स्वदर्शनदिशा—विधिमुखेन, तम्—आश्रयम्, उपक्षिपति—उपदिशति।

या[14] चैषा प्रतिभा तत्त-
त्पदार्थक्रमरूषिता ।
अक्रमानन्तचिद्रूपः
प्रमाता स महेश्वरः ॥ १ ॥

'प्रतिभाति घट' इति यद्यपि विषयोपश्लि-ष्टमेव प्रतिभानं भाति त[15]थापि न तद्विषयस्य स्वकं वपुः, अपि तु संवेदनमेव तत् तथा चकास्ति 'मां प्रति भाति' इति प्रमातृ[16]लग्न-त्वात् । तथा च वेदः

'न त[17]त्र सूर्यो भाति न चन्द्रता[18]रकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।

---

१४ तदेवं स्मृत्यादिशक्तिस्वरूपसमर्थनेन परोद्भेदनीयदूषणशङ्काश-निनिर्दलने सिद्धमपि स्वमताभीष्टं तत्स्वरूपं परनिराकरणद्वारा निषेध-मुखेनैव समर्थितम्, अथेदानीं स्वरससिद्धं यथा विधिमुखेन सेत्स्यतीति कथनावसर इति मुख्यत आह या चैषेत्यादि, तदत्र सूत्रविमर्शिनीकार आक्षेपपूर्वकमत्र नियोजयति यदुक्तं सर्वस्येति, न चाक्षेप एवात्र मुख्यं कथनीयमिति वाच्यमनेन स्वदर्शनदिशेति कथनादस्त्येव विधिस्वरूप-कथनमावश्यकमिति ।

१५ यथा माध्यमिकैः 'प्रकटताख्या संविद्विषयधर्मे' इतीत्थं न स्वक-मत्र अपितु शक्तिमद्वहुत्वनिरासनमत्रेति बोध्यम् ।

१६ प्रमातृनिष्ठतयैव स्फुरणात् ।

१७ तत्र–स्वप्रकाशे परब्रह्मणि ।

१८ अत्र समाहारे द्वन्द्वः ।

तमेव भान्तं[१९]मनु भाति सर्वं
तस्य[२०] भासा सर्वमिदं विभाति ॥'

इति। शैत्रा[२१] अविरतस्फुरणत्वं, कर्मप्रवचनीयेन[२२] तदीयस्वातन्त्र्योपकल्पितनिर्माणक्रियाजनितो वेद्यवेदकभावरूपो लक्षणात्मा संबन्धो द्योतितः, केवलं विषयोल्लेखनबलात् बहिः क्रमावभासः समर्थितः, स—सक्रम[२३]यौगपद्यादिविचित्ररूपो, यः—पदार्थानां वक्ष्यमाणेश्वरस्वात-

---

१९ भान्तमित्यत्र अविरतस्फुरणत्वादिति शेषः।

२० तस्यैव भासेति सावधारणं ज्ञेयं, सूर्यादीनां प्रकाशाभासानां महाप्रकाशविग्रहचैतन्याधीना स्वरूपसिद्धिरित्यत्र स्वानुभव एवात्र प्रमाणम्। अयं भावः—यदि च सूर्यादयोऽन्याभासका इति प्रसिद्धास्तथापि तत्र स्वप्रकाशेनैतेन स्वीयप्रकाशवपुषा भान्ति—घटो भातीतिवत्, तेन यथा घटो भातीत्यत्र प्रमातृनिष्ठया भानं, न स्वतः, तथा चैतेऽपि प्रमात्रधीनभाना एवेति सर्वस्य च स्वयंभानस्वरूपस्ववपुर्निराकरणेऽपि अत्र तेजस्वितयैते निषिद्धाः का अन्येष्वाशेत्याशयविवक्षया। ननु च यदि न भान्ति कथं तर्हि तत्प्रकाश इत्यत आह—तमेवेति, तत्संवेदनात्मकमेव सर्वमेतद्भाति न स्वसत्तयेति हि अक्रमिकमेव भानं, यदि च क्रमेणापि भानं तथापि तस्यैव पूर्णस्य शक्तिमतस्तथावस्थानस्वरूपत्वात् तन्मयमेतद्भानमित्याह—तस्य भासेति, क्रमेऽपि संवेदनमेव तस्य वपुरिति न स्वीयमिति वेदने परमार्थतोऽक्रमस्वरूपः शक्तिमान्समर्थित इति।

२१ भान्तमित्यत्र।

२२ अनुना। अनुर्लक्षण इति अनुशब्दस्य कर्मप्रवचनीयत्वं लक्षणे, तच्चेह प्रकृतोपयोगिवेद्यवेदकभावलक्षणम्।

२३ कार्यकारणभावादौ क्रमो, यथा—बीजादङ्कुरः, इतरत्र यौगपद्यं, यथा—घटपटादौ, अक्रमश्चेमा गाव इत्यादौ।

भ्यरूपदेशकालशक्त्युपकल्पितः, क्रमः[२४] – देश-कालपरिपाटी, तेन रूषिता—प्रतिबिम्बकल्पतया उपरक्ता, या प्रतिभा उक्ता

'केवलं भिन्नसंवेद्य………………………… ।'

इत्यादिना । एषा इति च – सर्वस्य स्वप्रकाशरूपा, परमार्थतश्च अन्तर्मुखत्वेन प्रकाशमात्रपरमार्थतया भेदाभावात्[२५] अक्रमा, सैव महेश्वरः[२६], अविद्यमानोऽन्तः – परिच्छेदो देशतः कालतः स्वरूपतश्च यस्याः चितः संविदः तदेव[२७] रूपं यस्य इति, अत[२८] एव बहिर्मुख[२९]-

---

२४ अत्र च बहीरूपत्वादेवाभासतागुणीकारेण विच्छिन्नावभासेषु अर्थतैव प्राधान्यमुपयातीति मत्वा पदार्थक्रमेति सूत्रकारोक्तिः न तु पदार्थाभासक्रमेति ।

२५ देशकालकलनावैकल्यात् ।

२६ कल्पितेश्वराणां ब्रह्मादीनां स्वांशाभिषेकोपकल्पितैश्वर्यो महेश्वरः प्रमाता ।

२७ 'सर्वाणि सर्वनामानि तुल्याधिकरणान्यपि ।
स्वेच्छया गृह्णते लिङ्गमनुवाद्यविधेययोः ॥

इति विधेयलिङ्गतैव तच्छब्दस्य ।

२८ पदार्थं व्याख्याय तात्पर्यार्थं विवेचयति—अत एवेति ।

२९ पदार्थक्रमोऽपि द्विविधः – बाह्यान्तरतया, तदाह बहिर्मुखप्रकाशेति, योऽन्त इत्यादि च, तत्र बहिर्मुखप्रकाशः प्रमाणवर्गः इदमिदमिति चान्तर्विमर्शात्मा प्रमासमूहश्च क्रमिक एव, तत्र संयोजनवियोजनादिस्वतन्त्रोऽक्रमः क्रमिकबाह्यपदार्थमयः प्रमाता ।

प्रकाशात्मकविज्ञानस्वभावस्य प्रमाणवर्गस्य योऽन्तः[30] प्रत्याभासम् 'इदम् इदम्' इति अनन्तो विकल्पमयो विमर्शात्मा प्रमासमूहः, तत्र संयोजनवियोजनविश्रमणाद्यनेकप्रकारस्वातन्त्र्यपरिपूर्णः शुद्धः 'अहंप्रत्यवमर्शमयः प्रमाता' स भण्यते, अतश्च[31] बहिर्घटप्रकाशैः[32] 'अयं घट' इति अन्तर्विकल्पः स्वीकृतपूर्वरूपः[33] 'अहमिति' तदुभयविश्रान्तिस्थानम्[34], इति—इयत् पूर्णं प्रकाशस्य स्वरूपम् ॥ १ ॥

अत्रैव[35] उपपत्तिं प्रदर्शयितुमन्वयं तावदाह

---

३० अन्तः—प्रमातरि।

३१ पूर्वोक्तमेव द्विविधक्रमावभासनमान्तराक्रमावभासतत्त्वं च संक्षेपेणाहातश्चेति।

३२ क्रमिक एव।

३३ क्रमिक एव।

३४ बाह्याभ्यन्तररूपस्य तदुभयस्य, अत्र यत्तच्छब्दाभ्यां विध्यनुवादौ सूच्येते, तत्र चानुवादस्य स्वयमेव सिद्धत्वात् अन्तःस्थिताक्रमावभास एव यः स एव बहिःक्रमावभासरूप इत्यर्थः।

३५ अत्र—शक्तिमत्स्वरूपे, यदेतदुक्तम्

'अक्रमानन्तचिद्रूपः प्रमाता स महेश्वरः।'

इति तत्र बौद्धा विप्रतिपन्नाः—सर्वे पदार्थाः क्षणिका एवेत्यलं प्रमात्रक्रममहेश्वरत्वकल्पनेनेत्यत आह अत्रैवेति। अन्वयव्यतिरेक्यनुमानेन हि सर्वथा साध्यसिद्धिरिति तावदन्वयमुखेन यावत्सर्वसंवित्कालव्यापी यद्यस्ति चिन्मयः प्रमाता तावद्भिन्नपदार्थसमन्वयः संभवति नान्यथेति तावदन्वयमाहेति।

तत्तद्विभिन्नसंवित्ति-
मुखैरेकप्रमातरि ।
प्रतितिष्ठत्सु भावेषु
ज्ञातेयमुपपद्यते ॥ २ ॥

'संविन्निष्ठा हि[३६] विषयव्यवस्थितयः' इति यत् उच्यते तत् न भिन्नरूपप्रमात्मकसंविन्मात्रविश्रान्त्या सिद्ध्यति, अपि तु तास्ता विभिन्नाः संविदो निश्चयरूपाः प्रमात्मानो याः तानि एव मुखानि द्वाराणि उपाया मार्गाः तैः मुखैः नदीस्रोतःस्थानीयैः[३७] यदि अमी भावा नीलसुखाद्य उह्यमाना एकस्मिन् 'अहमिति' प्रमातृरूपे महासंवित्समुद्रे[३८] प्रति-

---

३६ एवं प्रतिज्ञातं शक्तिमत्स्वरूपमुपपत्त्या उपपादयितुमन्वयं तावदाह सूत्रेण तत्तदिति, संविन्निष्ठा विषयाणां व्यवस्थितय इति यद्वोच्यते तद्भिन्नासु संविद्रूपासु प्रमासु विश्रमणमात्रं मन्तव्यम् तावता हि न सिध्यति व्यवहारः अपि तु तास्ता नीलसुखादिविषयेषु विभिन्ना याः संविदः निश्चयान्ताः तान्येव मुखानि उपायाः तैर्नदीस्रोतःस्थानीयैरित्यर्थः।

३७ स्रोतःसिन्धुनिरूपणयानुभवानामनुभवितुश्च बोधैकरूपतया समानजातीयत्वात् एकतापत्तिरेवोचिता इति नदीस्रोतःस्थानीयैरित्युक्तम् ।

३८ भिन्नजातीयानां हि क्षीरोदकादीनां मेलनेऽपि विभागानवभासः केवलं न त्वेकतापत्तिः, ऐक्यापत्तिरेव च भिन्नानां समन्वयः तं विना चान्योन्यमेलनात्मको व्यवहारो न सिध्येदिति समुद्रौपम्यम् ।

तिष्ठन्ति—आभिमुख्येन विश्रान्तिं भजन्ते, तत [३९]एषु परस्परं समन्वयरूपं यत् [४०]ज्ञातेयं तत् उपपत्त्या घटते, ज्ञातीनां भावः तच्छब्दप्रवृत्तिनिमित्तं परस्परं जानीयुः इति, कर्म च अन्योन्ययोगक्षेमोद्वहनात्मकं ज्ञातेयम्, [४१]तच्च समन्वयाभिप्रायेण इह दर्शितम्—न जडानां स्वतः [४२]समन्वयः कदाचिदपि, इति प्रतिपादयितुम् ॥ २ ॥

[४३]तथा च व्यतिरेकमुखेन एतदेवाह

देशकालक्रमजुषा-
मर्थानां [४४]स्वसमापिनाम्।
सकृदा[४५]भाससाध्योऽसा-
वन्यथा कः समन्वयः ॥ ३ ॥

---

३९ नीलसुखादिभावेषु।

४० भावकर्मणोः 'ज्ञातेर्ढक्' इति ढक्प्रत्ययः।

४१ उभयमपि।

४२ परमार्थतश्चिद्रूपताप्राण एवायं युक्त इति भावः।

४३ ननु च सर्व एव समन्वयः कार्यकारणभावे विश्रान्तः स च भिन्नानामेव बीजाङ्कुराग्निधूमादीनामस्तीति शङ्कित्वा पौर्वापर्यादिना सम्बन्धो युगपद्विमिश्रितावभासरूपः कथमपि देशकालक्रमवतामन्योन्यमननुस्यूतरूपाणां च स्यात् यदि सकृद्विमिश्रितावभास एव तेषामेकप्रमातृरूपः तदा स्वरूपं न स्यादित्याह तथा चेत्यादि, देशकालेति च।

४४ देशकालादिसंमिश्रीभावात्मनैकाभासेन।

४५ यद्येकप्रमातृविश्रान्तिर्न स्यात्।

अर्थानां[46] जडानां, तज्ज्ञानानां तद्विकल्पानां तन्निश्चयानां च देशक्रमं कालक्रमं च अत्यजतां, स्वसमापिनां—स्वरूपमात्रप्रतिष्ठानां, कः समन्वयः—न कश्चित् इत्यर्थः[47], यतो हि असौ समन्वयः सकृदाभासेन देशकालाकारमिश्रीकरणात्मना योजनाभासेन साधयितुं शक्यः नान्यथा[48], न हि पृथक्पृथक् परिक्षीणेषु स्रोतःसु तदुह्यमानाः तृणोलपादयः समन्वयं कंचित् यान्ति इति । अनेकत्वेन[49] देशादिभेद इत्याशयेन सकृच्छब्दः तन्निषेधतात्पर्येण प्रयुक्तः ॥ ३ ॥

---

४६ नीलसुखादीनाम् ।

४७ अयं भावः—

'क्रमो भेदाश्रयो भेदोऽप्याभाससदसत्त्वतः ।'

इति वक्ष्यमाणनीत्या देशकालस्वरूपभिन्नानामर्थानां पौर्वापर्यादिसंबन्धोऽन्योन्यमननुस्यूतरूपत्वात् कथं? यदि पुनरेकप्रमातृरूपत्वेन तदा कथं स्वरूपत्वम्? इति हि तदा देशकालक्रमस्वरूपमात्रादौ न समन्वयः ।

४८ एकाभासमिश्रीकरणात्मकं विना ।

४९ ननु च पदार्थक्रम एव भेदत्वेनोपदिष्टः तत्तत्पदार्थक्रमरूपितेत्याद्युक्त्या न त्वाभासः, आभासो हि सर्वत्र सम एवेति केवलमेवाभाससाध्योऽसाविति ह्येव वाच्यं, कृतं सकृच्छब्दप्रयोगेण? इत्यत आह—अनेकत्वेनेत्यादि, अनेकत्वमेव पदार्थक्रमरूपो देशादिभेदः, तदभावं वदता सकृच्छब्देनाभासस्य सर्वत्र समत्वमेव ध्वनितं, पदार्थक्रम एव न त्वाभासक्रम इति ।

तत्र कोऽसौ समन्वयः? इत्याशङ्क्य, बहुतरव्यापकं कार्यकारणभावं तावत् दर्शयति

प्रत्यक्षानुपलम्भानां
तत्तद्भिन्नांशपातिनाम्।
कार्यकारणतासिद्धि-
हेतुतैकप्रमातृजा ॥ ४ ॥

इह अग्नौ प्रत्यक्षे धूमं न उपलभते, ततो

---

५० तत्र यदुक्तम् 'अन्यथा कः समन्वय' इति तत्र तावन्समन्वयस्य बहुप्रकारत्वेऽपि सर्वसाधारणं कार्यकारणलक्षणं समन्वयमेकप्रमातृविश्रान्तिं विनापि तावत् सिध्यतीति वदन्ति, ततश्चालमेकप्रमातृकल्पनया, तत्समर्थनस्य प्रत्यक्षानुपलम्भैरेव कल्पितत्वादिति पूर्वार्धेन तदसिद्धतां वदन्नुत्तरार्धेन स्वमतेन तत्सिद्धतां च साधयति–प्रत्यक्षानुपलम्भेति, कार्यकारणतेत्यादि च । कार्यकारणभावो हि एकपदार्थरूपः स च प्रत्यक्षानुपलम्भलक्षणभिन्नप्रमाणप्रमेयतयैकतां जह्यात् तस्य साधनप्रत्यक्षादेरेकप्रमातृमयत्वं विनेति कारिकार्थः ।

५१ अग्नेः प्रत्यक्षतयोपलम्भेऽपि तत्काल एवानुपलब्धस्य धूमस्यानन्तरक्षणे प्रत्यक्षीभावादुपलम्भः, इत्येवं प्रत्यक्षद्वयमनुपलम्भत्रयं चेति प्रत्यक्षानुपलम्भपञ्चकप्रसाध्यान्वयव्यतिरेकसिद्धिपरमार्थां कार्यकारणभावस्य प्रसिद्धिमभिमन्यन्ते तच्चैषां मनोरथमात्रम्, तथा च अग्निप्रत्यक्षेण अग्निरस्ति इति निश्चीयतां धूमप्रत्यक्षेणापि धूमः अनुपलम्भैरपि द्वयाभावो धूमाभावश्चेति व्यवह्रियते तदेते प्रत्यक्षानुपलम्भा–वह्निः, धूमाभावो धूमो, वह्न्यभावो, धूमाभावः इत्येवं प्रातिपदिकार्थमात्रनिश्चयनिष्ठाः घटः पट इति यथा, तदेते तस्मिंस्तस्मिन्भिन्ने अंशे भागे निपतनशीलाः–सत्यग्नौ धूमो वह्न्यभावे धूमाभाव इत्येवंभूतसप्तम्यर्थस्वभावमपेक्षालक्षणं कार्यकारणभावमन्वयव्यतिरेकसतत्त्वं कथं निश्चिनुयुः, अस्य दर्शने तु एकप्रत्य-

धूमं प्रत्यक्षेण पश्यति, अग्निं तु यदि न उपलभते धूममपि न उपलभते[५२]—इति प्रत्यक्षाभ्याम् अनुपलम्भैश्च इति पञ्चकात् '[५३]कार्यकारणभावो धूमाग्न्योः सिद्ध्यति' इति यत् उक्तं त[५४]त् कथम्? अग्निप्रत्यक्षेण हि धूमेन किंचित् उद्[५५]व्यूढम्—अग्निलक्षणे धूमात् भिन्ने अंशे त[५६]स्य अवगमहेतुत्वात्, स्वस्वभावरूपे भिन्ने अंशे विश्रान्तत्वाच्च, परविषयानवगाह-

---

क्षानुलम्भस्रोतोऽनुसारेण तानि तानि प्रमेयाण्येकचित्सिन्धुसन्धुक्षणलक्षणानि यतस्तत एकीभूतानि प्रमातृस्वातन्त्र्योत्थापितापेक्षालक्षणस्वरूपवैलक्षण्यानि न तु द्वन्द्वपदार्थासदृशि प्रमात्रा भासन्ते, तथा भास्यमानतैव कार्यता कारणता च, तथाभासनं च कार्यकारणभावावभासनमिति सूत्रार्थः।

५२ यदि धूमोऽग्निकार्यं न स्यात् तदाग्निं विनाप्युपलभ्येत न तु तथास्ति प्रत्यक्षद्वयेनानुपलम्भत्रयेण चेत्यर्थः।

५३ अत्र च धूमाग्निकार्यकारणभावो दृष्टान्तीकृतो बोद्धव्यः। ततश्च बाह्ये कार्यकारणभावे दृष्टान्तिते प्रकृतमपि दार्ष्टान्तिकं वस्तु स्वयमेव सेत्स्यतीति, तथा चायमर्थः—यथा च जडानां स्वयमुत्पत्तिरुपादानं चाघटमानं प्रमातृतालक्षणचिदैक्यं विना नास्ति तथा तदुत्पत्त्युत्पादनमेलनरूपैककार्यकारणभावव्यवहारोऽपि प्रत्यक्षानुपलम्भैरेकप्रमातृनिष्ठतामापाद्योपपद्यत इति।

५४ भवन्मनोरथप्रायमेतदित्यर्थः।

५५ उद्व्यूढम्—उपकृतम्।

५६ तस्य—अग्निप्रत्यक्षस्य।

नात् ज्ञानान्तरस्वरूपानावेशाच्च इति। [५७]पातिः ज्ञापनवाची पतिश्च विश्रान्तिवाची प्रयुक्त[५८]स्तन्त्रेण। एवं धूमानुपलम्भादौ चतुष्टये वाच्यम्। [५९]ततश्च अग्निः, धूमः, अग्न्यभावो, धूमाभावः इति [६०]एतानि वस्तूनि यथा पृथक् प्रमातृसंवेद्यानि धूमाग्न्योः कार्यकारणतां न गमयन्ति [६१]तथा एकप्रमातृवेद्यान्यपि, वि[६२]कल्पोऽपि अनुभवातिरिक्तं ज्ञापयन् न प्रमाणमेव। [६३]यदा तु प्रत्यक्षानुपलम्भस्रोतः-पञ्चकेन तानि पञ्च वस्तूनि एकसंवित्समुद्र-विश्रान्तानि कृतानि तदा एकीभूतानि प्रमात्रा स्वतन्त्रतया अन्योन्यसापेक्षाणि न तु घटपटादिवत् भास्यन्ते, [६४]स एव एक आ-

५७ तत्तद्भिन्नांशपातिनामित्यत्र।

५८ सकृत्प्रयुक्तं युगपदेव बह्वर्थोपकारकत्वं तन्त्रत्वम्।

५९ किं पुनरेतावता सिद्धमित्यत आह ततश्चेति।

६० एते हि सर्वे विकल्पाः प्रातिपदिकार्थमात्रनिश्चयनिष्ठाः घटः पट इति, यथा कार्यकारणभावो हि अपेक्षालक्षणः सप्तम्यर्थस्वभावोऽन्वय-व्यतिरेकीति कथं समन्वयः।

६१ कार्यकारणभावं कथं गमयन्तीत्यर्थः।

६२ ननु विकल्पेनैकीकरिष्यते इत्यत आह विकल्पोऽपीति।

६३ ननु कथं पुनर्भवद्दर्शने तत्सिद्धिरित्यत आह यदेति।

६४ ततश्च भास्यमानतैव कार्यता कारणता च, तथा भासनं च कार्य-कारणभावावभासनमिति।

भासः कार्यकारणभावावभास इति न किञ्चित् अवद्यम्[६५] ॥ ४ ॥

ननु[६६] प्रत्यक्षानुपलम्भैः यत् कृतं तत् स्मरणबलात् एकीकरिष्यति, उक्तं[६७] तावत् अत्र—स्मृतिरपि अनुभूतातिरिक्तेऽर्थे न व्याप्रियते, सापि च विज्ञानसमन्वयरूपा एकप्रमातृसद्भावं विना कथं स्यात्? इति दर्शयति

स्मृतौ[६८] यैव स्वसंवित्तिः
प्रमाणं स्वात्मसंभवे ।
पूर्वानुभवसद्भावे
साधनं सैव नापरम्[६९] ॥ ५ ॥

---

६५ सविरोधम् ।

६६ ननु सर्वथा प्रत्यक्षानुपलम्भानां कार्यकारणतानवगमकत्वम् उतांशांशिकया, यदि सर्वथा तर्हि किमिति तयोः पौर्वापर्यता दृश्यते, अथांशांशिकया तदा किं तदेकीकरणमिति ब्रूमः, तथापि किं प्रमात्रैक्येन स्मरणबलादेव तत्सिद्ध्यतीति शङ्कापूर्वमाह नन्विति ।

६७ परिहारः ।

६८ एकीकरणार्थमेव हि प्रमात्रङ्गीकरणं, तच्च यदि प्रकारान्तरेण सिद्ध्यति कृतमायासदायिना प्रमातृकल्पनेनेत्यत आह स्मृतौ यैवेति ।

६९ अपरमिति स्वसंवेदनव्यतिरिक्तम् । तथा चायमत्र सूत्रार्थः—प्रत्यक्षानुपलम्भरूपाणि संवेदनानि, यद्यन्निजं संवेद्यमगृह्णत् तस्य तावत्स्मरणे यत् प्रकाशनं न तत् स्मरणकालोपनतमपूर्व—गृहीतग्रहणस्वभावत्वात्, अपि तु पूर्वानुभव एव तत्, स चेदानीं पृथग्वेद्यत्वेन न

इह अनुभूतो विषयः प्रकाशते स्मृतौ, तत्र विषयस्य सा स्मृतिः न नूतनः[70] प्रकाशः अपि तु अस्य स प्राच्य एव[71] अनुभवप्रकाशः, स चानुभवो ज्ञानरूपत्वेन ज्ञेयरूपत्वाभावात् न ज्ञानान्तरसंवेद्यः अपि तु स्वप्रकाशः, स च[72] स्मृतिकाले यदि असन् तत् कथं प्रकाशताम्, भवतु वा असौ तथापि[73] स्मृतिप्रकाशोऽनुभवप्रकाश इति अन्योन्यभिन्नं युगलम्[74] इति न कदाचित् स्मृतिः स्यात्, तस्मात्

---

निर्भासते अभावात्तस्य, भावेऽपि वेद्यत्वेन भासने ज्ञानज्ञानं स्यात् न स्मरणं, न चापि ज्ञानं ज्ञानान्तरवेद्यमिति दर्शितं बहुशः, तदस्य सतोऽपि पृथक् स्वप्रकाशतायामन्योन्याननुषक्तं संवेदनद्वयमेव स्यात् न स्मरणम्, तदियदङ्गीकर्तव्यं—यत् स्मरणकालेऽपि अनुभवः प्राच्योऽन्तःस्वसंवेदनात्मा सन्नेव स्मृतिस्वरूपसद्भावावेदकस्वसंवेदनादभिन्नः प्रकाशत इति, न ह्यत्र प्रत्यक्षानुमानादि तत्स्वसंवेदनं, तदेव प्रमातृतत्त्वमिति स्मरणबलादेकीकारः प्रत्यक्षादीनामित्युक्तिः प्रमातृबलादेकीकारमस्मदुपगतमुपोद्बलयति, स्मरणलक्षणश्चान्तरो व्यवहारः स्मरणादभिलाषेण इति न्यायेन अशेषव्यवहारव्यापको यः सोऽप्येकप्रमातृतत्त्वविश्रमाधीन इति।

७० गृहीतग्रहणस्वभावत्वात्।

७१ ननु मास्तु नूतनः प्रकाशस्तथापि प्राच्यमनुभवप्रकाशमेव स्वीकरोति स्मृतिरित्यत आह स चानुभव इत्यादि।

७२ स च—अनुभवः।

७३ तथापीति—अस्य सतोऽपि पृथक् स्वप्रकाशतायाम्।

७४ युगलमिति—संवेदनद्वयम्।

एतत् एवमुपपद्यते[75], यदेव स्मृतिस्वसंवेदनम् तदेव अनुभवस्य स्वसंवेदनम्, न तु अपरं स्वसंवेदनव्यतिरिक्तं प्रत्यक्षम् अनुमानादिकं वा तत्र[76] क्रमते, ततश्च तावत्कालव्यापि अविच्छिन्नमेकं यत् स्वसंवेदनं तदेव 'प्रमातृतत्त्वम्' इति सिद्धम्। अन्यत्र अनुभवितरि स्मर्ता अन्यो न उपपद्यते, इति अनया च्छायया स्मृत्या प्रमातृसिद्धिः पूर्वमुक्ता[77], इदानीं तु स्वसंवेदनैकीभावेन भङ्ग्यन्तरेण इति विशेषः ॥ ५ ॥

ननु अनुभवातिरिक्तेऽपि अर्थे[78] सन्तु विकल्पाः[79] प्रमाणम्, अप्रामाण्यं[80] हि बाधबलात् भवति, बाधाभावे तत्[81] कथं स्यात्? इति

---

७५ स्मरणकालेऽपि प्राच्योऽनुभवोऽन्तःस्वसंवेदनात्मा सन्नेव स्मृतिस्वरूपसद्भावावेदकस्वसंवेदनादभिन्नः प्रकाशत इत्यर्थः।

७६ तत्र—पूर्वानुभवसद्भावे।

७७ स हि पूर्वानुभूतार्थोपलब्धेत्यत्र।

७८ कार्यकारणभावादौ। अर्थे—अनुभवमात्रादप्रसिद्धेऽपि।

७९ विकल्पादेवैकीकारसिद्धिरिति भावः।

८० यथाहुः नैयायिकाः—बाधाभावे किं कृतमप्रामाण्यम्।

८१ तदित्यप्रामाण्यम्। ततश्च बाधसत्तासत्तयोरेव अवधातव्यम् अलमेकं प्रमातृतत्त्वेन समर्थितेन तत्कृत्यस्य विकल्पबलादेव सिद्धेः।

आशङ्क्य, सोऽपि अयं बाध्यबाधकभावः सत्यासत्यप्रविभाजनाय[82] विश्वेषां व्यवहाराणां जीवितभूतो, न एकेन प्रमातृतत्त्वेन विना घटत इति वितत्य दर्शयति

बाध्यबाधकभावोऽपि[83]
स्वात्मनिष्ठाविरोधिनाम्।
ज्ञानानामुदियादेक-
प्रमातृपरिनिष्ठितेः ॥ ६ ॥

'बाधाभावे[84] प्रामाण्यम्' इत्येतदर्थम् अव-

---

८२ नह्यत्र विकल्पतत्त्वमनुभवैक्यमयप्रमात्रात्मकं ब्रूमहे इत्याह सत्यासत्येति।

८३ ननु कार्यकारणभावादिव्यावहारिकरूपनिश्चयेऽनुभवमात्राद्प्रसिद्धेऽपि विकल्पा एव सन्तु प्रमाणं यथा नैयायिकप्रभृतयो मन्यन्ते, बाधाभावे हि किं कृतमप्रामाण्यम्, बाधयोगे तु द्विचन्द्रालातचक्राद्यनुभवस्यापि अप्रमाण्यम्, ततश्च बाधसत्तासत्तयोरेवावधातव्यम्, न तु एकप्रमातृतत्त्वेन समर्थितेन किंचित् – तत्कृत्यस्य विकल्पबलादेव सिद्धेः, अस्त्वेवं तावत् न ह्यत्र विकल्पतत्त्वमनुभवैक्यमयप्रमात्रात्मकं ब्रूमहे तथापि तु समस्तान्तर्बहिर्व्यवहारव्यापकसत्यासत्यप्रविभागनिश्चयनिबन्धनभूतोऽप्ययं बाधव्यवहारो न कथंचित्परदर्शने घटते, अस्मद्दर्शने तूपपद्यते एव, तत्र स्वपक्षे तावदुपपद्यमानतां दर्शयितुं सूत्रं–बाध्येत्यादि।

८४ यः समस्तव्यवहारसिद्धये सर्वेणाङ्गीकृतः सोऽपि नोपपद्यते, तथाहि नासौ विषयाणाम् असंनिहितस्यापि नतरां तदसौ ज्ञानानामेव वक्तव्यः, तानि च स्वस्मिन्विषये आत्मनि च स्वसंवेदने नियतस्थितिकानि अत्यन्तसन्तोषभाञ्जि मुनिमनांसीव इतरेतरं न विरुन्धन्ते परस्प-

श्यसमर्थो यो बाधव्यवहारः सोऽपि कथम् इति अपि-शब्दस्यार्थः,[85] [86] इह शुक्त्या तावत् रजतस्य न काचित् बाधा नाम क्रियमाणा दृश्यते,[87] शुक्तिज्ञानेन रजतज्ञानं बाध्यते इत्यपि न युक्तम्—स्वस्मिन् विषये आत्मनि च स्वरूपे[88] द्वयोः ज्ञानयोः परिनिष्ठितयोः विश्रान्तयोः अन्योन्यं विरोधस्य अभावात्। अथ अयमेव

---

रपरिहारेण वा सहेतुकविनाशोपगमे बुद्धिर्बुद्ध्यन्तरविरोधिनीतिनाश्यनाशकभावेन वा स्वसमयेऽन्यावकाशनिरोधेन वा, स्वसमये परकीयप्रमाणभावोपरोधेन वा, विरोधे ज्ञानं न किंचिदविरुद्धमस्तीति तादृग्विरोधोऽप्यविरोध एव मिश्रद्वयस्येव परस्परेण विरोधाभिधाननिबन्धनबध्यतायां तु बाधस्य नियतविषयत्वं न भवेत् इति विरोधोत्थापननिमित्तमनयोश्चिन्त्यम्, तच्चैकं विश्रान्तिस्थानं प्रमातृतत्त्वं नाम, तत्र हि विश्राम्यतां ज्ञानानां न एकरसैव सर्वत्र विश्रान्तिः, तथाहि घट इति पट इति ज्ञाने परस्पराभासानाश्लेषेणैव विश्राम्यतः—नीलमित्युत्पलमिति परस्पराभासोपरागप्रावण्येन, अग्नेर्धूम इति प्रयोज्यप्रयोजकसत्ताकत्वाभासनपुरःसरीक्रियया, एवमन्यदप्यूह्यम्, तत एव बाह्याभिमतप्रमेयांशासंभवि तत्स्वातन्त्र्येण उत्थाप्यमानं रूपम् अयं कुर्वन् प्रमायां स्वतन्त्रः प्रमाता भण्यते—इति ।

८५ न केवलमत्र कार्यकारणभाव एव यावत्सर्वत्र व्यवहार इत्यर्थः ।

८६ ननु शुक्तिरियं न रजतमित्यत्र बाध्यस्य रजतस्य दृष्टत्वात् कथं न बाधः इत्यत आह इहेत्यादि ।

८७ असंनिहितस्य रजतस्य काचिदपि न बाधा नाम, संनिहितस्य नतरामित्यर्थः ।

८८ स्वरूपे—स्वसंवेदने । ज्ञानयोरिति—मुनिमनसोरिवात्यन्तसंतोषभाजोः ।

विरोधि[89]ः परस्परपरिहाररूपः तर्हि सर्वेषां[90] ज्ञानानां विरोधात् बाध्यबाधकभावस्य परिनिष्ठैव न लभ्या—इति सुतरां विघटेत सत्येतर[91]प्रविभागः। न[92]ञपि अत्र तन्त्रेण व्याख्येयः। एतदुक्तं भवति—यदि ज्ञानं[93] स्वयं नश्यति तदा किं ज्ञाना[94]न्तरेण अस्य कृतं, न हि तेन[95] तत्कालेऽसंभवता तस्य[96] विषयापहारः कर्तुं शक्यः, न रजतम् इत्यपि ज्ञानं स्वं रजताभावं विषयीकुर्वत् न विषयम् अपहरेत् रजतज्ञानस्य। अथापि ज्ञानं ज्ञानान्तरेण नाश्यते इत्यपि पक्षः, तत्रापि सर्वेषां ज्ञानानाम् इयमेव स[97]रणिः—इति [98]किंचिदेव बाध्यम् इति कथं

८९ विरोध इति बुद्धिर्बुद्ध्यन्तरविरोधिनीति।

९० सर्वेषां—घटादिज्ञानानाम्।

९१ मिथ्याबुद्धिरेव प्रत्युत सत्यबुद्धिं तिरस्कुर्यादिति।

९२ नञपीति स्वात्मनिष्ठयोरन्योन्यं विरोधाभावादिति पूर्वत्र विरोधिशब्देन नञः संबन्धः, पुनश्च द्वितीयपक्षे यदि परस्परविरोधिनः तर्हि स्वात्मनिष्ठैव बाध्यबाधकभावस्य न लभ्येति तेनैव नञोऽन्वयः।

९३ रजतस्य इति शेषः।

९४ ज्ञानान्तरेण—शुक्तिकाज्ञानेन।

९५ तेन—शुक्तिज्ञानेन। तत्काले—रजतज्ञानकाले।

९६ तस्य—रजतज्ञानस्य रजतरूपस्य।

९७ बाध्यबाधकप्रकार इत्यर्थः।

९८ परिनिष्ठैव न लभ्येति यावत्।

स्यात्? यदा तु रजतज्ञानं शुक्तिज्ञानं च एकत्र[99] स्वसंवेदने विश्राम्यतः तदा एतत्[100] उपपद्यते, तथाहि—एकत्रापि प्रमातृतत्त्वे विश्राम्यतां ज्ञानानां नैकप्रकारैव विश्रान्तिः[101] अपि तु विचित्रतयैव सा संवेद्यते, तथाहि—नीलम् इति उत्पलम् इति ज्ञाने प्रमातरि विश्राम्यन्ती परस्परोपरागाभासेन[102] विश्राम्यतः। घट इति पट इति परस्परानाश्लेषेण[103] शुक्तिका इति न रजतम् इति वा ज्ञानं रजतम् इति ज्ञानस्य उन्मूलनं तदीयविमर्शात्मकप्रमारूपव्यापारानुवर्तनविध्वंसं कुर्वत् प्रमातरि प्रतिष्ठां भज-[104]

---

९९ विरोधोत्थापननिमित्तमनयोश्चिन्त्यं, तच्चैकविश्रान्तिस्थानं प्रमातृतत्त्वं नाम, तत्रैव स्वसंवेदने ।

१०० किंचिद्बाध्यमिति ।

१०१ सर्वत्रैव ।

१०२ परस्परमनयोर्विशेषणविशेष्यभावात् ।

१०३ उभयोरपि परस्परपरिहारात् ।

१०४ शुक्तिकेयं नेदं रजतमिति च ज्ञानं विश्राम्यदेव पूर्वविश्रान्तरजतज्ञानसर्वस्वभूतानुविवृत्सितं रजतमिदं सत्यमर्थक्रियाक्षमं मे भातमिति विमर्शात्मकप्रमाणफलानुवृत्तिं विध्वंसयति विध्वंसयच्च विश्राम्यति इत्येवं प्रमातरि या अन्यपरिवर्जनेन ज्ञानान्तरस्य नियता स्थितिः ततो हेतोः बाध्यता परिवर्जनीयस्य परिवर्जकस्य च बाधकता सिध्यति, यद्यस्य फलानुवृत्तिभङ्गं करोति तत्तस्य बाधकं सार्वभौम इवापरभूभुजां, तथा च नेदं रजतं शुक्तिकेयमिति वा ज्ञानं रजतज्ञानस्य बाधो नियतविषयो

ते। [105] एवं कार्यकारणभावादौ विश्रान्तिवैचित्र्यं प्रमेयासंभवि प्रमात्रा स्वातन्त्र्येण [106] निर्मितं तत एव अस्य प्रमास्वतन्त्रतादायि वाच्यम्। एवमेकत्र प्रमातरि पूर्वज्ञानस्य [107] परिवर्जनेन यतो निश्चिता [108] स्थितिः, अतो बाध्यबाधकव्यवहार उपपन्नः, नीलादिवत् [109] किल

---

भवन्नियतनिमित्ततया व्याप्तः, ततो विपक्षे तद्व्यापकाभावात् साध्येन हेतोर्व्याप्तिः सिद्धेति स्वभावहेतुः – ज्ञानद्वयमेकपदपतितं बाध्यबाधकभावाद्यन्योन्यापेक्षरूपयोगित्वात् इत्यपि स्वभाव एव एकपदपतितत्वाभावे नियमाभाव इति व्याप्तिः।

१०५ इहोपक्रान्तं चाह एवमिति।

१०६ स्वातन्त्र्येण – प्रयोज्यप्रयोजकसत्ताकस्वाभासनपुरःसरीक्रियया।

१०७ रजतज्ञानस्य।

१०८ शुक्तिज्ञानस्य।

१०९ नीलादिवदिति, अयमर्थः – अनेकस्वभावाभिः शक्तिभिर्व्यवहरन्नपि तत्तच्छक्त्यभेदतः शक्तिमत्स्वलक्षणत्वात् तेन तेन प्रकारेण शिवत्वस्य स्थितत्वादेक एव शिवः – इति मिथ्याज्ञानविकल्पनीयानां रजतसर्पादीनां व्यवहाराणां नीलादीनामिव चिद्व्यक्तिशक्तताप्रकाशमानता विद्यते, तदेव तेषां सत्वं परमार्थत्वं यतश्चिदभिव्यक्तेः तेन तेन रूपेण शिवस्यैवायं प्रसरः केवलं सम्यङ्मिथ्यात्वभेदो व्यवहारप्रयोजको घटज्ञानरजतज्ञानयोरिष्यते न पुनः परमार्थदृष्ट्या, न पुनर्व्यवहारसत्यतया परमार्थसत्यता बाध्यते, तथाहि सति सर्वथा सर्वत्र व्यवहारस्तथैव स्यात्, न च दृश्यते प्रत्यन्तदेशेषु सत्यसुवर्णस्यापि च अयं व्यवहारो दृश्यते तस्मात् परमार्थसत्यत्वमेव सत्यत्वं सर्वथा यत्प्रतिभातं तथैव तत् नान्यथा कर्तुं शक्यते इति सत्यमेव न किंचिन्मिथ्यात्वम् तस्मात्सिद्धमेतत्।

'या चैषा प्रतिभा तत्तत्पदार्थक्रमरूषिता।
अक्रमानन्तचिद्रूपः प्रमाता स महेश्वरः॥'

[११०] तानपि व्यवहारान् स एव परमेश्वरः स्वातन्त्र्यात् आभासयति तत् ते[१११]ऽपि सत्या ए[११२]वेति॥६॥

[११३] अत्र परकीयं मतम् आशङ्कते — दूषयिष्यामीति

विविक्त[११४]भूतलज्ञानं
घटाभावमतिर्यथा ।

---

इति । उक्तं च पूर्वगुरुभिः ।

'तस्मादनेकभावाभिः शक्तिभिस्तदभेदतः ।
एक एव स्थितः शक्तः शिव एव तथा तथा ॥
तथा यत्र सदित्येवं प्रतीतिस्तदसत्कथम् ।
यत्सत्तत्परमार्थो हि परमार्थस्ततः शिवः ॥
सर्वभावेषु चिद्व्यक्तेः स्थितैव परमार्थतः ।
मिथ्याज्ञानविकल्प्यानां सत्त्वं चिद्रूपशक्तिव्यक्तिता ॥
विद्यते तत्तदत्रापि शिवत्वं केन वार्यते ।
इति चेदेषु सत्यत्वं स्थितमेव चिदुद्गमात् ।
तथा शिवोदयादेव भेदो मिथ्यादिकः कथम् ॥
व्यवहाराय सत्यत्वं न च वा व्यावहारिकम् ।'

इत्यादि ।

११० रजतद्विचन्द्रादीन् ।

१११ येऽसत्यत्वेनाभिप्रेता इत्यपि-शब्दस्यार्थः ।

११२ एवकारोऽन्यव्यवच्छेदार्थः ।

११३ अत्र — बाध्यबाधकभावे । परकीयमिति, धर्मोत्तरोपाध्यायाभिमतं बाध्यबाधकलक्षणम् ।

११४ शुद्धं भूतलं घटाभावः तन्निबन्धनत्वात् घटाभावव्यवहारस्य, ततः शुद्धभूतलज्ञानमेव यथा घटाभावज्ञानं, तथैव शुक्तिज्ञानगतयथार्थप्रकाशनलक्षणप्रामाण्यसंवेदनमेव शुक्तिज्ञानस्वसंवेदनानतिरिक्तं यत्

**तथा चेच्छुक्तिकाज्ञानं**
**रूप्यज्ञानाप्रमात्ववित् ॥ ७ ॥**

इह शुक्तिकाज्ञानं स्वात्मानं संविदत् स्वात्माभिन्नं प्रमाणं बुध्यते, 'तत्[115]परिच्छिनत्ति' इति न्यायात्, तत्[116]परिच्छेदनान्तरीयकश्च अन्यव्यवच्छेद इत्यशुक्तिज्ञानरूपस्य रजतज्ञानस्य अप्रमाणत्ववेदनं तदेव उच्यते—यत् एतत् शुक्तिकासंवेदनाभिन्नप्रमाणत्ववेदनम्, न च एतत् अपूर्वं—यत् वस्त्वन्तरज्ञानमेव वस्त्वन्तराभावज्ञानम् इति, शु[117]द्धभूभागग्रहणमेव हि घटाभावज्ञानम् इति प्रसिद्धमेतत्। एवम् अ[118]प्रमाणतासंवेदनमेव रजतज्ञानस्य बाध्यत्वम् उच्यते, अतश्च बाध्यबाधकत्वम् एवं

---

प्रकाशते तदेवोच्यते, शुक्तिविपरीतरजतज्ञानगतायथार्थत्वस्वभावाप्रामाण्यसंवेदनं, स एव च बाध इति, किं तत्र प्रमात्रैक्येनेति परो ब्रूयादिति सूत्रार्थः। रूप्यज्ञानं—रजतज्ञानं, तस्य अप्रमात्वम्—अप्रामाण्यं तस्य वित्—वेदनम्, ज्ञानस्याप्रामाण्यवेदनमिति भावः।

११५ ततोऽन्यद्व्यवच्छिनत्तीति तद्विदः।

११६ नान्तरीयकः—अभिन्नः, अन्यव्यवच्छेदः—रूप्यव्यवच्छेदः।

११७ पूर्वंतामेवाह शुद्धेति।

११८ अप्रमाणता—अप्रामाण्यमित्यर्थः।

सिद्धम्, [११९] इति चेत् अस्माभिः उच्यते—तत् किंप्रमात्रैक्येनेति ॥ ७ ॥

अत्र प्रसङ्गात् अभावव्यवहारस्य सिद्धौ तत्त्वमुपपादयिष्यन् [१२०] दृष्टान्तमेव तावत् परदर्शने दूषयति

नैवं शुद्धस्थलज्ञाना-
तिसद्ध्येत्त [१२१] स्याघटात्मता ।
न तूपलब्धियोग्यस्या-
प्यत्राभावो घटात्मनः ॥ ८ ॥

यो दृष्टान्त उक्तः स एव न, कुतः? इति चेत् उच्यते—[१२२] इह भूतलं न घट इति तादात्म्येन अभावो व्यवहर्तव्यः [१२३] कदाचित्, कदाचित् व्यतिरेकेण 'इह भूतले घटो न' इति ।

---

११९ यदि परो ब्रूयात् ।

१२० दृष्टान्तं—विविक्तभूतलज्ञानमिति ।

१२१ भूतलस्याघटस्वभावता ।

१२२ अभावतत्त्वं प्रसङ्गागतमाह इहेति ।

१२३ एवं हि पिशाचस्यापि व्यतिरेकेणाभावः सिध्येत् अपिशाचतया भूतलस्य सिद्धिर्नैवं तदेव तत्रेति व्यवहर्तुमुचितं, सर्वदा वा तथा व्यवह्रियतां विशेषाभावादिति दृष्टान्त एवायमसङ्गत इति सूत्रार्थः ।

तत्र शुद्धभूतलज्ञानात् आद्योऽयं[124] व्यवहारः सिध्यति, यत्र दृश्यत्वं न उपयोगि, उपलब्धिलक्षणप्राप्तिरपि हि यस्य नास्ति पिशाचादेः — स्वभावबलात्, यस्य वा शब्दादेः [125]तद्ग्राहकश्रोत्रादिसामग्रीसा[126]कल्यस्य, [127]तत्र एकज्ञानसंसर्गिवस्त्वन्तरप्रतिपत्त्यभावेनापि निश्चयात् [128]तस्यापि तादात्म्येन अभावो व्यवहार्यः — भूतलं न पिशाचो न शब्दः इति, [129]यत्र तु दृश्यत्वं विशेषणम् अवश्यम् उपयोगि तत्र व्यतिरेकेण अभावे व्यवहर्तव्ये न [130]एषोऽभ्युपायः ॥ ८ ॥

---

१२४ तादात्म्येनाभावव्यवहारः ।

१२५ शब्दग्राहक इत्यर्थः ।

१२६ उपलक्षणप्राप्तिर्नास्ति इत्यन्वीयते, तेनायमर्थः — अभावव्यवहारे तादात्म्येन साध्ये भवत्ययं न्यायः 'भूतलं घटो न पिशाचो न शब्दो नेति' तत्र हि दृश्यत्वे स्वभावविशेषसामग्र्यभावादिना असंभवत्यपि, संभवत्येवाभावसिद्धिः ।

१२७ तत्र — शब्दादौ । एकज्ञानं शब्दज्ञानं तत्संसर्गि यद्वस्त्वन्तरं काकवाशितादि तस्य प्रतिपत्त्या श्रोत्रादिसामग्रीसाकल्यस्यानिश्चय इत्यर्थः ।

१२८ तस्यापीति पिशाचशब्दादेरित्यर्थः ।

१२९ उपलब्धिलक्षणोपलम्भयोग्यताधायि समस्तं कारणं प्राप्तस्य दृश्यस्य यदाभावः साधयितुमिष्ट इह भूतले घटो नेत्येवंरूपे, यत्रेति व्यतिरेकेण व्यवहारे ।

१३० तथात्वे हि पिशाचस्यापि व्यतिरेकेणाभावः सिध्येदिति नोक्तन्यायेनाभावसिद्धिः ।

कुतः? इति चेत्—अतिप्रसङ्गात् इति ब्रूमः, तमेव दर्शयति

विविक्तं[131] भूतलं शश्व-
द्भावानां स्वात्मनिष्ठितेः ।
तत्कथं जातु तज्ज्ञानं[132]
भिन्नस्याभावसाधनम् ॥ ९ ॥

विद्यमानेऽपि घटे भूतलं शुद्धमेव, नहि भावा मिश्रीभवन्ति ततश्च तदापि[133] शुद्धभूतलज्ञानम् अस्ति, इति सत्यपि घटे कथम् अभावो व्यतिरेकेण न व्यवह्रियते—अत्र भूतले घटो नास्ति इति, 'तज्ज्ञानमिति'[134] विविक्तभूतलभागज्ञानं 'जातु इति' कस्यांचिदेव दशायां घटासंनिधानरूपायां, भिन्नस्य घटस्य अभावं साधयति न तु सर्वदा—इति केन

---

१३१ भूतलस्य स्वभावभूतां यादृशीं विविक्तोपपन्नतामाश्रित्य यद्यर्थान्तरस्यापि घटादेरभावः साध्यते तदा घटादिसद्भावेऽपि असौ साध्यः स्यात् तस्यास्तदापि भावादित्याह विविक्तेति ।

१३२ विविक्तभूतलज्ञानम् ।

१३३ घटस्य विद्यमानत्वकालेऽपि ।

१३४ तच्छुद्धभूतलज्ञानं जातुचिदेव कथं भिन्नस्याभावसाधनमपि तु सदैव स्यात् तादात्म्याभावसाधनवदित्यर्थः ।

प्रकारेण भवेत्, [135] एतेन अत्र भूतले पिशाचो नास्ति इत्यपि स्यात्—इति आपतितं मन्तव्यम् ॥ ९ ॥

ननु एवं [136] व्यतिरेकाभावनिष्ठो व्यवहारो लोके तावत् [137] अविगीतः [138] कस्यांचित् एव दशायां दृष्टः, [139] तत्र का गतिः? इत्याशङ्क्य चिरन्तनैरपरिदृष्टं [140] तत्सिद्धिप्रकारं दर्शयति

> [141] किं त्वालोकचयोऽन्धस्य
>
> स्पर्शो वोष्णादिको मृदुः।

---

१३५ व्यतिरेकाभावेन।

१३६ व्यतिरेकेणाभावस्तन्निष्ठो व्यवहारोऽपीह भूतले घटो नेत्येवंरूपः।

१३७ आ बालाङ्गनाविद्वत्पर्यन्तं प्रसिद्ध एवेत्यर्थः।

१३८ घटासंनिधानरूपायामेव, न सर्वदेति।

१३९ 'विविक्तभूतलज्ञानं घटाभावमितियंथा।'
इत्यस्याभावे, न केवलप्रदेशज्ञानेन घटाभावसिद्धिरपि तु भूतलगतालोकादेरेव दर्शनादनालोकस्वरूपघटादिरूपतानिषेध इति प्रकारान्तरेणेत्यर्थः।

१४० अभावव्यवहारसिद्धिप्रकारम्।

१४१ ननु यदि शुद्धभूतलज्ञानं न घटाभावं साधयेत् तत्कथमयं व्यवहारो दृश्यते 'इह भूतले घटो नास्ति' इत्याशङ्क्यते चेत् मैवं—न केवलप्रदेशज्ञानेन घटाभावसिद्धिः किं तु प्रकारान्तरेण इति स्वमतेन प्रकारान्तरं दर्शयति 'किं त्वालोकेति'। ननु व्यतिरिक्ताभावप्रतीतिः सर्वलोकप्रसिद्धा,

तत्र[142]ास्ति साधयेत्तस्य[143]
स्वज्ञानमघ[144]टात्मताम् ॥१०॥

इह[145] भाव एव भावान्[146]तरस्य 'अभाव' इति व्यवहर्तव्यः इति अयं तावत् अपरित्याज्यः प्रातीतिकः[147] पन्थाः, तत्र भावस्य भावान्तरेण य आधार्याधारभावः स एव भावतदभावयोः, ततश्च[148] भूतले घटव्यतिरिक्तं वस्त्वन्तरं शिलो-[149]

---

सा च न सर्वदा, किं तु घटासन्निधिदशायामेव, तत्किमत्र शरणम्, इह यद्यतो न भिन्नं तत्ततो व्यतिरेकेण न व्यवहार्यं भूतलमिव भूतलात् तथा च घटाभावः, विपक्षे हि निर्निमित्तता तथा व्यवहारस्य प्रसज्येदिति कारणानुपलम्भनं, ततश्च भिन्न एव भूतलाद्य आलोकः स एव घटाभावो भूतलाधेयतया व्यवहरणीयः इत्येतदेवात्र शरणम् एतदुच्यतेऽनेन किं त्विति सूत्रेण ।

१४२ तत्र–भूतले ।

१४३ तस्य–आलोकादेः ।

१४४ न तु शुद्धभूतलज्ञानम्, क्वचिद्भूतलं दृष्टपूर्वं महाशिलादिकार्थान्तरावारितमुपलभ्य केवलमदृष्ट्वैव प्रत्यक्षादेव व्यवहरन्त्यपि नात्र निरन्तरो घट इति, तत्र यथा महाशिलैवाघटरूपेति तद्भाव एव घटाभावः तथैव सर्वत्रालोकादिरवश्यंभावी घटविलक्षणो घटाभावतया व्यवह्रियतां किं प्रदेशकेवलतयानुपपद्यमानयेति भावः ।

१४५ इह प्रस्तुते, भावः–शिलादिः ।

१४६ घटस्य ।

१४७ अनुभवसिद्धः ।

१४८ ततोऽपि किं सिद्धमित्यत आह ततश्चेति ।

१४९ घटरूपस्पर्शविलक्षणम् ।

दिकम् आलोकपुञ्जादिकं वा यत् चाक्षुषे ज्ञाने भाति तदेव व्यवह्रियते—[150] भूतले घटाभावो भूतले घटो नास्ति इति वा, यत्रापि नास्ति चक्षुर्व्यापारो नेत्रनिमीलनसंतमसादौ तत्रापि भूतले घटोचितकठिनस्पर्शविविक्तं मृदुम् उष्णं शीतम् अनुष्णाशीतं वा गृह्णन् तमेव अत्र घटाभाव इति [151] व्यवहरति—वायुस्पर्शस्य सर्वगस्य अवश्यंभावात्, इति वाक्यार्थः। पदार्थस्तु—'किं [152] तु' इति स्वमतोपक्षेपाय प्रतिभाप्रश्नपरामर्शः, किं पुनरत्र न्याय्यमिति [153] तत्राह 'तत्र' भूतले 'आलोकचयः' तावत् अस्ति ज्ञेयः 'अन्धस्य उष्णादिकः स्पर्शः' अस्ति 'तस्य' आलोकचयस्य स्पर्शस्य वा यत् 'स्वज्ञानम्' अन्यघटादिविविक्तेन स्वेन रूपेण ज्ञानं, तत्

---

१५० यदा भूतले घटव्यतिरिक्तं वस्त्वन्तरं शिलादिकं तदा महाशिलैवाघटरूपेति तद्भाव एव घटाभाव इत्युक्तम् भूतले घटाभावः, तथा यदि सर्वत्रालोकादिरवश्यंभावी घटविलक्षणो घटाभावतया चाक्षुषे ज्ञाने व्यवह्रियमाणतामेति तदा भूतले घटो नास्तीति।

१५१ ततश्च सिद्धमेतत्—भिन्न एव भूतलाद्य आलोकः स एव घटाभावो भूतलाधेयतया व्यवहरणीय इति।

१५२ भ्रूक्षेपपूर्वं मुखचालने इत्यर्थः।

१५३ आलोकचय इत्यादि।

कर्तृ, 'तस्य' आलोकादेः अघटरूपतां घटाभावरूपतां 'तत्र' भूतले साधयति इति शक्योऽयमर्थः । 'शकि लिङ् च' (पा०सू०३–३–१७२) इति लिङ् । [१५४] आन्तरप्राणस्पन्दनजनितसूक्ष्मशब्दाकर्णनाच्च श्रोत्रादिसाकल्यं संभावयमानः तमेव शब्दम् एकज्ञानसंसर्गिणं शृण्वन् शब्दान्तरं निषेधयति 'न इह अन्यः शब्द' इति ।तत् सूक्ष्मशब्दाभावमपि सूक्ष्मतमान्तर्नादावहितश्रोत्रो वेदयते, रसगन्धस्पर्शाभावोऽपि दन्तोदकरसं त्रिपुटिकागन्धं कायीयं च स्पर्शं संवेदयमानेनैव संवेद्यः, नहि एकज्ञानसंसर्गयोग्यवस्त्वन्तरोपलम्भेन विना उपलब्धिकारणसाकल्यनिश्चयोऽस्ति, इति एकान्त एषः अचिरप्रवृत्तितत्तद्विषयानुभवकल्पितस्य तदैव ध्वंसानाशङ्कनात् करणस्य कारणसाकल्यनिश्चयः किम् एकज्ञानसंसर्गितया? इति चेत् न—तत्तदभावोपलिप्सुः हि प्रय-

---

१५४ ननु च व्यतिरेकेणाभावसाधनेऽस्तु चाक्षुषे विषये आलोकचयादेरेवंरूपता, सन्ति च रसगन्धस्पर्शशब्दास्तद्विषयव्यतिरेकाभावसाधने का गतिरित्याशयेनाह आन्तरेत्यादि ।

त्वेन तत्तदिन्द्रियाधिष्ठानं व्यापारयन् एव लक्ष्यते ॥ १० ॥

ननु एवम् अदृश्यस्यापि[155] पिशाचादेः निषेधव्यवहारो व्यतिरेकेणापि प्राप्नोति, स हि आलोकपुञ्जो[156] यथा घटात् अन्यः तद्वत् पिशाचादेरपि? तदेतत् आशङ्क्याह

पिशाचः[157] स्यादनालोको-
ऽप्यालोकाभ्यन्तरे यथा।
अदृश्यो भूतलस्यान्त-
र्न निषेध्यः स सर्वथा ॥ ११ ॥

आलोकपुञ्जो यद्यपि पिशाचात् व्यतिरिक्तो यद्यपि च आलोकोऽस्ति अपिशाचात्मा

---

१५५ अदृश्यस्येति—इह भूतले पिशाचो नास्तीति, तादात्म्याभावस्तु स्वसिद्ध एवेत्यपिशब्दार्थः। निषेधव्यवहारः—अभावव्यवहारः।

१५६ आलोको घटाभाव इति कृत्वा प्रदेशे तन्निश्चयाक्षिप्तो यथा घटाभावव्यवहारः तद्वत्पिशाचाभावोऽपि आलोकस्यैव-पिशाचाभावरूपत्वादित्यर्थः।

१५७ अत्रैतत् सिद्धं भवति—किंत्वालोकचय इत्यत्र किं तादात्म्याभावः साध्यः अथ व्यतिरेकाभावः, यदि तादात्म्याभावस्तर्हि सिद्धं समीहितं—पिशाचादेरपि तथारूपत्वात्, अथ व्यतिरेकाभावः तदा पिशाचादेरपि अभावव्यवहारः—इह भूतले पिशाचो नास्तीत्येवंरूप आयातीति कात्र गतिः? इत्याशङ्काशमनार्थं सूत्रं—पिशाच इति।

इत्येतावत् सिद्ध्यति तथापि[158] अत्र[159] 'पिशाचो नास्ति' इत्येतत् अशक्यम् अध्यवसातुम्, घटो हि आलोकपूरमध्येऽपि असंभाव्यः—अघट-संनिधौ तत्र आलोकपूरापसर्पणात्, अतश्च सिद्ध्यतीदम्—अत्र घटो नास्ति इति, पि-शाचस्तु तादृक्स्वभावो—यो भूतलमध्येऽपि आलोकमध्येऽपि वा भवन् भूतलस्य आलो-कस्य वा तां निबिडतां न प्रतिहन्ति, अतश्च आलोकमध्ये तस्य संभावनात् कथं व्यतिरे-केण निषेधव्यवहारः, एवं रूपमध्ये रसादेः संभावनात् तस्यापि अनिषेधः यद्यपि[160] अना-लोकः आलोकात् अन्यः पिशाचः तथापि असौ भूतलस्य अन्तर्मध्येऽदृश्यो भवति इति संभाव्यते यथा, तद्वत् एव आलोक-स्याभ्यन्तरे सोऽस्ति इति संभाव्यत एव, ततश्च यद्यपि आलोकस्ततोऽन्यः इत्यनेन

---

१५८ इति तादात्म्याभावसिद्धिः, तादात्म्याभावसिद्धमर्थं प्रसाध्य व्यतिरेकाभावसिद्धिर्नात्र सिद्ध्यतीत्याह तथापीति ।

१५९ अत्र—भूतले ।

१६० पदार्थमुक्त्वा वाक्यार्थमाह यद्यपीति ।

पथा निषिद्धः[१६१] पिशाचः तथापि सर्वप्रकारेण न निषिद्धः इति तदभाव[१६२]निबन्धनाः कथं तत्र व्यवहाराः प्रवर्तन्ताम् इति श्लोकार्थः ॥ ११ ॥

[१६३]एवं प्रसङ्गात् अभावव्यवहारस्य तत्त्वम् उपदर्श्य प्रकृते योजयति

एवं रूप्यविदाभाव-
रूपा शुक्तिमतिर्भवेत् ।
न त्वाद्यरजतज्ञप्तेः
स्यादप्रामाण्यवेदिका[१६४] ॥ १२ ॥

यथा आलोको घटाभाव इति आलोके

---

१६१ अपिशाचो यद्यप्यालोकोऽस्ति इत्यत आलोको भवन् पिशाचो नास्ति इति व्यवह्रियेत तथापि न सर्वात्मना तदभावसिद्धिः । पिशाचाभावमात्रं हि न साध्यम् अपितु नियमेन भूतलान्तरेऽपि च संभाव्य एवासौ तदेवमालोकान्तरवर्ती स स्यादेवेति शङ्कायामर्थनीयो नियमगर्भतया विवक्षिते स तादृशो न तदभावनिश्चय इति परदर्शन एवोक्तं, स्वमते पुनर्न कश्चिद्दोष इति सूक्ष्मविवेकेन विवेच्यम् ।

१६२ पिशाचाभावकारणकाः ।

१६३ प्रकृतं चात्र सर्वसत्यत्वं तत्र विविक्तभूतलज्ञानमित्यादिना धर्मोत्तरोपाध्यायमतस्यासत्यत्वं सम्यङ्निर्णीय सत्यत्वदार्ढ्यार्थमेवाह एवमिति ।

१६४ शुक्तिमतिरित्यन्वेतव्यम् ।

गृहीते प्राक्[१६५] गृहीतस्य घटस्य न किंचित् आयातम् तथैव शुक्तिज्ञानं रूप्यज्ञानाभाव इति इयत् संभाव्यते यथा घटज्ञानं घटज्ञानप्रामाण्यसंवित् पटज्ञानाभावः पटज्ञानाभावप्रामाण्यसंवित् इयता च न पूर्वप्रवृत्तं पटज्ञानम् अप्रमाणीभवति, एषा हि तस्य घटज्ञानस्य[१६६] स्वरूपचिन्ता सर्वा न ज्ञानान्तरस्य आद्यस्य[१६७] किमपि अतो[१६८] जातम् । एवं शुक्तिरियम् इति, न रजतम् इदम् इति च ज्ञानमेव स्वात्मना[१६९] प्रकाशताम्, अहं शुक्तौ रजताभावे च प्रमाणं न तु रजते इति, तावता तु प्राक्तनस्य रजतज्ञानस्य न किंचित्

१६५ एतदुक्तं भवति—यद्यत्र प्रमाणभूतशुक्तिकारजताभावान्यतरज्ञानप्रामाण्यसंवेदनमेव तदन्यरजतज्ञानप्रामाण्याभावज्ञानं सिद्धमेवेति सममेवोभयत्र पक्षे, तथापि शुक्तिकाज्ञानस्य नेदं रजतमिति ज्ञानस्य वा स्वरूपचिन्ता कृता भवति न तु ततो व्यतिरिक्तस्याद्यरजतज्ञानस्य किंचित् खण्डितं मण्डितं वेति विशेष इत्याह प्रागगृहीतस्य घटस्येत्यादि ।

१६६ एवंविधं घटज्ञानमिति घटस्यैव स्वरूपं चिन्त्यते इत्यर्थः ।

१६७ रजतज्ञानस्य ।

१६८ शुक्तिकामतेः ।

१६९ रजताभावज्ञानरूपेण ।

पं० १० ग० पु० एवं शुक्ताविति पाठः ।

वृत्तम्, इति तद्विषयीकृतं रजतं कथम् असत्यं[170] स्यात् ॥ १२ ॥

ननु[171] इदमित्यनेन तदेव परामृश्यते—यत्र रजतज्ञानम् अभूत् तत्रैव इदानीं 'न रजतम् इति, शुक्तिः इति' च ज्ञानं प्रमाणभूतं जातं, तत् अतोऽनुमीयते—यत् 'प्राच्यं रजतज्ञानम् अप्रमाणम्' इति, नहि एतत् संभवति—विरुद्धविषयावगाहि ज्ञानद्वयं[172] प्रमाणम् एकत्र विषयीभवति इति, तत् अयम् आनुमानिको

---

१७० असत्येकप्रमातरीति शेषः ।

१७१ यदुक्तं शुक्तिरियं नेदं रजतमिति स्वात्मना ज्ञानमेवं प्रकाशताम् अहं शुक्तौ रजताभावे च प्रमाणं न तु रजत इति, तावता तु प्राक्तनस्य रजतज्ञानस्य न किंचिद्वृत्तमित्यत्र लब्धावसरः पर आक्षिपति नन्विदमित्यनेनेति, अयं भावः—यदि चैतावता प्राक्तनस्य रजतज्ञानस्य न किंचिद्वृत्तं तर्हीदमिति किमर्थं प्रयुज्यते शुक्तिः रजतं नेत्येव प्रयुज्यतां न च तावतार्थसिद्धिः तत इदमित्यनुप्रयोगात्, यत्र रजतज्ञानमभूत् तदेवेदमिति निर्दिश्यते इत्यतः शुक्तिरिति न रजतमिति च प्रमाणभूतं ज्ञानं जातम् इदमिति च प्राच्यं रजतज्ञानमप्रमाणभूतं जातमित्यनुमानसिद्धो बाधव्यवहारः ॥

१७२ ननु चेदमित्यपि प्रयोगे कथं नेदानीमुदितं प्रमाणभूतमेव ज्ञानं गृह्यते किमिति प्राच्यमपि गृह्यते इत्यत आह नहीत्यादि । असंभवमेवाह विरुद्धेत्यादिना । विरुद्धविषयत्वं च तदानीन्तनेदानीन्तनगत्या ज्ञानद्वयं प्रमाणाप्रमाणरूपमिति, तदयमर्थः—न चैकमेकदा रूपद्वययोगि इति न ज्ञानद्वयं प्रमाणं भवितुमर्हतीति ।

[१७३]बाधव्यवहारो भविष्यति? इत्याशङ्क्याह

[१७४]धर्म्यसिद्धेरपि भवे-
द्बाधा नैवानुमानतः ।
स्वसंवेदनसिद्धा तु
युक्ता सैकप्रमातृजा ॥ १२ ॥

न [१७५]केवलं स्वसंवेदनात् न सिद्ध्यति बाधा, यावत् अनुमानतोऽपि न सिद्ध्यति—धर्मिणोऽसिद्धेः, अपिशब्दात् हेतोः [१७६]व्याप्तेश्च, अपिः [१७७]उभयत्र नेयः, [१७८]इह धर्मिणि [१७९]सिद्धे सिद्धेन हेतुना स्मर्यमाणव्याप्तिकेन [१८०]साध्यधर्मायोगव्यवच्छेदकोऽनुमानव्यापारः इह च प्राच्ये

१७३ अक्रमत एकाश्रयनिरूपणेनेत्यर्थः ।

१७४ तत्र यदुक्तमिदमित्यनेन तदेत्यनुमानं तन्नोपपद्यते अस्ति च बाधः सोऽस्मन्मत एवोपपन्न इति पूर्वोत्तरार्धाभ्यामाह धर्म्यसिद्धेरिति स्वसंवेदनेत्यादि च । अत्रापिशब्दः सर्वतोमुखः संबन्धनीयः समुच्चयार्थोऽपि च तेन हेत्वसिद्धेरपीति बोध्यम् ।

१७५ विविक्तं भूतलमित्यनेन ।

१७६ असिद्धेः ।

१७७ अनुमानत इत्यत्रापि संबन्धार्थम् ।

१७८ धर्मिहेतुव्याप्त्यसिद्धतयानुमानासिद्धतामाह इहेति ।

१७९ सति धर्मिणि धर्मचिन्तेति न्यायात् ।

१८० साध्यधर्मायोगव्यवच्छेदः साध्यधर्म एवेत्यर्थः ।

रुप्यज्ञाने धर्मिणि अप्रामाण्यं साध्यो धर्मः तत्र[१८१] शुक्तिकाज्ञानं वा, न रजतम् इति ज्ञानं वा, तज्ज्ञानविषयीकार्यत्वं वा विषयगतं हेतूक्रियते, न च एतत् युक्तम्—तत्काले[१८२] प्राच्यरुप्यबोधस्य धर्मिणोऽभावात्, न[१८३] चापि तस्य शुक्तिज्ञानादयो धर्माः, न च[१८४] अपक्षधर्मात् साध्यसिद्धिः, अतः[१८५] स्मर्यमाणं तद्धर्मि[१८६] स्यात् इत्यपि असत्[१८७], अथ शुक्तिः न रजतज्ञानस्य विषय इति साध्यते शुक्तिकाज्ञानविषयत्वात् इति, तत् यदि इदा-[१८८]नीम् तत्सिद्धसाधनम्[१८९], अथ पूर्वम् तदा तत्पूर्वस्वसंवेदनेन बाध्यविषयता केन[१९०] चैवं

१८१ साध्यधर्मिणि ।
१८२ शुक्तिज्ञानकाले ।
१८३ अन्यबाधमप्याह न चेति ।
१८४ संदिग्धसाध्यवान् पक्षः ।
१८५ अपक्षधर्मत्वात् ।
१८६ रुप्यज्ञानम् ।
१८७ अपक्षधर्मत्वात् ।
१८८ शुक्तिकाज्ञानावसरे ।
१८९ विफलमित्यर्थः ।
१९० असति चैकप्रमातरीति शेषः ।

पं० ५ क० ग० पु० बाध्यस्य धर्मिण इति पाठः ।

व्याप्तिर्गृहीता—यत्र इदानीम् अन्यत् ज्ञानम् तत्र पूर्वम् अन्यत् न भवति इति, अनुमानान्तरेण इति चेत् अनवस्था, एतेन एतत् प्रत्युक्तम्—एकस्मिन् विषये कथं ज्ञानद्वयं स्यात् इति, को[१९१] हि एकविषयतां द्वयोः ज्ञानयोः जानीयात्, ते[१९२] हि तावत् स्वात्मनि स्वविषये च विश्राम्यत इति उक्तम्, इति अनुमानतोऽपि न बाधा, न च[१९३] तथाभूतमपि व्यवधानम् अत्र प्रतीतौ संवेद्यते—स्वसंवेदनसिद्धतया झटिति भासनात्, अत एव एतदपि अशक्यं वक्तुम्—माभूत् बाधा नाम इति। एवं परपक्षेऽनुपपत्तिं प्रदर्श्य स्वपक्षे एकप्रमातृपरिनिष्ठितेः उदियात् बाध्यबाधकभाव इति वाक्येन प्रतिज्ञातं निर्गमयति[१९४]—युक्ता सा एकस्मात् प्रमातुः यदि जायेत इति, स एव हि तथा निर्माता इति व्याख्यातमेव, स्थिते चैवं यदि व्यवहार-

---

१९१ एकप्रमात्रभावे।

१९२ ज्ञाने।

१९३ सुहृत् भूत्वा पुनरपि शिक्षयति न चेति।

१९४ साधनेनोपसंहरति।

सिद्धयेऽन्यथा[१९५]नुपपत्तिरप्युच्यते तत् उच्यतां कामम् 'अधुना सर्वं सिद्धयति' इति ॥ १३ ॥

[१९६] न केवलमेते कार्यकारणभावस्मरणबाधाव्यवहाराः सकललोकयात्रासामान्यव्यवहारभूता एकप्रमातृप्रतिष्ठा, याव[१९७]त् अवान्तरव्यवहारा अपि ये क्रयविक्रयादयः समलाः, उपदेश्योपदेशभावादयश्च निर्मलाः, तेऽपि एकप्रमातृनिष्ठा एव भवन्ति – व्यवहारो हि सर्वः समन्वयप्राणः इति उपसंहारक्रमेण दर्शयति

---

१९५ अन्यानुपपत्तिर्बाध्यबाधकत्वनिर्माणं करोति द्वयोर्ज्ञानयोः प्रमाणभूतयोरेकत्र विषयेऽनुपपत्तिः पूर्वज्ञानस्याप्रामाण्यं विना ।

१९६ उक्तानुवादपूर्वं वर्तिष्यमाणविधेयमभेदप्रतिपत्त्यै न केवलमित्यादिनाह ।

१९७ व्यवहारो हि द्विधा – समलो मायान्धानां सकलप्रलयाकलविज्ञानाकलानां, यदागमः

'अवस्थात्रितयेऽप्यस्मिंस्तिरोभावनलीलया ।
शिवशक्त्या समाक्रान्ताः प्रकुर्वन्ति विचेष्टितम् ॥'

इति क्रयविक्रयविवादादिः समलः, निर्मलः पुनः प्रत्यभिज्ञातात्मपरमार्थानां पारमेशरूपावेशलाभाद्विशेषदृशि वीरेशव्यपदेशानां न तु लाकुलादिपशूनां विद्येश्वरप्रभृतीनां दीक्षितपर्यन्तानामुपदेशदीक्षानित्यनैमित्तिकाद्यनुष्ठानध्यानसमाधानादिव्यवहारः यद्यपि तत्रापि यावन्मलशेषावस्थानं मायाव्यापाराविगलनात् अतश्च तथा येन व्यवहाररूपता सा हि भेदाभेदप्राणितसमन्वयात्मा सर्वथा भेदतिरोधौ धीयते एव तथापि प्रत्यभिज्ञातस्वरूपाणां यावत्परमात्मना स व्यवहारः स्वपरमात्मनि मलशोधनबोधनैकधनत्वाद्विमल एव युक्त इति भावः ।

इत्थमत्यर्थभिन्नार्था-
वभासखचिते विभौ ।
समलो विमलो वापि
व्यवहारोऽनुभूयते ॥ १४ ॥

'तत्तद्विभिन्नेति'[198] श्लोकद्वयोक्तेन अनेन उपपत्तिप्रकारेण, अन्वयव्यतिरेकात्मना, तथा श्लोकान्तरैरुक्तेन व्यवहारोदाहरणप्रकारेण इदमपि मन्तव्यम्—यत् विभौ देशकालानवच्छिन्ने, अत एव अत्यर्थभिन्नैः[199]—मायाबलात् भेदैकप्राणितैः नीलसुखाद्याभासैः प्रतिबिम्बकल्पैः अनतिरिक्ततया[200] वर्तमानैः, खचिते—स्वरूपानन्यथाभावेन[201] उपरक्ते, विश्रान्तः सर्वो व्यवहारोऽनुभूयते—अनुभव एव अत्र दृढतमं प्रमाणम् इति यावत्, अनुभूयते[202] च सोप-

१९८ तत्तद्विभिन्नेति देशकालेति च सूत्रान्तरनिरूपितकार्यकारणभावाद्युदाहरणप्रकारेण ।

१९९ मायाशक्त्युपकल्पितचिदभेदाख्यातिसारभेदमात्रपरमार्थैः ।

२०० भेदाभेदाभ्यां 'नाप्रकाशः प्रकाशते' इति न्यायात् । तथाभिन्नत्वेन अनतिरिक्तैरपि अतिरिक्ताभासैः ।

२०१ विभोः स्वरूपमन्यथा न भवतीत्यर्थः ।

२०२ मूढानां झटिति तथाभिमानाभावेऽपि उक्तोपदेशपरिशीलनदिशा प्रकाशत एवार्थ इत्यर्थः ।

देशैः अवधानधनैः—येन एषां यैव संसारसं[203]मता व्यवहारदशा सैव प्रमातृतत्त्वप्रख्यात्मिका शिवभूमिः[204] । यदुक्तम्

'...............संबन्धे सावधानता[205] ॥'

---

२०३ अनवहिताभीष्टा ।

२०४ शुद्धसर्वज्ञसर्वकर्तृत्वमयात्मकशिवभूमिः ।

२०५ 'ग्राह्यग्राहकसंवित्तिः सामान्या सर्वदेहिनाम् ।
योगिनां तु विशेषोऽयं संबन्धे सावधानता ॥'

इति शिवोपनिषदि, तत्रायं भावः—इह हि नीलं गृह्णतः प्राणस्तुटिषोडशात्मा वेद्यावेशपर्यन्तमुदेति, तत्राद्या तुटिरविभागैकरूपा, द्वितीया ग्राहकोल्लासरूपा, अन्त्या ग्राह्याभिन्ना, तन्मयी उपान्त्या स्फुटीभूतग्राहकरूपा, मध्ये यत् त्रुटिद्वादशकं तन्मध्यादाद्यं षट्कं निर्विकल्पस्वभावं विकल्पाच्छादकं परं च षट्कं विकल्पोन्मेषादिरूपकम् । यदा तु विकल्पस्य स्वरूपपक्षे निक्षेपात् न्यूनता तदा तुटेरपि प्रमातृत्वास्था शैथिल्यरूपा न्यूनता यावद्विकल्पतैव, लोकाः पुनर्विकल्पविश्रान्त्या तामहन्तामयीमहन्ताच्छादितेदंभावविकल्पप्रसरां निर्विकल्पां विमर्शभुवमप्रकाशितामिव मन्यन्ते दुःखावस्थां सुखविश्रान्ता इव विकल्पनिर्ह्रासेन तु सा प्रकाशत एवेतीयमेवासौ 'संबन्धे सावधानता' इत्याहुर्गुरवः, ग्राह्यग्राहकयोर्द्वयोर्यत उदयः यत्र वा विश्रान्तिस्तत्रावहितत्वमित्यर्थः, एतदेव तुटिपातसंज्ञया तत्रभवद्भट्टकल्लटपादैर्निरूपितं 'तुटिपाते सर्वज्ञत्वसर्वकर्तृत्वलाभः' इति, तत्र यावत् स्फुटेदन्तात्मनो भेदस्य न्यूनता तावत् द्वयह्रासे द्वितुटिः शिवावेशो भवति, तत्राद्या तुटिः सर्वतः पूर्णा द्वितीया सर्वज्ञानकरणाविष्टाभ्यस्यमाना सर्वज्ञत्वसर्वकर्तृत्वाय कल्प्यते, सर्वसाम्याद्धि नाद्या, तदेवं तुटेराद्यायाः पातोऽपचयो द्वितीया तुटिरित्यर्थः । तदेतदत्रोक्तमनुभूयते चेत्यादि—शिवभूमिरित्यन्तम्, इयमेव च शुद्धविमर्शात्मिका भूमिः वसिष्ठेनापि

'ग्राह्यग्राहकसंबन्धे सामान्ये सर्वदेहिनाम् ।
योगिनः सावधानत्वं यत्तदर्चनमात्मनः ॥'

इति । अप्रत्यभिज्ञातात्मपरमार्थानां समलो व्यवहारः, अन्येषां स एव निर्मलः ॥ इति शिवम् ॥ १४ ॥ आदितः ॥ ७७ ॥

इति श्रीमन्माहेश्वराचार्यवर्योत्पलदेवपादविरचितायामी-
श्वरप्रत्यभिज्ञायां श्रीमदाचार्याभिनवगुप्तकृतविम-
र्शिन्याख्यव्याख्योपेतायां प्रथमे ज्ञाना-
धिकारे एकाश्रयनिरूपणं नाम
सप्तममाह्निकम् ॥ ७ ॥

---

इति निर्दिष्टा । तथा

'जडाजडदृशोर्मध्ये यत्तत्त्वं पारमार्थिकम् ।
अनन्ताकाशहृदयं तत्सदाश्रय सर्वदा ॥'

इति च ।

## अथ ज्ञानाधिकारे माहेश्वर्यनिरूपणाख्यं नामाष्टममाह्निकं प्रारभ्यते ।



स्वसंवेदनसंसिद्धव्यवहारवशेन यः ।
नित्यं महेश्वरः सिद्धः सिद्धानां तं स्तुमः शिवम् ॥

एवं ज्ञानस्मरणापोहनानि व्युत्पाद्य तेषाम् 'एकमाश्रयं विना व्यवहारो न युक्तः' इति निरूपितम् एतावता,

'न चेदन्तः कृता........................ ।'

इत्यत्र यत् उक्तम् 'एक' इति तत् परिघटितम् । अन्तराभाससमर्थनेन 'अन्तःकृतानन्तविश्वरूप' इत्यपि निरूपितम् । यत् तत्रैव 'महेश्वर' इति उक्तम् तन्माहेश्वर्यं स्वातन्त्र्य-

---

१ शक्तिभूतत्वात् शक्तिमन्तं विनानवस्थानात् ।

२ 'न चेदन्तः कृतानन्तविश्वरूपो महेश्वरः ।
स्यादेकश्चिद्वपुर्ज्ञानस्मृत्यपोहनशक्तिमान् ॥'

इति प्रतिज्ञातं, तत्र ज्ञानस्मृत्यपोहनशक्तित्रयमाह्निकत्रयेण समर्थितम्, अनेन एकाश्रयनिरूपणाह्निकेन तत्र यदुक्तम् 'एक' इति तदपि समर्थितं, तृतीयसिद्धान्तनीत्या च तत्रैकस्मिन् 'अन्तः कृतानन्तविश्वरूप' इत्यपि स्वयं सिद्धमेव, यत्पुनस्तत्र 'महेश्वर' इति पदं तत्समर्थनावसरोऽयं प्राप्त इति तदपि समर्थयति ।

रूपम् उपपादयितव्यम्, तच्च[3] ज्ञानविषयं क्रियाविषयं च इति उभयप्रकारम्[4], ततो भगवान् ज्ञाता कर्ता च, यद्यपि च प्रकाश-विमर्शात्मकं चिदेकघनम् एकमेव संविद्रूपम्, तथापि व्युत्पादनाय[5] तत्परिघटित एव अयं विभागः[6], तेन ज्ञानात्मकक्रियाविषयं स्वातन्त्र्यं[7] यद्यपि क्रियाशक्तिरूपम् तथापि ज्ञानाधिकार

---

३ तच्च—स्वातन्त्र्यमित्यर्थः । यदुक्तं पूर्वमेव

'कर्तरि ज्ञातरि स्वात्मन्यादिसिद्धे महेश्वरे ।
अजडात्मा निषेधं वा सिद्धिं वा विदधीत कः ॥'

इति ।

४ उभयप्रकारमिति

'शक्त्या गर्भान्तर्वर्तिन्या शक्तिगर्भं परं महः ।'

इति ।

'न शिवः शक्तिरहितो न शक्तिर्व्यतिरेकिणी ।
न हिमस्य पृथक् शैत्यं नौष्ण्यं वह्नेः पृथग्भवेत् ॥'

इति नयेन यद्यपि प्रकाशविमर्शात्मकमेकमेव संविद्रूपं मुख्यमिति किमिदं ज्ञानक्रियात्मकं द्वित्वं नाम, यतो ज्ञाने कृतौ च स्वातन्त्र्यमेव चित्त्वमित्येव परमार्थतः, तथा च ज्ञातृसत्तैव क्रिया क्रियास्वरूपमेव ज्ञानं तथा परप्रतीत्यै तदेव विभज्य विवक्षया ज्ञानक्रियाद्वयप्रतीतिरिति भावः।

५ व्युत्पादनाय—परप्रतिपत्तये इत्यर्थः ।

६ विभागः—ज्ञानक्रियारूप इत्यर्थः ।

७ आभासवैचित्र्यं हि क्रियात्मकं तच्च यद्यपि क्रियाधिकार एव प्रस्तावार्हं तथापि ज्ञानविषयादिह ज्ञानाधिकारे निर्णीयत इति न किञ्चिदवद्यमित्यर्थः ।

एव निर्णेतव्यं — तद्विषयत्वात्[8]। एवं च ज्ञातृश-ब्दार्थः प्रकृतितः[9] प्रत्ययतश्च संपूर्णतया नि-र्णीतो भवति। तत्र[10] ज्ञानं नाम स्वयं भेदि-ताभासभेदोपाश्रयनियन्त्रणासंकुचितम् 'अह-मिति' संवेदनम्। तत्र[11] आभासेषु यत् स्वा-तन्त्र्यं, तदेव ज्ञानशक्तिविषयं स्वातन्त्र्यं संप-[12]द्यते इति।

'तात्कालिकाक्षसामक्ष्य………………।'

इत्यादिना

'………………शुद्धे ज्ञानक्रिये यतः।'

इत्यन्तेन श्लोकैकादशकेन तत् निरूप्यते। तत्र आभासान्तरापेक्षी[13] च आभासोऽन्यथा वा इति श्लोकेन उक्त्वा, स[14] एव आभास

---

८ तद्विषयत्वात् — ज्ञानविषयत्वादित्यर्थः।

९ प्रकृत्या ज्ञानविषयत्वात् प्रत्ययेन च क्रियात्मकत्वात्।

१० ज्ञानक्रिययोः परस्परं संमेलनभावात् क्षीरजलयोरिव आचार्यो हंसीभूय विषयवैविक्त्येन तावत् ज्ञानस्वरूपं विवेचयति तत्रेति।

११ एवं प्रकृत्यर्थेन भेदिते ज्ञानस्वरूपे प्रत्ययार्थेन सह तत् संगम-यति तत्रेत्यादिना।

१२ संपद्यते — अर्थादायातीत्यर्थः।

१३ यथा कश्चिदाभासोऽन्यतमाभासमपेक्षते तथा अपरो नापेक्षत इति।

१४ अत्र तथापीति शेषः।

एक इति श्लोकान्तरेण उच्यते । अर्थक्रियाभासोऽपि तथैव आभासनियत इति श्लोकद्वयेन उक्त्वा कस्मिन् आभासे सा अर्थक्रिया इति पुनः श्लोकद्वयेन। आभासान्तरविचित्रस्य भित्तिस्थानीयम् आन्तरत्वम्[१५] इति श्लोकेन। ततो बाह्यत्वं स्वरूपतो विभागतश्च श्लोकयुग्मेन। ततः श्लोकेन ज्ञानादिशक्त्याश्रयस्य एकस्य उपसंहारः। श्लोकान्तरेण महेश्वरत्वम् उपसंहरता भाविनः क्रियाधिकारस्य उपक्षेप इति संक्षेपार्थ आह्निकस्य । अथ श्लोकार्थो निरूप्यते।

ननु यदि परमेश्वरनिष्ठतयैव समस्तोऽयं व्यवहारः तत् अस्य[१६] स्फुटत्वास्फुटत्वप्रायप्रसिद्धवैचित्र्यानुपपत्तिः—येन किल अयम्[१७] अनुप्राणितः स एक एव भगवान्, न च तद्व्यतिरेकेण व्यवहारस्य निजं किंचन तत्त्वम् उत्पश्यामः? इत्याशङ्क्याह

---

१५ आभासान्तरवैचित्र्ये भित्तिकल्पमान्तरत्वमिति।

१६ अस्य—व्यवहारस्येत्यर्थः।

१७ अयं—व्यवहार इत्यर्थः।

[18]तात्कालिकाक्षसामक्ष्य-
सापेक्षाः केवलं क्वचित्।
आभासा अन्यथान्यत्र
त्वन्धान्धतमसादिषु ॥ १ ॥
[19]विशेषोऽर्थावभासस्य
सत्तायां न पुनः क्वचित्।
विकल्पेषु भवेद्भावि-
भवद्भूतार्थगामिषु॥ २ ॥

केवलम् एतावता[20] आभासानां भेदो,[21] न पुनरर्थावभासस्य स्वात्मगतः क्वचिदपि भेद[22] इति श्लोकद्वयस्य संमेलितस्य संबन्धः, यस्मिन्[23] एव काले स आभास आभाति त-

---

१८ तत्कालभवं तात्कालिकं निकटवर्ति यदक्षसामक्ष्यम् ऐन्द्रियिकादिप्रत्यक्षं तदपेक्षमाणा इत्यर्थः। व्यवहारो भगवति सर्व इति सत्यमिदं तत्र वक्तव्यान्तरमुच्यत इति केवलपदम्। अन्यत्र तु अन्धादिव्यवहारे।

१९ आभासवैचित्र्यमुक्त्वा स्वात्मनि आभासैक्यमाह विशेष इति।

२० एतावता – सापेक्षत्वनिरपेक्षत्वादिना।

२१ तात्कालिकाक्षेत्यादिना एतदुक्तम्।

२२ विशेष इत्यनेन एतदुक्तम्।

२३ पदार्थमाह यस्मिन्नित्यादिना।

त्काले एव भवति, यत् अक्षसामक्ष्यं – बाह्येन्द्रियप्रत्यक्षत्वं नाम आभासान्तरं पश्यामीत्येवंरूपम् तत्सापेक्षाः[24] – तद्व्यामिश्राः क्वचित् आभासा भवन्ति, यत्र स्फुटताऽव्यवहारः अन्धविषयः – अन्धकारस्थप्रमातृविषयः पुनः योऽन्यो व्यवहारोऽस्फुटतामयः तत्र ते आभासा[25] अन्यथा, तथाहि – जात्यन्धस्य[26] बाह्येन्द्रियप्रत्यक्षत्वलक्षणम् आभासान्तरं नैव अस्ति, दृष्टवतस्तु अन्धीभूतस्य संतमसस्थितस्य च तात्कालिकं तत् नास्ति अपि तु प्राक्तनमेव बाह्येन्द्रियप्रत्यक्षत्वम् अनुसंधत्ते[27], तस्मात्[28] अर्थावभासस्य केषुचिदपि[29] विकल्पेषु स-

---

२४ तत्सापेक्षाः–आभासान्तरसापेक्षाः।

२५ तात्कालिकाक्षसामक्ष्यनिरपेक्षा इत्यर्थः, चिरवृत्तसंस्कारोत्थापितास्तदा ते आभासा न तात्कालिकमक्षसामक्ष्यमपेक्षन्त इत्यर्थः – पूर्वानुभवोत्थितत्वात्।

२६ जातिनयनहीनस्यापि रूपमित्याभासो जन्मान्तरप्रत्यक्षसंस्कारज एव, तत्र चिरवृत्तत्वेन तथा स्मरणात् अणूनामुच्यतां नाम स्वतन्त्रता निजाभासबहिष्करणविषया।

२७ अनुसंधत्ते – स्मरतीत्यर्थः।

२८ अतश्चेदं जातमित्याह तस्मादिति।

२९ केषुचिदपि – पश्यामीत्यादिरूपेषु – अर्थावभासस्य कालत्रयविषयेषु विकल्पेषु चान्तस्तुल्यत्वेनावस्थितत्वात्।

[३०]त्तायां—स्वरूपे विशेषोऽस्ति इति संभा[३१]वना न कर्तव्या, ते हि विकल्पा भाविवस्तुगामिनो वा भविष्यन्निष्ठा भवन्तु वर्तमाननिष्ठा वा अतीतवस्तुविश्रान्ता वा, ए[३२]तदुक्तं भवति—नीलमिदं पश्या[३३]मि, संकल्पयामि, उत्प्रेक्षे, स्मरामि, करो[३४]मि, वेद्मि इत्यादौ नीलाभासोऽसौ स्वरूपतोऽनूनाधिकः एवं पश्यामीत्येवं [३५]यैः पीतादिषु ते पुनराभासाः स्वातन्त्र्येण यदा भगवता संयोज्यन्ते वियोज्यन्ते च तदा अयं स्फुटत्वास्फुटत्वादिव्यवहारः; नील[३६]मित्याभासस्य उत्प्रेक्षे इत्याद्याभासान्तरव्यवच्छेदेन पश्यामीति आभासव्यामिश्रणायां स्फुटताव्यवहारः । एवं त्रैकालिकव्यवहारवैचि-

---

३० प्रकाशमानतैकसारे विद्यमाने ।

३१ संभावनायां भवेदित्यत्र लिङ्—अहमित्यामर्शेन सदातनप्रकाशत्वात् ।

३२ तात्पर्यार्थमाह एतदुक्तमिति ।

३३ पश्यामीति सापेक्षम्, संकल्पयामीति निरपेक्षम् ।

३४ करोमीति क्रियाप्रधानम्, वेद्मीति बाह्यनिरपेक्षम् ।

३५ असावपि स्वरूपतोऽनूनाधिक इत्यर्थः ।

३६ नीलमुत्प्रेक्षे इत्यत्र ।

त्र्योपपत्तिः । परमेश्वर[37]स्वरूपान्तर्भूतत्वे पुनराभासानां न कुतश्चित् व्यवच्छेदः—न केनचित् व्यामिश्रणा इति ॥ १ ॥ २ ॥

ननु एतत् नीलादिषु उपपद्यताम् यत्र बाह्येन्द्रियव्यापारोऽस्ति, सुखादौ तु तदभा[38]वात् कथं वैचित्र्यम्? इत्याशङ्क्याह

सुखादिषु च सौख्यादि-
हेतुष्वपि च वस्तुषु ।
अवभासस्य सद्भावे-
ऽप्यतीतत्वात्तथा स्थितिः ॥३॥

गाढ[39]मुल्लिख्यमाने तु
विकल्पेन[40] सुखादिके ।

---

३७ एष च स्फुटास्फुटतादिव्यवहारोऽपि सकलादिप्रमातृविश्रान्त एव न पुनः परमार्थप्रमातरीत्याह परमेश्वरेति ।

३८ तदभावात्—बाह्यप्रत्यक्षाभावात् । तदा च सुख-तत्साधनाद्याभासे स्थितेऽपि सर्वो निःसमीह एव स्यादिति ।

३९ वर्तमानावभासादर्थक्रियेत्याह गाढमित्यादि ।

४० विकल्पेन—केनचित् प्रयत्नविशेषेण ।

तथा स्थितिस्तथैव[41] स्या-
त्स्फुटमस्योपलक्षणात् ॥ ४ ॥

सुखे[42] स्रक्चन्दनादिके च तत्कारणे, दुःखे अहिकण्टकादौ च तद्धेतौ अतीतेऽनागते वा यद्यपि आभासः स एव[43] तथापि अतीतमिदम् अनागतमिदम् इति आभासान्तरेण यतो व्यामिश्रणा अनुभवामीति[44] आभासाच्च यतो व्यवच्छेदः तेन विद्यमानेष्वपि[45] तेषु तस्य प्रमातुः तेन[46] प्रकारेण स्थितिः न भवति, यथा पूर्वम् अभूत् अहम् अधुना सुखी दुःखीति समर्जिततत्तन्निमित्तसामग्रीको वा इति, यदा[47] तु विकल्पेन तानि वस्तूनि

---

४१ तथैव—सुखादिप्रकारेणैव ।

४२ सुखे साध्ये, स्रक्चन्दनादिके च तत्कारणे साधने, एवं दुःखे साध्ये, अहिकण्टकादौ च तद्धेतौ साधने ।

४३ अहन्ताभुवि हि सुखादिरूपाः सन्ति तदभावे हि आह्लादाद्ययोग इत्यतीतानागतयोरपि चाभासः सुख्यहमित्यादिरूपः स एव ।

४४ तत्र हि अतीतानागतत्वं बहिस्तदानीमभावरूपता, बहिस्तदानींतनता तु वर्तमानतेत्याह अनुभवामीति ।

४५ अतीनागतेषु आभासेषु ।

४६ अनुभवामीति वर्तमानतायामिव ।

४७ द्वितीयश्लोकव्याख्या इयम् ।

गाढम् उल्लिखति[48] तदा पौनःपुन्य[49]विशिष्टसु-
खतद्धेतूल्लेखनाभिधानकारणाभासानुप्रवेशात्
आभासान्तरव्यामिश्रणात्मना तेनैव[50] अस्मदु-
क्तेन प्रकारेण न पुनरन्येन तथा[51] इति सुखी
अहमित्यादिकेन स्थितिः भवति इति संभा-
व्यम्, उचितमेतत्—यतस्[52]तदानीं स्फुटत्वा-
भासमिश्रं सुखाभासम् उपलक्षयति असौ ।
[53]अतीतग्रहणं भाविनोऽपि उपलक्षणम् ॥३॥४॥

ननु इयता किमुक्तम् भवति—बाह्यरूपाः
स्रगादयः सुखादिहेतवो बाह्यजनिताश्च सु-

---

४८ उल्लिखति—विमृशतीत्यर्थः ।

४९ ततः पौनःपुन्येति निरन्तरोत्प्रेक्ष्यमाणे सुखाद्यावतीतेऽपि वा पर्यन्ते तथा स्थितिरत्यन्ताह्लादिरूपतया सा तेनैव प्रकारेण भवति नहि तदासौ स्मर्यमाणः अपि तु वर्तमान एव सुखाद्याभासः स्मर्यमाणस्य विकल्प्यत्वेनास्फुटाभासत्वं हि उचितम् अयं तु तदा स्फुटाभासरूप एवेति ।

५० तथैवेत्यस्यार्थः ।

५१ तथा स्थितिरित्यर्थः ।

५२ ननु स्मरणविकल्पेन विषयोऽस्य चेत् दत्तस्ततः कथं नातीतविषयता इत्यत आह यत इत्यादि । निरन्तरो हि विकल्पः प्राच्यांस्तु देशकालप्रमात्रन्तरसान्निध्यादीन् नाद्रियते ततः पूर्वताप्रमुखीकारेऽपि तदपहस्तनं जातमेवेत्युक्तं स्फुटत्वाभासमिश्रमिति । तदानीमिति पौनःपुन्येत्यादिकाले ।

५३ अतीतत्वात्तथा स्थितिरित्यत्र ।

खादयः सुख्यहमिति अभिमानहेतवः इति, ततश्च बाह्यत्वाभावे तज्जन्यत्वाभावे[54] च न तथा[55] इति उक्तं स्यात्, तत्र[56] च त एव न केचित्, ततश्च कथमुक्तम् 'अर्थावभासस्य सत्तायां[57] न क्वापि विशेषः' इति—सत्ताया एव अभावात्? इत्याशङ्क्याह

भावाभावावभासाना
बाह्यतोपाधिरिष्यते।
नात्मा[58] सत्ता ततस्तेषा-
मान्तराणां सतां सदा॥ ५॥

इह सुखमस्ति[59] मम, दुःखं नास्ति[60] ममेति ये भावाभासा अभावाभासाश्च तेषां बाह्यत्वं नाम आत्मा—स्वरूपं न भवति, नहि सुखमित्यस्य स्वरूपं 'बाह्यम्' इति वपुषा भाति,

---

५४ तज्जन्यत्वाभावे—स्रगादिजन्यत्वाभावे।

५५ स्रगादयो न सुखादिहेतवः सुखादयश्च न सुखी अहम् इत्याद्यभिमानहेतवः।

५६ तत्रेति बाह्यत्वाभावे।

५७ सत्तायां—स्वरूपे।

५८ आत्मा—स्वरूपम्।

५९ भावाभासोऽयम्।

६० अभावाभासोऽयम्।

सुखस्य हि सुखमेव[61] स्वरूपम् केवलं[62] बाह्यत्वं नाम आभासान्तरम् ईश्वरेण स्वातन्त्र्यबलादेव यदा तत्र सुखाभासे मिश्रतया भास्यते तदा तत्[63] तस्य उपाधिरूपताम् उपरञ्जकतां विशेषणत्वं गच्छति, ततश्च यथा नीलाभासाभावे उत्पलाभासस्य न किंचित् वृत्तं स्वरूपतो, राजाभासाभावे वा पुरुषाभासस्य, तथा बाह्यत्वाभासाभावेऽपि सुखाभासस्य दुःखाभावाभासस्य कान्ताभासस्य[64] च न स्वरूपतः काचन म्लानता इति आन्तराणां सदैव स्थितिः एषाम् ॥ ५ ॥

इह[65] अन्तःकरणे बुद्धिदर्पणात्मनि नीला-

---

६१ स्वं रूपं स्वमेव सुखत्वमेव रूपं सुखस्य न तु बाह्यता ।

६२ किं पुनर्बाह्यत्वमित्यत आह ततश्चेदं सिद्धमित्याह – केवलमित्यादि । अयं भावः – यद्यपि आभासा एव परमार्थतः सन्ति नार्था नाम केचनापि तथापि य एवाभासा बाह्यताभूमौ विच्छेदवन्तोऽन्तस्तायां न तथा त एवार्था इति व्यपदिश्यन्ते अनुभवसाक्षिकं चैतत् बोधात् हि अभिन्नास्ते यतस्तत एव भेदे न हि प्रकाशेरन्निति ।

६३ तत् – बाह्यत्वम्, तस्य – सुखादेः ।

६४ कान्ताभासस्य – तद्धेतुभूतस्य ।

६५ यदत्रोक्तमार्यैः – अर्थक्रियाकारित्वं सत्त्वमिति तदाचार्येण प्रमातृरूपतया सद्भावार्थमर्थानामभ्युपगतमेव, न बाह्यरूपतया एषां काचन स्थितिरिति यत एषामाभासानामान्तरत्वेन सदातनी सत्तेत्यर्थक्रिया-

दीनामवभासानाम् आन्तरत्वम्[६६]प्यस्ति — अन्तःकरणमध्येभ[६७]वत्वात्, बाह्य[६८]त्वमपि ग्राह्यतारूपं — प्रमातुः विच्छेदेन अवभासात्, बा[६९]ह्यत्वं च केवलं बाह्यप्रत्यक्षता, अत्र च अवस्थाद्वयेऽपि अर्थक्रियाम् अ[७०]मी कुर्वन्त्येव, अ[७१]न्ततो ज्ञानं स्वविषयम्। यत् पुनः प्रमातृतादात्म्यलक्षणम् आन्तरत्वं, तत्र अमी कस्मात् न कांचित् अ[७२]र्थक्रियां विदधीरन्? इत्याशङ्क्याह

आन्तरत्वात्प्रमात्रैक्ये
नैषां[७३] भेदनिबन्धना।

कारित्वमेव सत्त्वमियत्पर्यन्तं सुहृद्भूत्वा आचार्यस्तन्मतमिष्टवान्, अधुना तत्रापि विशेषान्तरं स्वमते निरूपयिष्यन् तान् प्रति आशङ्कापूर्वमाह— इह इत्यादि।

६६ आन्तरत्वमपि — तच्चावान्तरमिति बोध्यम्। अपिशब्दाद्बाह्यत्वं च।

६७ मध्येभवत्वात् — वर्तमानत्वात्।

६८ इदन्तया विभागात् इति शेषः।

६९ ननु च बाह्यता नाम पूर्वं प्रतिषिद्धा अधुना केयं बाह्यता नामेत्यत आह बाह्यत्वं चेति।

७० अमी — नीलाद्याभासाः।

७१ यदन्ततो ज्ञानं स्वविषयं तदेवैषामर्थक्रियाकारित्वमित्यर्थः।

७२ तदभावे च न सत्त्वमित्यर्थादापतितमिति बोध्यम्।

७३ एषां — पदार्थानाम्।

अर्थक्रियापि बाह्यत्वे
सा भिन्ना[७४]भासभेदतः ॥ ६ ॥

प्रमात्रैक्य इति—तन्निमित्तकं यत् आन्तरत्वं तस्मात् हेतोः, एषाम् आभासानाम् अर्थक्रिया[७५] न काचित् अस्ति, सा हि अर्थक्रिया भेदे सति भवति, स हि नीलाभासः पीताभासात् यतो भिद्यते यतश्च प्रमातुर्भिद्यते[७६] ततः स्वसाध्यां नियतां भिन्नाम् अर्थक्रियां तस्य प्रमातुः कुर्यात्, न च एष तदा[७७] भेदोऽस्ति—प्रमात्रैक्यात्, सा हि अर्थक्रियाभासभेदनिर्यता[७८], तथा च कान्ताभासस्य बाह्यत्वेऽपि सति आभासान्तरस्य आलिङ्गनलक्षणस्य व्यपगमे दूरीभवति, इयम् इति च आभासान्त[७९]-

---

७४ भिन्ना इति पृथक्पदम् ।

७५ अर्थक्रिया—अर्थः प्रयोजनं तस्य क्रिया निष्पत्तिः ।

७६ तेनात्र सार्थक्रिया अन्योन्यभेदेन प्रमातृभेदेन च संभवति अत्र तु तदुभयोरपि अभावात् कथमर्थक्रिया ।

७७ प्रमातृतादात्म्यलक्षणे आन्तरत्वे ।

७८ ततश्च कारणविरुद्धे हि अभेदे कथं स्यात् ।

७९ ततश्चेदमत्र सिद्धं भवति—अर्थक्रिया हि आभासभेदनिमित्तिका न बाह्यत्वनिबन्धना, तथा हि सति आलिङ्गनलक्षणाभासान्तरापगमेऽपि कान्ताभासस्य बाह्यत्वेन सत्ताकत्वादर्थक्रिया स्यात् न चैवं दृश्यते, तत-

रस्य उपगमेऽन्यैव प्राक्तनाह्लादविपरीता दृश्यते अर्थक्रिया, अत आभासभेदाभावः—यतः प्रमात्रैक्यकृते आन्तरत्वे तस्मात् न अर्थक्रिया इति, अर्थक्रियाभासोऽपि च आभासान्तरमेव इति अर्थक्रियाकारित्वमपि न भावानां सत्त्वम्, येन तदभावे स्वरूपत एव अभावः स्यात् ॥ ६ ॥

ननु च बाह्याभासव्यतिभेदनकाले[81] आन्तराभासो विरोधात्[82] विच्छिन्न इति कथम् इदम् उक्तम् 'आन्तराणां य आभासः स सदा'[83] इति? एतत् परिहरति

---

आभासनिष्ठत्वमेवार्थक्रियाया इत्याभास एव वस्तु इति मन्तव्यमर्थक्रियावादिनापि, अतश्चाभाससत्त्वसतत्त्वात् सत्त्वस्यान्तरत्वे भेदाभावादर्थक्रियाव्यपगमेऽपि सत्त्वं न व्यभिचरतीति एतदेवाभाससत्त्वं समर्थयति—आभासान्तरस्योपगम इत्यादिना, आभासान्तरस्य—भ्रूविक्षेपादेः ।

८० ततश्च किमधुना संपन्नमिति सर्वमागूर्याह—अर्थक्रियाभासोऽपि चेति, यथा कान्ताभासस्यालिङ्गनादिलक्षणाभासान्तरापगमेऽपि सत्तार्थक्रियाया अभावेऽपि, ततश्च सिद्धमर्थक्रियाभासोऽपि आभासान्तरमेव न वस्तुसत्त्वमिति, तथाहि सति सदैवान्तरत्वे नैषां स्वरूपतः सत्तास्तीत्याह—न भावानां सत्त्वमित्यादि ।

८१ व्यतिभेदनकाले—संभेदनकाले ।

८२ विरोधात्—एकस्यैवान्तरत्वबाह्यत्वलक्षणायोगात् ।

८३ '···सत्ता ततस्तेषामान्तराणां सतां सदा' इत्यत्र ।

चिन्मयत्वेऽवभासाना-
मन्तरेव स्थितिः सदा ।
मायया भासमानानां
बाह्यत्वाद्[८४] बहिरप्यसौ ॥ ७ ॥

इह अवभासानां सदैव बाह्यताभासतदभावयोः अपि अन्तरेव प्रमातृप्रकाश एव स्थितिः, यत एते चिन्मयाः[८५], अन्यथा नैव प्रकाशेरन् इति उक्तं यतः, यदा तु मायाशक्त्या विच्छेदनावभासनस्वातन्त्र्यरूपया बाह्यत्वम् एषाम् आभास्यते तदा तत्[८६] अवलम्ब्य अवभासमानानाम् असौ[८७] स्थितिः बहिरपि अन्तर[८८]पि, नायम् अन्तराभासो बाह्यत्वस्य वि-

---

८४ बाह्यत्वादिति ल्यब्लोपे पञ्चमी तदाश्रित्येत्यर्थः अपिशब्दो बाह्यत्वशिथिलतापादनार्थे तत्रापि आन्तर्येणावस्थितिराभासमात्ररूपत्वात् बाह्यस्थितेरित्याशयः ।

८५ चिन्मयाः—उभयत्र । अन्यथा—चिन्मयत्वाभावे । नैव प्रकाशेरन्निति । 'नाप्रकाशः प्रकाशते' इत्यतः ।

८६ तत्—बाह्यत्वम् ।

८७ असाविति शुद्धप्रकाशस्वरूपावस्थितिरित्यर्थः सैवान्तर्बहिर्व्यवहरणीयतां गच्छतीत्यर्थः, वस्तुतस्तु आन्तरमपि नाम न किञ्चित्—बाह्याभासापेक्षित्वात् तस्य, ततश्चासौ स्थितिरिति प्रक्रान्तापि पुनर्बहिरिति अन्तरिति चानूदिता । स्थितिः—प्रमातृप्रकाशस्थितिः ।

८८ इतिशब्दोऽत्राध्याहरणीयः ।

रोधी प्रत्युत सर्वाभासभित्तिभूतोऽसौ,[89] तत् कथं विरोधः? इति युक्तमुक्तम्—'सदैव आन्तराणां सत्ता' इति ॥ ७ ॥

ननु[90] बाह्यत्वे सति अर्थक्रिया, तच्च[91] बाह्येन्द्रियगम्यत्वम्, न च विकल्पोल्लिखितानां[92] तत्[93] संभवति, तत् कथम् अमीषाम्[94] अर्थक्रिया स्यात्, दृश्यते च विकल्पोल्लिखितः पिशाचादिः त्रासादिविधायी? इत्याशङ्क्याह

विकल्पे योऽयमुल्लेखः
सोऽपि बाह्यः पृथक्प्रथः[95] ।

---

८९ प्रमातृप्रकाशविश्रान्तत्वात् । असौ-अन्तराभासः ।

९० ननु किमिदमुच्यते—आन्तरत्वात् प्रमात्रैक्ये नैषा भेदनिबन्धना अर्थक्रियेति, अस्त्येवान्तरत्वेऽपि अर्थक्रिया—पिशाचादौ तथाव्याप्तिसमन्वयात् यदि न स्यात् तर्हि बाह्यप्रत्यक्षत्वमप्राप्तस्य पिशाचादेः कथमर्थक्रिया स्यात् ततश्चान्तरत्वं नामास्यार्थक्रियाबाधकत्वं न संभवति, यदि च संभवेत् तर्हि पिशाचादेः का सिद्धिरर्थक्रियाकारित्व इत्येतद्वाक्यार्थसमन्वयेनाह—ननु बाह्यत्व इत्यादि ।

९१ तच्च—बाह्यत्वम् ।

९२ विकल्पोल्लिखितानां—पिशाचादीनाम् ।

९३ तत्—बाह्येन्द्रियगम्यत्वम् ।

९४ अमीषां—विकल्पोल्लिखितानाम् ।

९५ प्रथ इति पञ्चमी संपदादित्वात् भावे क्विप् इत्येके ।

प्रमात्रैकात्म्यमान्तर्यं
ततो भेदो हि बाह्यता ॥८॥

विमर्शविशेषरूपे[96] विकल्पज्ञाने[97] य उल्लिख्यमानः कान्ताचौरादिः अर्थः[98] सोपि बाह्यः, न केवलं बहिरवलोक्यमानः[99], यस्मात् सोऽपि प्रमातुः सकाशात् पृथगेव प्रथते 'अयमिति' यच्च प्रमातरि अहमित्येव विश्रान्तत्वं, तत् आन्तरत्वम्[100], अन्तरिति निकटम्, तच्च किंचित् अपेक्ष्य, अपेक्षणीयश्च सर्वत्र प्रमातैव अपेक्षणीयान्तराभावे, ततश्च प्रमातरि निकटं तादात्म्यं प्राप्तमेव इति, ततो[101] यत् भिन्नं तत् बाह्यमेव इति युक्ता—उल्लेखस्यापि[102] अर्थक्रिया ॥ ८ ॥

---

९६ स्थूले ।

९७ विकल्पज्ञान इति, विकल्पो द्विधा—स्वतन्त्रोऽनुभवोपजीवी च तत्र द्वयमपीह निर्दिष्टं बोध्यम्, उल्लिख्यमानः—उत्प्रेक्षया लिख्यमानः ।

९८ अर्थः—आकारः ।

९९ बाह्यः इत्यर्थः ।

१०० ततश्चान्तरत्वनामश्रवणादेव न तत्र भवता भ्रमितव्यमित्याशयेनाह तदान्तरत्वमिति । आन्तरत्वात्प्रमात्रैक्ये इत्यत्र ।

१०१ तत इति प्रमात्रैक्यात् स्थितादपि अनन्तरं यो भेदः, अथवा तत इति प्रमातुरेव सोऽवभासमानो भेद उच्यते, ततश्च बाह्यतेत्यर्थः ।

१०२ उल्लेखस्य—उल्लिख्यमानस्य आन्तरत्वेन संभावितस्य ।

ननु कुम्भकारादिव्यापारेण घटादेः अस्तु बाह्यत्वम्, अन्तःकरणगोचरस्य[103] तु किं कृतं[104] तत्? इत्याशङ्क्य आह

उल्लेखस्य सुखादेश्च
प्रकाशो बहिरात्मना।
इच्छातो[105] भर्तुरध्यक्ष-
रूपोऽक्षादिभुवां[106] यथा ॥९॥

अन्तर्विकल्पप्रतिबिम्बितस्य[107] नीलादेः यो बहिरात्मना प्रमातृविच्छिन्नेन स्वभावेन प्रकाशः, स भर्तुः[108] अन्तराभासान् बिभ्रतो बहिः सृष्टिं च पुष्णतः ईश्वरस्यैव इच्छया, यथैव चक्षुरादिविषयभूतानां प्रत्यक्षज्ञानशब्दवाच्यो बाह्यात्मना प्रकाशो नीलादीनाम्। एतदुक्तं भवति—कुम्भकारव्यापारो नाम परमार्थतः

---

१०३ अन्तःकरणगोचरस्य—नीलादेः सुखादेश्च।

१०४ केन कृतं भवद्भिर्बाह्यत्वम्।

१०५ इच्छात इति तसिलः सार्वविभक्तिकत्वात् तृतीयार्थे तसिः, इच्छयेत्यर्थः।

१०६ अक्षादिभुवां—विषयाणाम् यथा—प्रकाश इति शेषः।

१०७ बुद्धिभूमौ।

१०८ भर्तुः—ईश्वरस्य, डुभृञ् धारणपोषणयोरिति धातुनिष्पत्तेः,

ईश्वरेच्छैव तदवभासितकायस्पन्दपर्यन्ता,[109] न[110] पुनरन्यः कश्चन सः, ततश्च यथा ईश्वरेच्छया प्रकाशात् अबहिर्भूता अपि नीलाद्या बाह्यकरणगोचरीभूताः कल्पितात्[111] प्रमातुः विच्छिन्नरूपेण बाह्यत्वेन भासन्ते, तथा अन्तःकरणगोचरीभूता अपि—इति को विशेषः। सुखदुःखप्रायास्तु भरताद्युक्तरूपाः स्थायिव्यभिचारिरूपा[112] रतिनिर्वेदादयोऽन्तःकरणैकगोचरा बहिरात्मना भान्ति, संकल्पेषु यद्यपि क्षेत्रज्ञस्यैव स्वातन्त्र्यम् तथापि चित्परमार्थताया न्यग्भावयितुम् अशक्यत्वात् ईश्वरस्यैव तत् वस्तुतः, यथोक्तं ग्रन्थकृतैव

---

१०९ तदिच्छावभासितविशिष्टबुद्धिप्राणकायस्पन्दादिप्रमुखमृत्पिण्डदण्डचक्राद्याभासरूपेत्यर्थः ।

११० वक्ष्यते चैतत् 'तथाहि कुम्भकारोऽसौ' इत्यत्र । सः—कुम्भकृत् ।

१११ कल्पितात् प्रमातुः—मायीयात् ।

११२ तथा चोक्तम्

'रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥'

इति ।

'यद्यप्यर्थस्थितिः प्राणपुर्यष्टकनियन्त्रिते ।
जीवे निरुद्धा तत्रापि परमात्मनि सा स्थिता ॥
तदात्मनैव[113] तस्य स्यात्कथं प्राणेन यन्त्रणा ।'

इति । यत्र तु अनिच्छोरेव[114] क्षेत्रज्ञस्य स्वरसवाहिव्याक्षेपसारा सांकल्पिकी सृष्टिः तत्र स्फुटः ईश्वरस्यैव व्यापारः, तस्मात् सांकल्पिकानामपि बहिर्भावे[115] परमेश्वरेच्छैव हेतुः—इति सिद्धान्तः ॥ ९ ॥

अधुना पूर्वोक्तम्[116] ऐक्यं माहेश्वर्यं[117] च निर्गमयति[118]

तदैक्येन विना न स्या-
त्संविदां लोकपद्धतिः ।
प्रकाशैक्यात्तदेकत्वं
मातैकः स[119] इति स्थितम् १०

---

११३ तदात्मनैव—परमात्मस्वरूपेण ।
११४ अनिच्छोः—स्थूलेच्छारहितस्य ।
११५ बहिर्भावे—प्रमातुः सकाशात् विच्छेदेनावभासे ।
११६ एको महेश्वर इति च एकेन श्लोकेन ।
११७ द्वितीयश्लोकेन ।
११८ निगमयति—उपसंहरति ।
११९ स इति प्रकाशः ।

स एव विमृशत्त्वेन
नियतेन महेश्वरः।
विमर्श एव देवस्य
शुद्धे ज्ञानक्रिये यतः॥ ११॥

यत् एतत् पूर्वोक्तेन ग्रन्थेन उपपादितम्[120], तत् इति–तस्मात् हेतोः, संविदां–ज्ञानानाम् ऐक्येन विना, लोकपद्धतिः लोकमार्गः–सर्वो व्यवहारो न संभवेत्, संभवति च अयम्[121], तस्मात् ऐक्यम् आसाम्[122]। न चैतत्[123] दुर्घटम् यतो–विषयप्रकाश एव संवित् उच्यते, केवलं विषयोपरागमहिम्ना बहिर्मुखतया नीलप्रकाशोऽन्यः, पीतप्रकाशश्चान्यः, परमार्थतस्तु प्रकाशस्य देशकालाकारसंकोचवैकल्यात् एकत्वमेव इति एक एव प्रकाशोऽन्तर्विश्रान्तः[124],

१२० उपपादितं–युक्त्या साधितम्।
१२१ अयम्–लोकव्यवहारः।
१२२ आसाम्–संविदाम्।
१२३ एतत्–ऐक्यम्।
१२४ अहमिति।

स[125] एव च प्रमाता उच्यते इति स्थितम्[126] इदानीम् उपपत्तितः, न[127] च अस्य असौ प्रकाशलक्षणः स्वात्मा नीलाद्युपरागश्च परामर्शनशून्य एव आस्ते—स्फटिकमणेरिव[128], अपि तु सदैव विमृश्यमानरूपः, इति विमृशद्रूपत्वम्—अनवच्छिन्नविमर्शता अनन्योन्मुखत्वम् आनन्दैकघनत्वमेव अस्य माहेश्वर्यम्, स एव हि अहंभावात्मा विमर्शो, देवस्य—क्रीडादिमयस्य, शुद्धे—पारमार्थिक्यौ ज्ञानक्रिये, प्रकाशरूपता ज्ञानं, तत्रैव स्वातन्त्र्यात्मा विमर्शः क्रिया, विमर्शश्च अन्तःकृतप्रकाशः इति विमर्श एव परावस्थायां[129] ज्ञानक्रिये, परापरावस्थायां तु भगवत्सदाशिवभुवि इदन्तासामानाधिकरण्यापन्नाहंताविमर्शस्वभावे[130], अपरावस्थायां च मायापदे

१२५ स—प्रकाशः।

१२६ स्थितम्—निष्कम्पं जातम्।

१२७ न चेति द्वितीयश्लोकव्याख्या। अस्य—प्रमातुः।

१२८ वैधर्म्येण दृष्टान्तोऽयम्।

१२९ परावस्थायां—परमशिवावस्थायाम्।

१३० ज्ञानक्रिये।

इदंभावप्राधान्येन वर्तमाने इति विशेषः। सर्वथा तु विमर्श एव ज्ञानं, तेन[131] विना हि जडभावोऽस्य[132] स्यात् इति उक्तम् 'स एव च क्रिया' इति — भाविनः क्रियाधिकारस्य उपक्षेपं करोति इति शिवम् ॥ १० ॥ ११ ॥

आदितः ॥ ८९ ॥

इति श्रीमन्माहेश्वराचार्यवर्योत्पलदेवपादविरचितायामीश्वरप्रत्यभिज्ञायां, श्रीमदाचार्याभिनवगुप्तकृतविमर्शिन्याख्यव्याख्योपेतायां माहेश्वर्य[133]निरूपणाख्यमष्टममाह्निकम् ॥ ८ ॥

प्रथमो ज्ञानाधिकारश्च समाप्तः ॥

सोऽयं कश्मीरभूपालसंश्रितेन प्रकाशितः ।
सता मुकुन्दरामेण सन्मुदे श्राश्विवेऽर्पितः ॥



१३१ तेन—विमर्शेन ।

१३२ अस्य—प्रकाशस्य ।

१३३ शक्तिवर्गैकाश्रयकं च तन्माहेश्वर्यम् ।